श्रीगणेशायनमः ॥ ॥ हरिः ॐ ॥ ब्रह्मसंधत्तंतन्मेजिन्वतं ॥ क्षत्रꣳ संधत्तंतन्मेजिन्वतं ॥ इषꣳ सं
धत्तंतांमेजिन्वतं ॥ ऊर्जꣳ संधत्तंतांमेजिन्वतं ॥ रयिꣳ संधत्तंतांमेजिन्वतं ॥ पुष्टिꣳ संधत्तंतांमेजिन्व
तं ॥ प्रजाꣳ सधत्तंतांमेजिन्वतं ॥ पशून्त्संधत्तंतान्मेजिन्वतं ॥ स्तुतोसिजनधाः ॥ देवास्त्वांशुक्रपाः
प्रणयंतु ॥ १ ॥ सुवीराःप्रजाःप्रंजनयन्परीहि ॥ शुक्रःशुक्रशोचिषा ॥ स्तुतोसिजनधाः ॥ देवा
स्त्वांमंथिपाःप्रणयंतु ॥ सुप्रजाःप्रजाःप्रंजनयन्परीहि ॥ मंथीमंथिशोचिषा ॥ संजग्मानौदिवआपृथि
व्यायुः ॥ संधत्तंतन्मेजिन्वतं ॥ प्राणꣳ सधत्तंतंमेजिन्वतं ॥ अपानꣳ संधत्तंतंमेजिन्वतं ॥ २ ॥ व्या
नꣳ संधत्तंतंमेजिन्वतं ॥ चक्षुःसंधत्तंतन्मेजिन्वतं ॥ श्रोत्रꣳ संधत्तंतन्मेजिन्वतं ॥ मनःसंधत्तंतन्मेजिन्व
तं ॥ वाचꣳ संधत्तंतांमेजिन्वतं ॥ आयुस्थआयुर्मेधत्तं ॥ आयुर्यज्ञायधत्तं ॥ आयुर्यज्ञपतयेधत्तं ॥ प्राण
स्थःप्राणंमेधत्तं ॥ प्राणंयज्ञायधत्तं ॥ ३ ॥ प्राणंयज्ञपतयेधत्तं ॥ चक्षुस्थःचक्षुर्मेधत्तं ॥ चक्षुर्यज्ञायध
त्तं ॥ चक्षुर्यज्ञपतयेधत्तं ॥ श्रोत्रꣳ स्थःश्रोत्रंमेधत्तं ॥ श्रोत्रंयज्ञायधत्तं ॥ श्रोत्रंयज्ञपतयेधत्तं ॥ तौदेवौ
शुक्रामंथिनौ ॥ कल्पयतंदैवीर्विशः ॥ कल्पयतंमानुषीः ॥ ४ ॥ इषमूर्जमस्मासुधत्तं ॥ प्राणान्पशु
षु ॥ प्रजांमयिचयजमानेच ॥ निरस्तःशंडः ॥ निरस्तोमर्कः ॥ अपनुत्तौशंडामर्कौसहामुना ॥ शुक्र

स्यसमिदसि ॥ मंथिनःसमिदसि ॥ सप्रथमःसंकृतिर्विश्वकर्मा ॥ सप्रथमोमित्रोवरुणोअग्निः ॥ सप्र
थमोबृहस्पतिश्चिकित्वान् ॥ तस्माइंद्रायसुतमाजुहोमि ॥ ५ ॥ नयंत्त्वपान॒संवत्तंतंमेजिन्वतंप्राणं
यज्ञायधत्तंमानुषीरग्निर्द्वेचं ॥ १ ॥ कृत्तिकास्वग्निमादधीत ।। एतद्वाअग्नेर्नक्षत्रं ।। यत्कृत्तिकाः ।। स्वा
यामेवैनंदेवतायामाधाय ।। ब्रह्मवर्चसीभवति ॥ मुखंवाएतन्नक्षत्राणां ॥ यत्कृत्तिकाः ॥ यःकृत्तिकास्व
ग्निमाधत्ते ।। मुख्यएवभवति ॥ अथोखलु ॥ १ ॥ अग्निनक्षत्रमित्यपचायंति ।। गृहान्हदाहुकोभव
ति ॥ प्रजापतीरोहिण्यामग्निमसृजत ॥ तंदेवारोहिण्यामादधत ॥ ततोवैतेसर्वान्रोहानरोहन् ॥ तद्रो
हिण्यैरोहिणित्वं ॥ योरोहिण्यामग्निमाधत्ते ॥ ऋध्नोत्येव ॥ सर्वान्रोहान्रोहति ॥ देवावैभद्राःसंतोग्निमा
धित्संत ॥ २ ॥ तेषामनाहितोग्निरासीत् ॥ अथैभ्योवामंवस्वपाक्रामत् ॥ तेपुनर्वस्वोरादधत ॥ ततो
वैतान्वामंवसूपावर्त्तत ॥ यःपुराभद्रःसन्पापीयान्त्स्यात् ॥ सपुनर्वस्वोरग्निमादधीत ॥ पुनरेवैनंवामंव
सूपावर्त्तते ॥ भद्रोभवति ॥ यःकामयेतदानकामामेप्रजास्युरिति ॥ सपूर्वयोःफल्गुन्योरग्निमादधीत ॥
॥ ३ ॥ अर्यम्णोवाएतन्नक्षत्रं ॥ यत्पूर्वेफल्गुनी ॥ अर्यमेतितमाहुर्योददाति ॥ दानकामाअस्मैप्र
जाभवंति ॥ यःकामयेतभगीस्यामिति ॥ सउत्तरयोःफल्गुन्योरग्निमादधीत ॥ भगस्य

वाएतन्नक्षत्रं ॥ यदुत्तरेफल्गुनी ॥ भग्येवभवति ॥ कालकंजावैनामासुराआसन् ॥ ४ ॥
तेसुवर्गायंलोकायाग्निमंचिन्वत ॥ पुरुषइष्टकामुपादधात्पुरुषइष्टकां ॥ सइंद्रोब्राह्मणोब्रुवाणइष्टकामु
पाधत ॥ एषामेंचित्रानामेति ॥ तेसुवर्गंलोकमाप्रारोहन् ॥ सइंद्रइष्टकामावृहत् ।। तेवाकीर्यंत ॥ ये
वाकीर्यत ।। तऊर्णाविभयोभवन् ॥ द्वावुदपततां ॥ ५ ॥ तौदिव्यौश्वानावभवतां ॥ योभ्रातृव्यवा
न्त्स्यात् ॥ सचित्रायामग्निमादधीत ॥ अवकीर्यैवभ्रातृव्यान् ॥ ओजोबलमिंद्रियंवीर्यमात्मंधत्ते ॥ वसं
तांब्राह्मणोग्निमादधीत ॥ वसंतोवैब्राह्मणस्यर्त्तुः ॥ स्वएवैनमृतावाधाय ॥ ब्रह्मवर्चसीभवति ॥ मुखं
वाएतदृतूनां ॥ ६ ॥ यद्वसंतः ॥ योवसंताग्निमाधत्ते ॥ मुख्यएवभवति ॥ अथोयोनिमंतमेवैनंप्रजात
माधत्ते ॥ ग्रीष्मेराजन्यआदधीत ॥ ग्रीष्मोवैराजन्यस्यर्त्तुः ॥ स्वएवैनमृतावाधाय ॥ इंद्रियावीभवति ॥
शरदिवैश्यआदधीत ।। शरद्वैवैश्यस्यर्त्तुः ॥ ७ ॥ स्वएवैनमृतावाधाय ॥ पशुमान्भवति ।। नपूर्वयोः
फल्गुन्योरग्निमादधीत ।। एषावैजघन्यारात्रिःसंवत्सरस्य ॥ यत्पूर्वेफल्गुनी ॥ पृष्ठितएवसंवत्सरस्याग्नि
माधाय ॥ पापीयान्भवति ॥ उत्तरयोरादधीत ॥ एषावैप्रथमारात्रिःसंवत्सरस्य ।। यदुत्तरेफल्गुनी ॥
मुखतएवसंवत्सरस्याग्निमाधाय ।। वसीयान्भवति ॥ अथोखलु ॥ यदैवैनंयज्ञउपनमेत् ।। अथाद
धीत ॥ सवास्यर्द्धिः॥ ८ ॥खल्वंधिरसंतफल्गुन्योरग्निमादधीतासंनपतता मृतूनांवैश्यंस्यर्त्तुरुत्तरेफल्गुनोषट्चं

जत ॥ सोबिभेत्प्रमांधक्ष्यतीतिं॥ तꣳशम्यांशमयत्॥ १ १ ॥तच्छम्यैशामित्वं॥ यच्छमीमयःसंभारोभवंति॥ शांत्याअप्रदाहाय ॥ अग्नेःसृष्टस्ययतः॥ विकंकतंभाआर्छत्॥ यद्वैकंकतःसंभारोभवंति ॥ भाएवावरुंधे ॥ सहृदयोग्निराधेयइत्याहुः ॥ मरुतोद्गिराग्निमंतमयन् ॥ तस्यंतांतस्यहृदयमाछिंदन् ॥ साशनिरभवत् ॥ यदशनिंहतस्यवृक्षस्यसंभारोभवंति ॥ सहृदयमेवाग्निमाधत्ते ॥ १ २ ॥ उंर्षाअभवन्नभवद्गल्मीकोश्राम्यद प्रथयद्भूत्यैबीभत्सतइत्याहूरुंधेपर्णत्वमंशमयदछिंद ९ स्त्रीणिंच ॥ ३ ॥ द्वादशसुविक्रामेष्वग्निमादधीत ॥ द्वादशमासाःसंवत्सरः ॥ संवत्सरादेवैनमवरुध्याधत्ते॥ यद्वादशसुविक्रामेष्वादधीत ॥ परिमितमवरुंधीत ॥ चक्षुर्निमित्तआदधीत ॥ इयद्वादशविक्रामा ३ इतिं ॥ परिमितंचैवापरिमितंचावरुंधे ॥ अनृतंवै वाचावदति ॥ अनृतंमनसाध्यायति ॥ १ ॥ चक्षुर्वैसत्यं ॥ अद्रा३ गित्याह ॥ अदर्शमितिं ॥ तत्सत्यं ॥ यश्चक्षुर्निमित्तेग्निमाधत्ते ॥ सत्यएवैनमाधत्ते ॥ तस्मादाहिताग्निर्नानृतंवदेत् ॥ नास्यब्राह्मणो नाश्वान्गृहेवसेत् ॥ सत्येह्यस्याग्निराहितः ॥ आग्नेयीवैरात्रिः ॥ २ ॥ आग्नेयाःपशवः ॥ ऐंद्रमहः ॥ नक्तंगार्हपत्यमादधाति ॥ पशूनेवावरुंधे ॥ दिवाहवनीयं ॥ इंद्रियमेवावरुंधे ॥ अर्धोदितेसूर्यआहवनी यमादधाति ॥ एतस्मिन्वैलोकेप्रजापतिःप्रजाअसृजत ॥ प्रजाएवतद्यजमानःसजते ॥ अथोभूतंचैव भविष्यच्चावरुंधे ॥ ३ ॥ इडावैमानवीयज्ञानूकाशिन्यासीत् ॥ साशृणोत् ॥ असुराअग्निमादधतइतिं

तदंगच्छत् ॥ तआंहवनीयमग्रआदंधत ।। अथगार्हंपत्यं ॥ अथांन्वाहार्यपचंनं ।। साब्रंवीत् ॥ प्रती
च्येंषा२श्रीरंगात् ॥ भद्राभूत्वापरांभविष्यंतीतिं ।। ४ ।। यस्यैवमग्निरांधीयतें ।। प्रतीच्यंस्यश्रीरोंते ।।
भद्रोभूत्वापरांभवति ॥ साशृंणोत् ।। देवाअग्निमादंधनइतिं ।। तदंगच्छत् ॥ तेंन्वाहार्यपचंनमग्रआदं
धत ॥ अथगार्हंपत्यं ॥ अथांहवनीयं ॥ साब्रंवीत् ।। ५ ॥ प्राच्येंषा२श्रीरंगात् ॥ भद्राभूत्वासुंवर्गं
लोकमेंष्यंति ।। प्रजांतुनवेंत्स्यंतइतिं ॥ यस्यैवमग्निरांधीयतें ॥ प्राच्यंस्यश्रीरोंते ॥ भद्रोभूत्वासुंवर्गंलो
कमेंति ॥ प्रजांतुनविंदते ॥ साब्रंवीदिडामनुं ॥ तथावाअहंतवाग्निमाधांस्यामि ॥ यथाप्रप्रजयांपशु
भिर्मिथुनैर्जनिष्यसें॥६॥प्रत्यस्मिन्लोकेस्थास्यसि ॥ अभिसुंवर्गंलोकंजेष्यसीतिं॥ गार्हंपत्यमग्रआदंधात्
गार्हंपत्यंवाअनुंप्रजाःपशवःप्रजांयंते ॥ गार्हंपत्येनैवास्मैंप्रजांपशून्प्राजंनयत् ॥ अथांन्वाहार्यपचंनं ॥
तिर्यङ्ङिंववाअयंलोकः ।। अस्मिन्नेवतेनंलोकेप्रत्यंतिष्ठत् अथांहवनीयं ॥ तेनैवसुंवर्गंलोकमभ्यंजयत्
।।७।।यस्यैवमग्निरांधीयतें॥प्रप्रजयांपशुभिर्मिथुनैर्जांयते ॥ प्रत्यस्मिन्लोकेतिंष्ठति ॥ अभिसुंवर्गंलोकंजं
यति ॥ यस्यवाअयंथादेवतमग्निरांधीयतें ॥ आदेवतांभ्योवृश्च्यते॥पापीयान्भवतिं॥ यस्यंयथादेवतं ॥ न
देवतांभ्यआवृंश्च्यते॥वसीयान्भवति ।।८।।भृगूणांत्वांगिरसांव्रतपतेव्रतेनादंधामीतिंभृग्वंगिरसामादंध्यात्

आदित्यानांत्वादेवानांव्रतपतेव्रतेनादंधामीत्यन्यासांब्राह्मणीनांप्रजानां ॥ वरुंणस्यत्वाराज्ञोंव्रतपतेव्रतेना
दंधामीतिराज्ञः॥इंद्रस्यत्वेंद्रियेणंव्रतपतेव्रतेनादंधामीतिंराजन्यस्य ॥ मनोंस्त्वाग्रामण्योंव्रतपतेव्रतेनादंधामी
तिवैश्यस्य॥ऋभूणांत्वांदेवानांव्रतपतेव्रतेनादंधामीतिंरथकारस्यं ॥ यथादेवतमग्निराधीयते ॥ नदेवतां
भ्यआवृंश्च्यते ॥ वसीयान्भवति ३ ध्यायतिरात्रिश्चावरुंधेभविष्यंतीत्यंब्रवीज्जानिष्यसेंजयद्वसीयान्भवति
नवंच ४ प्रजापंतिर्वाचःसत्यमंपश्यत् ॥ तेनाग्निमाधंत्त ॥ तेनवैसआंर्ध्नोत् ॥ भूर्भुवःसुवारित्यांह ॥
एतद्वैवाचःसत्यं ॥ यएतेनाग्निमांधत्ते ॥ ऋध्नोत्येव ॥ अथोसत्यप्राशूरेव भवति ॥ अथोयएवंविद्वानंभि
चरंति ॥ स्तृणुतएवैनं ॥ १ ॥ भूरित्यांह ॥ प्रजाएवतद्यजंमानःसृजते ॥ भुवइत्यांह ॥ अस्मिन्नेव
लोकेप्रतिंतिष्ठति ॥ सुवरित्यांह ॥ सुवर्गएवलोकेप्रतिंतिष्ठति ॥ त्रिभिरक्षरैर्गार्हंपत्यमादंधाति ॥ त्रयं
इमेल्लोकाः ॥ एष्वेवैनंल्लोकेषुप्रतिंष्ठितमाधंत्ते ॥ सर्वैःपंचभिंराहवनीयं ॥ २ ॥ सुवर्गायवाएषल्लोका
याधीयते ॥ यदांहवनीयः ॥ सुवर्गएवास्मैंल्लोकेवाचःसत्यꣳसर्वमाप्नोति ॥ त्रिभिर्गार्हंपत्यमादंधाति ॥
पंचभिंराहवनीयं ॥ अष्टौसंपंद्यंते ॥ अष्टाक्षंरागायत्री ॥ गायत्रोंग्निः ॥ यावांनेवाग्निः ॥ तमाधंत्ते॥३॥
प्रजापंतिःप्रजाअंसृजत ॥ ताअंस्मात्सृष्टाः परांचीरायन् ॥ ताभ्योज्योतिरुदंगृह्णात् ॥ तंज्योतिःपश्यं

तीःप्रजाअभिसमावर्तंत ॥ उपरींवाग्निमुद्धृंह्णीयादुद्धरन् ॥ ज्योतिरेवपश्यंतीःप्रजायजमानमभिसमावर्तं
ते ॥ प्रजापतेरक्ष्यंश्वयत् ॥ तत्परापतत् ॥ तदश्वोंभवत् ॥ यदश्वस्याश्वत्वं॥४॥ एत्वैप्रजापतिः॥ य
दग्निः ॥ प्राजापत्योश्वः ॥ यदश्वंपुरस्तान्नयंति ॥ स्वमेवचक्षुःपश्यंन्प्रजापतिरनूदेति ॥ वज्रोवाएषः ॥
यदश्वः ॥ यदश्वपुरस्तान्नयंति ॥ जातानेवभ्रातृव्यान्प्रणुदते ॥ पुनरावर्त्तयति ॥५॥ जनिष्य
माणानेवप्रतिनुदते ॥ न्योहवनीयोगार्हपत्यमकामयत ॥ निगार्हपत्यआहवनीयं ॥ तौविभा
जन्नाशंक्नोत् ॥ सोश्वःपूर्ववाङ्भूत्वा ॥ प्रांचंपूर्वमुदवहत् ॥ तत्पूर्ववाहःपूर्ववाट्त्वं ॥ यद
श्वंपुरस्तान्नयंति ॥ विभक्तिरेवैनंयोःसा ॥ अथोनानावीर्यावेवैनौकुरुते ॥ ६ ॥ यदुपर्युपरि
शिरोहरेत् ॥ प्राणान्विछिंद्यात् ॥ अधोध शिरोहरति ॥ प्राणानांगोपीथाय ॥ इयत्यग्रेहर
ति ॥ अथेयत्यथेयंति ॥ त्रयंइमेलोकाः ॥ एष्वेवैनंलोकेषुप्रतिष्ठितमाधंत्ते ॥ प्रजापतिरग्निमंसृजत ॥
सोबिभेत्प्रमांधक्ष्यतीति ॥७॥ तस्यंत्रेधामहिमानंव्यौहत् ॥ शांत्याअप्रदाहाय ॥ यत्रेधाग्निराधीयते ॥ म
हिमानमेवास्यतव्द्यूहति ॥ शांत्याअप्रदाहाय ॥ पुनरावर्त्तयति ॥ महिमानमेवास्यसंदधाति ॥ पशु
र्वाएषः ॥ यदश्वः ॥ एषरुद्रः ॥८॥ यदग्निः ॥ यदश्वस्यपदेग्निमादध्यात्॥ रुद्रायपशूनपिंदध्यात् ॥

अपशुर्यजमानःस्यात् ॥ यन्नाक्रमयेत् ॥ अनवरुद्धाअस्यपशवःस्युः ॥ पार्श्वतआक्रमयेत् ॥ यथाहि तस्याग्नेरंगाराअभ्यववर्तेरन् ॥ अवरुद्धाअस्यपशवोभवंति ॥ नरुद्रायापिदधाति॥९॥त्रीणिहवींषिनिर्वपति ॥ विराजएवविक्रांतंयजमानोनुविक्रमते ॥ अग्नयेपवमानाय ॥ अग्नयेपावकाय ॥ अग्नयेशुचये ॥ यदग्नयेपवमानायनिर्वपति ॥ पुनात्येवैनं॥ यदग्नयेपावकाय॥ पूतएवास्मिन्नन्नाद्यंदधाति ॥ यदग्नयेशुचये ॥ ब्रह्मवर्चसमेवास्मिन्नुपरिष्टाद्दधाति॥१०॥एनमाहवनीयंधत्तेश्वत्थंवर्त्तयतिकुरुतइतिरुद्रोदधाति यदग्नयेशुचयएकंच ५ देवासुराःसंयत्ताआसन् ॥ तेदेवाविजयमुपयंतः ॥ अग्नौवामंवसुसन्यदधत ॥ इदमुनोभविष्यति ॥ यदिनोजेष्यंतीति ॥ तदग्निर्नोत्सहमशक्नोत् ॥ तत्रेधाविन्यदधात् ॥ पशुषुतृतीयं ॥ अप्सुतृतीयं ॥ आदित्येतृतीयं १ तद्देवाविजित्य ॥ पुनरवारुरुत्संत ॥ तेग्नयेपवमानायपुरोडाशमष्टाकपालंनिरवपन् ॥ पशवोवाअग्निःपवमानः ॥ यदेवपशुष्वासीत् ॥ तत्तेनावारुंधत ॥ तेग्नयेपावकाय ॥ आपोवाअग्निःपावकः ॥ यदेवाप्स्वासीत्॥ तत्तेनावारुंधत् २ तेग्नयेशुचये ॥ असौवाआदित्योग्निःशुचिः ॥ यदेवादित्यआसीत् ॥ तत्तेनावारुंधत ॥ ब्रह्मवादिनोवदंति ॥ तनुवोत्रावैताअग्न्याधेयस्य ॥ आग्नेयोवाअष्टाकपालोग्न्याधेयमिति ॥ यत्तंनिर्वपेत् ॥ नैतानि ॥ यथाल्पास्या [illegible] ॥३॥ नां

गांति ॥ तादृगेवतत् ॥ यदेतानिनिर्वपेत् ॥ नतं ॥ यथागानिस्युः ॥ नात्मा ॥ तादृगेवतत् ॥ उभयानि
सहातिरूप्याणि ॥ यज्ञस्यंसात्मत्वाय ॥ उभयवाएतस्यैंद्रियंवीर्यमाप्यते ४ योग्निमाधत्ते ॥ ऐंद्राग्न
मेकादशकपालमनुनिर्वपेत् ॥ आदित्यंचरुं ॥ इंद्राग्नीवैदेवानामयातयामानौ ॥ येएवदेवतेआ
यातयाम्नी ॥ ताभ्यामेवास्माइंद्रियंवीर्यमवरुंधे ॥ आदित्योभवति ॥ इयंवाअदितिः ॥ अस्यामेवप्राति
तिष्ठति ॥ धेन्वैवाएतद्रेतः ५ यदाज्यं ॥ अनडुहस्तंडुलाः ॥ मिथुनमेवावरुंधे ॥ घृतेभवति ॥ यज्ञ
स्यालूक्षांतत्वाय ॥ चत्वारआर्षेयाःप्राश्नंति ॥ दिशामेवज्योतींषिजुहोति ॥ पशवोवाएतानिहवीँषि
एषरुद्रः ॥ यदग्निः ६ यत्सद्यएतानिहवीँषिनिर्वपेत् ॥ रुद्रायपशूनपिदध्यात् ॥ अपशुर्यजमानःस्या
त् ॥ यन्नानुनिर्वपेत् ॥ अनवरुद्धाअस्यपशवस्युः ॥ द्वादशसुरात्रीःष्वनुनिर्वपेत् ॥ संवत्सरप्रतिमावैद्वा
दशरात्रयः ॥ संवत्सरेणैवास्मैरुद्रँशमयित्वा ॥ पशूनवरुंधे ॥ यदेकमेकमेतानिहवीँषिनिर्वपेत् ७ य
थात्रीण्यावपनानिपूरयेत् ॥ तादृक्तत् ॥ नप्रजननमुच्छिँषेत् ॥ एकंनिरुप्य ॥ उत्तरेसमस्येत् ॥ तृ
तीयंसेवास्मैलोकमुच्छिँषतिप्रजननाय ॥ तंप्रजयापशुभिरनुप्रजायते ॥ अथोयज्ञस्यैवैषाभिक्रांतिः ॥
रथचक्रंप्रवर्तयति ॥ मनुष्यरथेनैवदेवरथंप्रत्यवरोहति ८ ब्रह्मवादिनोवदंति ॥ होतव्यमग्निहो

कृ०य० ॥ ६ ॥

न्नां ३ महोतव्या३मिति ॥ यद्यजुंषाजुहुयात् ॥ अयथापूर्वमाहुतीजुहुयात् ॥ यंनजुहुयात् ॥ अग्निःप
राभवेत् ॥ तूष्णीमेवहोतव्यं ॥ यथापूर्वमाहुतीजुहोति ॥ नाग्निःपराभवति ॥ अग्नीधेददाति ९ अग्नि
मुखानेवर्तून्प्रीणाति ॥ उपबर्हणंददाति ॥ रूपाणामवरुध्यै ॥ अश्वंब्रह्मणे ॥ इंद्रियमेवावरुंधे ॥ धे
नुं होत्रे ॥ आशिषएवावरुंधे ॥ अनड्वाहमध्वर्यवे ॥ वन्हिर्वाअनड्वान् ॥ वह्निरध्वर्युः १० वह्निनैव
वह्निंयज्ञस्यावरुंधे ॥ मिथुनौगावौददाति ॥ मिथुनस्यावरुध्यै ॥ वासोददाति ॥ सर्वदेवत्यंवैवासः ॥
सर्वाएवदेवताःप्रीणाति ॥ अद्वादशभ्योददाति ॥ द्वादशमासाःसंवत्सरः ॥ संवत्सरएवप्रतितिष्ठति ॥
काममूर्ध्वंदेयं ॥ अपरिमितस्यावरुध्यै ११ आदित्येतृतीयमप्स्वासोतत्तेनावारुंधतस्यादाप्यतेरेतोग्निरेकं
मेकमेतानिहवीं षिनिर्वपेत्प्रत्यवरोहातिददात्यध्वर्युर्देयमेकंच ६ घर्मःशिरस्तदयमग्निः ॥ संप्रियःपशुभि
र्भुवत् ॥ छर्दिस्तोकायतनंयायच्छ ॥ वातःप्राणस्तदयमग्निः ॥ संप्रियःपशुभिर्भुवत् ॥ स्वदितंतोकायत
नंयायपितुंपच ॥ प्राचीमनुप्रदिशंप्रेहिविद्वान् ॥ अग्नेरग्नेपुरोअग्निर्भवेह ॥ विश्वाआशादीद्यानोविभा
हि ॥ ऊर्जंनोधेहिद्विपदेचतुष्पदे॥ १ ॥अर्कश्चक्षुस्तदसौसूर्यस्तदयमग्निः ॥ संप्रियःपशुभिर्भुवत् ॥ यत्तेशु
क्रशुक्रंवर्चःशुक्रातनूः ॥ शुक्रंज्योतिरजस्रं ॥ तेनमेदीदिहितेनत्वादधे ॥ अग्निनाग्नेब्रह्मणा ॥ आनशेव्यां

तै०ब्रा० ॥ ६ ॥

नशेसर्वमायुर्व्यानशे ॥ येतेंअग्नेशिवेतनुवौं ॥ विराट्चंस्वराट्चं ॥ तेमाविंशतांतेमांजिन्वतां ॥२ ॥ येतें
अग्नेशिवेतनुवौं ॥ संम्राट्चांभिभूश्चं ॥ तेमाविंशतांतेमांजिन्वतां ॥ येतेंअग्नेशिवेतनुवौं ॥ विभूश्चंप
रिभूश्चं ॥ तेमाविंशतांतेमांजिन्वतां ॥ येतेंअग्नेशिवेतनुवौं ॥ प्रभ्वीचप्रभूंतिश्च ॥ तेमाविंशतांतेमांजि
न्वतां ॥ यास्तेंअग्नेशिवास्तनुवंः ॥ ताभिस्त्वादंधे ॥ यास्तेंअग्नेघोरास्तनुवंः ॥ ताभिंरमुंगच्छ॥३ ॥चतुंष्प
देंजिन्वतांतनुवस्त्रोंणिंच॥७॥इमेवाएतेलोकाअग्नयंः ॥ तेयदव्यांवृत्ताआधीयेरन् ॥ शोचयेंयुर्यजंमानं॥
घर्मःशिरइतिगार्हंपत्यमादंधाति ॥ वातंःप्राणइत्यंन्वाहार्यपचंनं ॥ अर्कश्चक्षुरित्यांहवनीयं ॥ तेनैवैना
न्व्यावर्त्तंयति ॥ तथानशोंचयंतियजंमानं ॥ रथंतरमभिगांयतेगार्हंपत्यआधीयमांने ॥ राथंतरोवाअयं
लोकः॥ १ ॥अस्मिन्नेवैनंल्लोकेप्रतिंष्ठितमाधंत्ते ॥ वामदेव्यमभिगांयतउद्ध्रियमांणे ॥ अंतरिंक्षंवैवांमदेव्यं ॥
अंतरिंक्षएवैनंप्रतिंष्ठितमाधंत्ते ॥ अथोशांतिर्वैवांमदेव्यं ॥ शांतमेवैनंपशव्यंमुद्धंरते ॥ बृहदभि
गांयतआहवनीयंआधीयमांने ॥ बार्हंतोवाअसौलोकः ॥ अमुष्मिन्नेवैनंल्लोकेप्रतिंष्ठितमाधंत्ते ॥
प्रजापंतिरग्निमंसृजत ॥ २ ॥ सोश्वोवारोंभूत्वापरांङैत् ॥ तंवांरवंतीयेंनावारयत ॥
तद्वारवंतीयंस्यवारवंतीयत्वं ॥ श्यैतेनंश्येतीअंकुरुत ॥ तच्छ्यैतस्यंश्यैतत्वं ॥ यद्वांरवंती
यंमभिगायंते ॥ वारयित्वैवैनंप्रतिंष्ठितमाधंत्ते ॥ श्यैतेनंश्येतीकुंरुते ॥ घर्मःशिरइतिगार्हंपत्य

मादधाति ॥ सशीर्षाणमेवैनमाधत्ते ॥ ३ ॥ उपैनमुत्तरो यज्ञो नमति ॥ रुद्रो वा एषः ॥ यदग्निः ॥ स आधीयमानः ईश्वरो यजमानस्य पशून् हिंसितोः ॥ संप्रियः पशुभिर्भुवदित्याह ॥ पशुभिरेवैनः संप्रियं करोति ॥ पशूनामहिंसायै ॥ छर्दिस्तोकाय तनयाय यच्छेत्याह ॥ आशिषमेवैतामाशास्ते ॥ वातः प्राण इत्यन्वाहार्यपचनं ॥ ४ ॥ सप्राणमेवैनमाधत्ते ॥ स्वदितं तोकाय तनयाय पितुं पचेत्याह ॥ अन्नमेवास्मै स्वदयति ॥ प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह ॥ विभक्तिरेवैनयोः सा ॥ अथो नानावीर्यावेवैनौ कुरुते ॥ ऊर्जं नो धेहि द्विपदे चतुष्पद इत्याह ॥ आशिषमेवैतामाशास्ते ॥ अर्कश्चक्षुरित्याहवनीयं ॥ अर्को वै देवानामन्नं ॥ ५ ॥ अन्नमेवावरुंधे ॥ तेन मेदीदिहीत्याह ॥ समिंध एवैनं ॥ आनशेन्यान शइ इति त्रिरुदिंगयति ॥ त्रय इमे लोकाः ॥ एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते ॥ तत्तथा न कार्यं ॥ वीङ्गितमप्रतिष्ठितमादधीत ॥ उद्धृत्यैवाधायाभिमंत्र्यः ॥ अवीङ्गितमेवैनं प्रतिष्ठितमाधत्ते ॥ विराट् च स्वराट् च यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वादध इत्याह ॥ एता वा अग्नेः शिवास्तनुवः ॥ ताभिरेवैनः समर्धयति ॥ यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति ब्रूयाद्यं द्विष्यात् ॥ ताभिरेवैनं पराभावयति ॥ ६ ॥ लोकोऽसृजतैनमाधत्ते अन्वाहार्यपचनं देवानामन्नमेनं प्रतिष्ठितमाधत्ते पंच च ॥ ८ ॥ शमीगर्भादग्निं मंथति ॥ एषा वा अग्नेर्यज्ञियातनूः ॥ तामेवास्मै जनयति ॥ अदितिः पुत्रकामा ॥ साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत् ॥ तस्या उच्छेषणमददुः ॥ त

त्प्राश्नात् ॥ सारेतोधत्त ॥ तस्यैधाताचार्यमाचांजायेतां ॥ साद्वितीयमपचत् ॥ १ ॥ तस्यांउच्छेषणमददुः ॥
तत्प्राश्नात् ॥ सारेतोधत्त ॥ तस्यैमित्रश्चवरुणश्चाजायेतां ॥ सातृतीयंपमचत् ॥ तस्यांउच्छेषणमददुः
॥ तत्प्राश्नात् ॥ सारेतोधत्त ॥ तस्याअंशश्चभगश्चाजायेतां ॥ साचतुर्थमपचत् ॥ २ ॥ तस्यांउच्छेष
णमददुः ॥ तत्प्राश्नात् ॥ सारेतोधत्त ॥ तस्याइंद्रश्चविवस्वांश्चाजायेतां ॥ ब्रह्मौदनंपचाति ॥ रेतएवदधाति ॥
प्राश्नंतिब्राह्मणाओदनं ॥ यदाज्यमुच्छिष्यंते ॥ तेनंसमिधोभ्यज्यादधाति ॥ उच्छेषणाद्वाअदितीरेतो
धत्त ३ उच्छेषणादेवतद्रेतोधत्ते ॥ अस्थिवाएतत् ॥ यत्समिधः ॥ एतद्रेतः ॥ यदाज्यं ॥ यदाज्येनस
मिधोभ्यज्यादधाति ॥ अस्थ्येवतद्रेतंसिदधाति ॥ तिस्रआदधातिमिथुनत्वाय ॥ इयंतीर्भवंति ॥ प्र
जापतिनायज्ञमुखेनसंमिताः ॥ ४ ॥ इयंतीर्भवंति ॥ यज्ञपरुषासंमिताः ॥ इयंतीर्भवंति ॥ एतावद्वैपुरुषे
वीर्यं ॥ वीर्यसंमिताः ॥ आर्द्राभवंति ॥ आर्द्रमिवहिरेतःसिच्यते ॥ चित्रियस्याश्वत्थस्यादधाति ॥ चि
त्रमेवभवति ॥ घृतवतीभिरादधाति ५ एतद्वाअग्नेःप्रियंधाम ॥ यद्घृतं ॥ प्रियेणैवैनंधाम्नासमर्द्धयति ॥
अथोतेजसा ॥ गायत्रीभिर्ब्राह्मणस्यादध्यात् ॥ गायत्रच्छंदावैब्राह्मणः ॥ स्वस्यच्छंदसःप्रत्ययनस्त्वाय ॥
त्रिष्टुग्भीराजन्यस्य ॥ त्रिष्टुप्छंदावैराजन्यः ॥ स्वस्यच्छंदसःप्रत्ययनस्त्वाय ॥ ६ ॥ जगतीभिर्वैश्यस्य ॥ जग

तोछंदावैवैश्वर्यः ॥ स्वस्यच्छंदसःप्रत्ययनस्त्वार्य ॥ तꣳसंवत्सरंगोपायेत् ॥ संवत्सरꣳहिरेतोहितंवर्धते ॥ यद्येनꣳसंवत्सरेनोपनमेत् ॥ समिधःपुनरादध्यात् ॥ रेतएवताद्धितंवर्धमानमेति ॥ नमाꣳसमश्नीयात् ॥ नस्त्रियमुपेयात् ॥ ७ ॥ यन्माꣳसमश्नीयात् ॥ यत्स्त्रियमुपेयात् ॥ निर्वीर्यस्यात् ॥ नैनमग्निरुपनमेत् ॥ श्वआधास्यमानोब्रह्मौदनपचति ॥ आदित्यावाइतउत्तमाःसुवर्गलोकमायन् ॥ तेवाइतोयंतं प्रतिनुदंते ॥ एतेखलुवावादित्याः ॥ यद्ब्राह्मणाः ॥ तैरेवसंत्वंगच्छति ॥ ८ ॥ नैनंप्रतिनुदंते ॥ ब्रह्मवादिनोवदंति ॥ क्वासः ॥ अग्निःकार्यः ॥ योस्मैप्रजांपशून्प्रजनयतीति ॥ शल्कैस्ताꣳरात्रिमग्निमिंधीत ॥ तस्मिन्नुपव्युषमरणीनिष्टपेत् ॥ यथर्षभायवाशितान्यांविच्छायति ॥ तादृगेवतत् ॥ अपोदुह्यभस्माग्निंमंथति ॥ ९ ॥ सैवसाग्नेःसंततिः ॥ तंमथित्वाप्रांचमुद्धरति ॥ संवत्सरमेवतद्रेतोहितंप्रजनयति ॥ अनाहितस्तस्याग्निरित्याहुः ॥ यःसामिधोनाधायाग्निमाधत्तइति ॥ ताःसंवत्सरेपुरस्तादादध्यात् ॥ संवत्सरादेवैनमवरुध्यावंत्ते ॥ यदिसंवत्सरेनादध्यात् ॥ द्वादश्यांपुरस्तादादध्यात् ॥ संवत्सरप्रतिमावैद्वादशरात्रयः ॥ संवत्सरमेवास्याहिताभवंति ॥ यदिद्वादश्यांनादध्यात् ॥ त्र्यहेपुरस्तादादध्यात् ॥ आहिताएवास्यभवंति ॥ १० ॥ द्वितीयमपचचतुर्थमपचदादितीरेतोधत्तसंमिताघृतवंतो

भिरादंधातिराजन्यंःस्वस्यच्छंदंसःप्रत्ययनस्त्वायेंयाद्गच्छातिमंथातिरात्रंयश्चत्वारिंच॥ १ ॥ प्रजापतिःप्रजाअं
सृजत ॥ सरिरिचानोमन्यत ॥ सतपोंतप्यत ॥ सआत्मन्वीर्यमपश्यत् ॥तदंवर्धत ॥ तदंस्मात्सहंसोध्वंमं
सृज्यत ॥साविराडभवत् ॥ तांदेवासुराव्यंगृह्णत॥ सोंब्रवीत्प्रजापतिः ॥ ममवाएषा॥ १ ॥दोहांएवयुष्मा
कमितिं ॥ सातनःप्राच्युदंक्रामत् ॥ तत्प्रजापंतिःपर्यगृह्णात् ॥ अर्थवपितुंमेंगोपायेतिं ॥ साद्वितीयमुदं
क्रामत् ॥ तत्प्रजापतिःपर्यगृह्णात् ॥ नर्यप्रजांमेंगोपायेति ॥ सातृतीयमुदंक्रामत् ॥ तत्प्रजापंतिःपर्यगृह्णा
त्॥ शंस्यंपशून्मेंगोपायेतिं॥ २ ॥साचंतुर्थमुदंक्रामत् ॥ तत्प्रजापंतिःपर्यगृह्णात् ॥ सप्रंथसभांमेंगोपाये
तिं ॥ सापंचममुदंक्रामत् ॥ तत्प्रजापंतिःपर्यगृह्णात् ॥ अहेंबुध्नियमंत्रंमेंगोपायेतिं ॥ अग्नोन्वावसातान्व्यं
क्रमत ॥ तान्प्रजापतिःपर्यगृह्णात् ॥ अथोंपंक्तिमेव ॥ पंक्तिर्वाएषाब्रांह्मणेप्रविष्टा ३ तामात्मनोधिनि
र्मिमीते ॥ यदाग्नीरांधीयतें ॥ तस्मांदेतावंतोग्नयआधीयते ॥ पांक्तंवाइदंसर्वं ॥ पांक्तेनैवपांक्तंस्पृणो
ति ॥ अर्थवंपितुंमेंगोपायेत्यांह ॥ अन्नमेवैतेनंस्पृणोति ॥ नर्यप्रजांमेंगोपायेत्यांह ॥ प्रजामेवैतेनंस्पृ
णोति ॥ शंस्यंपशून्मेंगोपायेत्यांह ४ पशूनेवैतेनंस्पृणोति ॥ सप्रंथसभांमेंगोपायेत्यांह ॥ सभामेवै
तेनेंद्रियंस्पृणोति ॥ अहेंबुध्नियमंत्रंमेंगोपायेत्यांह ॥ मंत्रमेवैतेनाश्रियंस्पृणोति ॥ यदंन्वाहार्यपचं
नेन्वाहार्यपचंति ॥ तेनसोंस्याभीष्टःप्रीतः॥ यद्गार्हंपत्यआज्यंमाधिश्रयंतिसंपत्नीर्याजयंति ॥ तेनसोंस्याभि

ष्टंः प्रीतः ॥ यदाहवनीयेजुह्वति॥५॥तेनस्योऽस्याभीष्टंःप्रीतः ॥ यत्सभायांविजयंते ॥ तेनसोऽस्याभीष्टंः
प्रीतः ॥ यदावसथेन्नꣳहरंति ॥ तेनसोऽस्याभीष्टंःप्रीतः ॥ तथाऽस्यसर्वेप्रीताअभीष्टाआधीयंते ॥ प्रवस
थमेष्यन्नेवमुपतिष्ठेतैकमेकं ॥ यथाब्राह्मणायगृहेवासिनेपरिदायगृहानेति ॥ तादृगेवतत् ॥ पुनराग
त्योपतिष्ठते ॥ साभागेयमेवैषांतत् ॥ साततंऊर्ध्वारोहतत् ॥ सारोहिण्यभवत् ॥ तद्रोहिण्यैरोहि
णित्वं ॥ रोहिण्यामग्निमादधीत ॥ स्वएवैनंयोनौप्रतिष्ठितमाधत्ते ॥ ऋध्नोत्येनेन ॥ ६॥एषापशून्मेगो
पायेतिप्रविष्टापशून्मेगोपायेत्याहजुह्वतितिष्ठतिसमर्चं॥१०॥ ब्रह्मसंधत्तंकृत्तिकासूद्धंतिद्वादशसुप्रजापति
र्वाचोदेवासुराधर्मःशिरइमेवैशमीगर्भात्प्रजापतिःसरिरिचानःसतपःसआत्मन्वीर्यदश ॥ १० ॥
ब्रह्मसंधत्तंतौदिव्यावथोशत्वायप्राच्येषांयदुपर्युपरियत्सद्यःसोऽश्वोवारोजगतीभिरशीतिः ॥ ८० ॥
॥ ॐ ॥ हरिःॐ॥ उद्धन्यमानमस्याअमेध्यं ॥ अपपाप्मानंयजमानस्यहंतु ॥ शिवानःसंतुप्रदि
शश्चतस्रः ॥ शन्नोमातापृथिवीतोकसाता ॥ शन्नोदेवीरभिष्टये ॥ आपोभवंतुपीतये ॥ शंयोरभिस्रवं
तुनः ॥ वैश्वानरस्यरूपं ॥ पृथिव्यांपरिस्रसा ॥ स्योनमाविशंतुनः १ यदिदंदिवोयददःपृथिव्याः ॥
संजज्ञानेरोदसीसंबभूवतुः ॥ ऊषान्कृष्णमवतुकृष्णमूषाः ॥ इहोभयोर्यज्ञियमागमिष्ठाः ॥ ऊतीःकुर्वा

णोयत्पृंथिवीमचरः ॥ गुहाकारंमाखुरूपंप्रतीत्यं ॥ तत्तेन्यंक्तमिहसंभरंतः ॥ शतंजीवेमशरदःसवीराः ॥
ऊर्जंपृथिव्यारसंमाभरंतः ॥ शतंजीवेमशरदःपुरूचीः २ वम्रोभिरनुवित्तंगुहासु ॥ श्रोत्रंतऊर्ध्यबधि
राभवामः ॥ प्रजापतिसृष्टानांप्रजानां ॥ क्षुधोपहत्यैसुवितन्नोअस्तु ॥ उपप्रभिन्नमिषमूर्जंप्रजाभ्यः ॥
सूदंगृहेभ्योरसमाभरामि ॥ यस्यंरूपंबिभ्रदिमामविंदत् ॥ गुहाप्रविष्टांसरिरस्यमध्ये ॥ तस्येदं
विहतमाभरंतः ॥ अच्छैवट्कारमस्यांविधेम ॥ ३ ॥ यत्पर्यपश्यत्सरिरस्यमध्ये ॥ उर्वीमपश्यज्जगतः
प्रतिष्ठां ॥ तत्पुष्करस्यायतनाद्धिजातं ॥ पर्णंपृथिव्याःप्रथनंहरामि ॥ याभिरदंहज्जगतःप्र
तिष्ठां ॥ उर्वीमिमांविश्वजनस्यभर्त्रीं ॥ तानःशिवाःशर्कराःसंतुसर्वाः ॥ अग्नेरेतश्चंद्रंहिरण्यं ॥
अद्भ्यःसंभूतममृतंप्रजासु ॥ तत्संभरंनुत्तरतोनिधाय॥ ४ ॥अतिप्रयच्छंदुरितिंतरयं ॥ अश्वोरूपंकृत्वायदश्व
त्थेतिष्ठः ॥ संवत्सरंदेवेभ्योनिलायं ॥ तत्तेन्यंक्तमिहसंभरंतः ॥ शतंजीवेमशरदःसवीराः ॥ ऊर्जःपृथि
व्याअध्युत्थितोसि ॥ वनस्पतेशतवल्शोविरोह ॥ त्वयावयमिषमूर्जमदंतः ॥ रायस्पोषेणसमिषामदे
म ॥ गायत्रियाह्रियमाणस्ययत्ते ॥५॥ पर्णमपतत्तृतीयस्यैदिवोधि ॥ सोयंपर्णःसोमपर्णाद्धिजातः ॥ ततो
हरामिसोमपीथस्यावरुध्यै ॥ देवानांब्रह्मवादंवदतांयत् ॥ उपाशृणोःसुश्रवावैश्रुतोसि ॥ ततोमामाविं

शतुब्रह्मवर्चसं ॥ तत्संभरꣳस्तदवरुंधीयसाक्षात् ॥ यथांतेसृष्टस्याग्नेः ॥ हेतिमशमयत्प्रजापतिः ॥ तामिमामप्रदाहाय ॥ ६ ॥ शमीꣳ शांत्यैहराम्यहं ॥ यत्तेसृष्टस्यंयतः ॥ विकंकतंभाआर्च्छज्जातवेदः ॥ तयाभासासंमितः ॥ उरुन्नोलोकमनुप्रभाहि ॥ यत्तेतांतस्यहृदयमाच्छिदंजातवेदः ॥ मरुतोद्भिस्तंमयित्वा ॥ एतत्तेतदशनेऽसंभरामि ॥ सात्मांअग्नेसहृदयोभवेह ॥ चित्रियादश्वत्थात्संभृताबृहत्यः ॥ ७ ॥ शरीरमभिसꣳस्कृतास्थ ॥ प्रजापतिनायज्ञमुखेनसंमिताः ॥ तिस्रस्त्रिवृद्भिर्मिथुनाःप्रजात्यै ॥ अश्वत्थाद्धव्यवाहाद्धिजातां ॥ अग्नेस्तनूंयज्ञियाꣳ संभरामि॥ शांतयोनिꣳशमीगर्भं ॥ अग्नयेप्रजनयितवै ॥ योअश्वत्थश्शमीगर्भः ॥ आरुरोहत्वेसचां ॥ तंतेहरामिब्रह्मणा ॥ ८ ॥ यज्ञियैःकेतुभिःसह ॥ यंत्वांसमभरंजातवेदः ॥ यथाशरीरंभूतेषुन्यक्तं ॥ ससंभृतःसीदशिवःप्रजाभ्यः ॥ उरुंनोलोकमनुनेषिविद्वान् ॥ प्रवेधसेकवयेमेध्याय ॥ वचोवंदारुवृषभायवृष्णे ॥ यतोभयमभयंतन्नोअस्तु ॥ अवदेवान्यजेहेड्यान् समिधाग्निंदुवस्यत ॥ ९ ॥ घृतैर्बोधयतातिथिं ॥ आस्मिन्हव्याजुहोतन ॥ उपत्वाग्नेहविष्मतो ॥ घृताचीर्यंतुहर्यत ॥ जुषस्वंसमिधोममं ॥ तंत्वांसमिद्भिरंगिरः ॥ घृतेनवर्द्धयामसि ॥ बृहच्छोचायविष्ठ्य ॥ समिध्यमानःप्रथमोनुधर्मः ॥ समक्तुभिरज्यतेविश्ववारः ॥ १० ॥ शोचिष्केशोघृतनिर्णिक्पा

वक्रः ॥ सुयज्ञोअग्निर्यजथायदेवान् ॥ घृतप्रतीकोघृतयोनिरग्निः ॥ घृतैःसमिद्धोघृतमस्यान्नं ॥ घृतप्रु
षस्त्वासरितोवहंति ॥ घृतंपिबन्त्सुयजायक्षिदेवान् ॥ आयुर्दाअग्नेहविषोजुषाणः ॥ घृतप्रतीकोघृत
योनिरेधि ॥ घृतंपीत्वामधुचारुगव्यं ॥ पितेवपुत्रमभिरक्षतादिमं ॥ ११ ॥ त्वामग्नेसमिधानंयविष्ठ ॥
देवादूतंचक्रिरेहव्यवाहं ॥ उरुज्रयसंघृतयोनिमाहुतं ॥ त्वेषंचक्षुर्दधिरेचोदयन्वति ॥ त्वामग्नेप्रदिव
आहुतंघृतेन ॥ सुम्नायवःसुषमिधासमीधिरे ॥ सवावृधानओषधीभिरुक्षितः ॥ उरुज्रयाꣳसिपार्थिवा
वितिष्ठसे ॥ घृतप्रतीकंवऋतस्यधूर्षदं ॥ अग्निंमित्रंनसमिधानऋंजते ॥ १२ ॥ इंधानोअक्रोविदथेषु
दीद्यत् ॥ शुक्रवर्णामुदुनोयꣳसतेधियं ॥ प्रजाअग्नेसंवासय ॥ आशाश्चपशुभिःसह ॥ राष्ट्राण्यस्माआ
धेहि ॥ यान्यासन्त्सवितुःसवे ॥ महीविश्पत्नीसदनेऋतस्य ॥ अर्वाचीएतंधरुणेरयीणां ॥ अंतर्वत्नी
जन्यंजातवेदसं ॥ अध्वराणांजनयथःपुरोगां ॥ १३ ॥ आरोहतंदशतꣳशक्वरीर्मम ॥ ऋतेनाग्न
आयुषावर्चसासह ॥ ज्योग्जीवंतउत्तरामुत्तराꣳसमां ॥ दर्शमहंपूर्णमासंयज्ञंयथायजै ॥ ऋत्वि
यवतीस्थोअग्निरेतसौ ॥ गर्भंदधाथांतेवामहंददे ॥ तत्सत्यंयद्वीरंबिभृथः ॥ वीरंजनयिष्यथः ॥
तेमत्प्रातःप्रजनिष्येथे ॥ तेमाप्रजातेप्रजनयिष्यथः ॥ १४ ॥ प्रजयापशुभिर्ब्रह्मवर्चसेनसुवर्गेलो

के ॥ अनृंतात्सत्यमुपैंमि ॥ मानुषाद्दैव्यमुपैंमि ॥ दैवींवाचंयच्छामि ॥ शल्कैरग्निमिंधानः ॥
उभौलोकौसंनेमहं ॥ उभयोर्लोकयोर्ऋध्वा ॥ अतिमृत्युंतराम्यहं ॥ जातवेदोभुवंनस्यरेतः ॥ इह
सिंचतपसोयज्जंनिष्यते ॥ १५ ॥ अग्निमंश्वत्थादधिहव्यवाहं ॥ शमीगर्भाज्जनयन्योमयोभूः ॥
अयंतेयोनिर्ऋत्वियः ॥ यतोजातोअरोचथाः ॥ तंजानन्नंग्नआरोह ॥ अथानोवर्धयारयिं ॥
अपेंतवीतविचंसर्पतातः ॥ येत्रस्थपुराणायेचनूतंनाः ॥ अदादिदंयमोंवसानंपृथिव्याः ॥ अक्रंनिमंपित
रोलोकमंस्मै ॥ १६ ॥ अग्नेर्भस्मास्यग्नेःपुरीषमसि ॥ संज्ञानमसिकामधरणं ॥ मयितेकामधरणंभूया
त् ॥ संवःसृजामिहृदयानि ॥ सꣳसृष्टंमनोंअस्तुवः ॥ सꣳसृष्टःप्राणोअस्तुवः ॥ संयावःप्रियास्तनुवः ॥
संप्रियाहृदयानिवः ॥ आत्मावोंअस्तुसंप्रियः ॥ संप्रियास्तनुवोममं ॥ १७ ॥ कल्पेतांद्यावापृथिवी ॥
कपल्तामापओषधीः ॥ कल्पंतामग्नयःपृथक् ॥ ममज्यैष्ठ्यायसव्रताः ॥ येग्नयःसमनसः ॥ अंतराद्या
वापृथिवी ॥ वासंतिकावृतूअभिकल्पमानाः ॥ इंद्रमिवदेवाअभिसंविशंतु ॥ दिवस्त्वावीर्येण ॥ पृथिव्यै
महिम्ना ॥१८॥ अंतरिक्षस्यपोषेण ॥ सर्वपंशुमादधे ॥ अजीजनन्नमृतंमर्त्यासः ॥ अस्रेमाणंतरणिंवीडु
जंभं ॥ दशस्वसारोअग्रुवःसमीचीः ॥ पुमांसंजातमभिसꣳरभंतां ॥ प्रजापतेस्त्वाप्राणेनाभिप्राणिमि ॥

पूष्णःपोषेणमह्यं ॥ दीर्घायुत्वायशतशारदाय ॥ शतꣳशरद्भ्यआयुषेवर्चसे ॥ १९॥ जीवात्वैपुण्याय ॥
अहंत्वदस्मिमदसित्वमेतत् ॥ ममासियोनिस्तवयोनिरस्मि ॥ ममैवसन्वहहव्यान्यग्ने ॥ पुत्रःपित्रेलो
कृज्जातवेदः ॥ प्राणेत्वामृतमादधामि ॥ अन्नादमन्नाद्याय ॥ गोप्तारंगुप्त्यै ॥ सुगार्हपत्योविदहन्नरा
तीः ॥ उषसःश्रेयसीःश्रेयसीर्दधत् ॥ २० ॥ अग्नेसपत्नाꣳअपबाधमानः ॥ रायस्पोषमिषमूर्जमस्मा
सुधेहि ॥ इमाउमामुपतिष्ठंतुरायः ॥ आभिःप्रजाभिरिहसंवसेय ॥ इहोइडातिष्ठतुविश्वरूपी ॥ म
ध्येवसोर्दीदिहिजातवेदः ॥ ओजसेबलायत्वोद्यच्छे ॥ वृषणेशुष्मायायुषेवर्चसे ॥ सपत्नतूरसिवृत्रतूः ॥
यस्तेदेवेषुमहिमासुवर्गः ॥ २१ ॥ यस्तआत्मापशुषुप्रविष्टः ॥ पुष्टिर्यातेमनुष्येषुपप्रथे ॥ तयानोअग्ने
जुषमाणएहि ॥ दिवःपृथिव्याःपर्यंतरिक्षात् ॥ वातात्पशुभ्योअध्योषधीभ्यः ॥ यत्रयत्रजातवेदःसंबभू
थ ॥ ततोनोअग्नेजुषमाणएहि ॥ प्राचीमनुप्रदिशंप्रेहिविद्वान् ॥ अग्नेरग्नेपुरोअग्निर्भवेह ॥ विश्वाआ
शादीद्यानोविभाहि ॥ २२ ॥ ऊर्जंनोधेहिद्विपदेचतुष्पदे ॥ अन्वग्निरुषसामग्रमख्यत् ॥ अ
न्वहानिप्रथमोजातवेदाः ॥ अनुसूर्यस्यपुरुत्राचरश्मीन् ॥ अनुद्यावापृथिवीआततान ॥ विक्रमस्वमहाꣳ

असि ॥ वेदिषन्मानुषेभ्यः ॥ त्रिषुलोकेषुजागृहि ॥ यदिदंदिवोयददःपृथिव्याः ॥ संविदानेरोदसी संबभूवतुः ॥ २३ ॥ तयोःपृष्ठेसीदतुजातवेदाः॥शंभूःप्रजाभ्यस्तनुवेस्योनः ॥ प्राणंत्वामृतआदधामि ॥ अन्नादमन्नाद्याय ॥ गोप्तारंगुप्त्यै ॥ यत्तेशुक्रशुक्रंवर्चःशुक्रातनूः ॥ शुक्रंज्योतिरजस्रं ॥ तेनमेदीदिहि तेनत्वादधे ॥ अग्निनाग्नेब्रह्मणा ॥ आनशेव्यानशेसर्वमायुर्व्यानशे ॥ २४ ॥ नर्यप्रजांमेगोपाय ॥ अमृतत्वायजीवसे ॥ जातांजनिष्यमाणांच ॥ अमृतेसत्येप्रतिष्ठितां ॥ अथर्वपितुंमेगोपाय ॥ रसमन्न मिहायुषे ॥ अदब्धायोशीततनो ॥ अविषन्नःपितुंकृणु ॥ शꣳस्यपशून्मेगोपाय ॥ द्विपादोयेचतुष्पदः ॥ २५ ॥ अष्टाशफाश्चयइहाग्ने ॥ येचैकशफाआशुगाः ॥ सप्रथसभांमेगोपाय ॥ येचसभ्याःसभास दः ॥ तानिंद्रियावतःकुरु ॥ सर्वमायुरुपासतां ॥ अहेबुध्नियमंत्रंमेगोपाय ॥ यमृषयस्त्रयिविदाविदुः ॥ ऋचःसामानियजूꣳषि ॥ साहिश्रीरमृतासतां ॥ २६ ॥ चतुःशिखंडायुवतिःसुपेशाः ॥ घृतप्रती काभुवनस्यमध्ये ॥ मर्मृज्यमानामहतेसौभगाय ॥ मह्यंधुक्ष्वयजमानायकामान् ॥ इहैवसंतत्रसतोवो अग्नयः ॥ प्राणेनवाचामनसाबिभर्मि ॥ तिरोमासंतमायुर्माप्रहासीत् ॥ ज्योतिषावोवैश्वानरेणोपतिष्ठे ॥

पंचधाग्नीन्व्यक्रामत् ॥ विराट्सृष्टाप्रजापतेः ॥ ऊर्ध्वारोहद्रोहिणी ॥ योनिरग्नेःप्रतिष्ठितिः ॥ २७ ॥
विशंतुनःपुरुचीर्विधेमनिधाययत्तेप्रदाहायबृहत्योब्रह्मणादुवस्यतविश्ववारइममृंजतेपुरोगांप्रजंनयिष्यथो
जनिष्यतेस्मैममंमहिम्नावर्चसेदधत्सुवर्गोभाहिसंबभूवतुरायुर्व्यानशेचतुष्पदःसतांप्रजापतेर्द्वेचं॥ १ ॥ न
वैतान्यहांनिभवंति ॥ नववैसुवर्गालोकाः ॥ यदेतान्यहान्युपयंति॥ नवस्वेवतत्सुवर्गेषुलोकेषुसत्रिणः
प्रतितिष्ठंतोयंति ॥ अग्निष्टोमाःपरःसामानःकार्याइत्याहुः ॥ अग्निष्टोसंमितःसुवर्गोलोकइति ॥ द्वाद
शाग्निष्टोमस्यस्तोत्राणि ॥ द्वादशमासाःसंवत्सरः ॥ तत्तन्नसूक्ष्यं ॥ उक्थ्याएवसप्तदशाःपरःसामानःका
र्याः ॥ १ ॥ पशवोवाउक्थानि ॥ पशूनामवरुध्यै ॥ विश्वजिदभिजितावग्निष्टोमौ ॥ उक्थ्यासप्त
दशाःपरःसामानः ॥ तेसंस्तुताविराजमभिसंपद्यंते ॥ द्वेचर्चावतिरिच्येते ॥ एकयागौरतिरिक्तः ॥ ए
कयायुरूनः ॥ सुवर्गोवैलोकोज्योतिः ॥ ऊर्ग्विराट् ॥ २ ॥ सुवर्गमेवतेनलोकमभिजयंति ॥ यत्परंरा
थंतरं ॥ तत्प्रथमेहन्कार्यं ॥ बृहद्द्वितीये ॥ वैरूपंतृतीये ॥ वैराजंचतुर्थे ॥ शाक्वरंपंचमे ॥ रैवतंष
ष्ठे ॥ तद्वैपृष्ठेभ्योनयंति ॥ संतनंयएतेग्रहागृह्यंते ॥ ३ ॥ अतिग्राह्याःपरःसामसु ॥ इमानेवैतैर्लोका
न्त्संतन्वंति ॥ मिथुनाएतेग्रहागृह्यंते ॥ अतिग्राह्याःपरःसामसु ॥ मिथुनमेवतैर्यजमानाअवरुंधते ॥ बृ

हत्पृष्ठंभवति ॥ बृहद्वैसुवर्गोलोकः ॥ बृहतैवसुवर्गंलोकंयंति ॥ त्रयस्त्रिꣳशिनामसाम ॥ माध्यंदिनेपव
मानेभवति ॥ ४ ॥ त्रयस्त्रिꣳशद्वैदेवताः ॥ देवताएवावरुंधते ॥ येवाइतःपराचꣳसंवत्सरमुपयंति ॥
नैहैनंतेस्वस्तिसमश्नुवते ॥ अथयेमुतोर्वाचमुपयंति ॥ तेहैनꣳस्वस्तिसमश्नुवते ॥ एतद्वाअमुतोर्वाचमु
पयंति ॥ यदेवं ॥ योहखलुवावप्रजापतिः ॥ सउवेवेंद्रः ॥ तदुदेवेभ्योनयंति ॥ ५ ॥ कार्याविराट्
गृह्यंतेपवमानेभवंतीद्रएकंच ॥ १ ॥ संततिर्वाएतेग्रहाः ॥ यत्परःसामानः ॥ विषूवांदिवाकीर्त्यं ॥ य
थाशालायैपक्षसी ॥ एवꣳसंवत्सरस्यपक्षसी ॥ यदेतेनगृह्येरन् ॥ विषूचीसंवत्सरस्यपक्षसीव्यवस्रꣳसे
याताम् ॥ आर्तिमार्छेयुः ॥ यदेतेगृह्यंते ॥ यथाशालायैपक्षसीमध्यमंवꣳशमभिसमायच्छंति ॥ १ ॥ ए
वꣳसंवत्सरस्यपक्षसीदिवाकीर्त्यमभिसंतन्वंति ॥ नार्तिमार्छंति ॥ एकविꣳशमहर्भवति ॥ शुक्राग्राग्र
हागृह्यंते ॥ प्रत्युत्तब्ध्यैसयत्वाय ॥ सौर्यएतदहःपशुरालभ्यते ॥ सौर्योतिग्राह्योगृह्यते ॥ अहरेवरूपेणस
मर्द्धयंति ॥ अथोअह्नएवैषबलिर्ह्रियते ॥ सप्तैतदहरतिग्राह्यागृह्यंते ॥ २ ॥ सप्तवैशीर्षण्याःप्राणाः ॥
असावादित्यःशिरःप्रजानाम् ॥ शीर्षन्नेवप्रजानांप्राणांदधाति ॥ तस्मात्सप्तशीर्षन्प्राणाः ॥ इंद्रोवृत्रꣳह
त्वा ॥ असुरान्पराभाव्य ॥ सइमान्लोकानभ्यजयत् ॥ तस्यासौलोकोनभिजितआसीत् ॥ तंविश्वकर्मा

भूत्वाभ्यंजयत् ॥ यद्वैश्वकर्मणोगृह्यते ॥ ३ ॥ सुवर्गस्यंलोकस्याभिजित्यै ॥ प्रवाएतेस्माल्लोकाच्च्यवं
ते ॥ येवैश्वकर्मणंगृह्णते ॥ आदित्यश्वोगृह्यते ॥ इयंवाअदितिः ॥ अस्यामेवप्रतितिष्ठंति ॥ अन्यों
न्योगृह्येते ॥ विश्वान्येवान्येनकर्माणिकुर्वाणायंति ॥ अस्यामन्येनप्रतितिष्ठंति ॥ तावापराद्धात्संवत्स
रस्यान्योन्योगृह्येते ॥ तावुभौसहमंहाव्रतेगृह्येते ॥ यज्ञस्यैवांतंगत्वा ॥ उभयोर्लोकयोःप्रतितिष्ठंति ॥
अर्क्यमुक्थंभवति ॥ अन्नाद्यस्यावरुध्यै । ४ ॥ समायच्छंत्यतिग्राह्यांगृह्यंतेगृह्यतेसंवत्सरस्यान्योन्योगृह्ये
तेपंचच ॥ ३ ॥ एकवि꣬शएषभंवति ॥ एतेनवैदेवाएकवि꣬शेन ॥ आदित्यमितउत्तमं꣬सुवर्गंलोक
मारोहयन् ॥ सवाएषइतएकवि꣬शः ॥ तस्यदशावस्तादहानि ॥ दशपरस्तात् ॥ सवाएषविराज्युभ
यतःप्रतिष्ठितः ॥ विराजिहिवाएषउभयतःप्रतिष्ठितः ॥ तस्मादंतरेमौल्लोकौयन् ॥ सर्वेषुसुवर्गेषुलोके
ष्वभितपन्नेति ॥ १ ॥ देवावाआदित्यस्यसुवर्गस्यलोकस्य ॥ पराचोतिपादादबिभयुः ॥ तंछंदोभिरह
꣬हंधृत्यै ॥ देवावाआदित्यस्यसुवर्गस्यलोकस्य ॥ अवाचोवपादादबिभयुः ॥ तंपंचभीरश्मिभिरुदवय
न् ॥ तस्मादेकवि꣬शेहन्पंचदिवाकीर्त्यानिक्रियंते ॥ रश्मयोवैदिवाकीर्त्यानि ॥ येगायत्रे ॥ तेगायत्री
षूत्तरयोःपवमानयोः ॥ २ ॥ महादिवाकीर्त्य꣬होतुःपृष्ठं ॥ विकर्णंब्रह्मसामं ॥ भासोग्निष्टोमः ॥

अथैतानिपराणि ॥ परैर्वैदेवाआदित्यꣳसुवर्गंलोकमपारयन् ॥ यदपारयन् ॥ तत्पराणांपरत्वं ॥ पारयंत्येनंपराणि ॥ यएवंवेद ॥ अथैतानिस्पराणि ॥ स्परैर्वैदेवाआदित्यꣳसुवर्गंलोकमस्पारयन् ॥ यदस्पारयन् ॥ तत्स्पराणाꣳस्परत्वं ॥ स्पारयंत्येनꣳस्पराणि ॥ यएवंवेद ॥ ३ ॥ एतिपवमानयोस्पराणि पंचच ॥ ४ ॥ अप्रतिष्ठांवाएतेगच्छंति ॥ येषांꣳसंवत्सरेनाप्तेथं ॥ एकादशिन्याप्यते ॥ वैष्णवंवामनमालभंते ॥ यज्ञोवैविष्णुः ॥ यज्ञमेवालभंतेप्रतिष्ठित्यै ॥ ऐंद्राग्नमालभंते ॥ इंद्राग्नीवैदेवानामयातयामानौ ॥ येएवदेवतेअयातयाम्नी ॥ तेएवालभंते ॥ १ ॥ वैश्वदेवमालभंते ॥ देवताएवावरुंधते ॥ द्यावापृथिव्यांधेनुमालभंते ॥ द्यावापृथिव्योरेवप्रतितिष्ठंति ॥ वायव्यंवत्समालभंते ॥ वायुरेवैभ्योयथायतनाद्देवताअवरुंधे ॥ आदित्यामविंवशामालभंते ॥ इयंवाअदितिः ॥ अस्यामेवप्रतितिष्ठति ॥ मैत्रावरुणीमालभंते ॥ २ ॥ मित्रेणैवयज्ञस्यस्विष्टꣳशमयंति ॥ वरुणेनदुरिष्टं ॥ प्राजापत्यंतूपरंमहाव्रतआलभंते ॥ प्राजापत्योतिग्राह्योगृह्यते ॥ अहरेवरूपेणसमर्द्धयंति ॥ अथोअह्न एवैषबलिर्ह्रियते ॥ आग्नेयमालभंतेप्रतिप्रज्ञात्यै ॥ अजपेत्वान्वाएतेपूर्वैर्मासैरवरुंधते ॥ यदेतेगव्याःपशवआलभ्यंते ॥ उभयेषांपशूनामवरुध्यै ॥ ३ ॥ यदतिरिक्तामेकादशिनीमालभेरन् ॥ अप्रियंभ्रातृव्यमभ्यतिरिच्येत ॥ यद्वौद्वौपशूसमस्येयुः ॥ कनीयआयुःकुर्वीरन् ॥ यदेतेब्राह्मणवंतःपशवआलभ्यंते ॥ नाप्रियंभ्रातृव्यम

भ्यंतिरिच्यंते ॥ नकनीयआयुंःकुर्वते ॥ ४ ॥ तेएवालंभंतेमैत्रावरुणीमालंभंतेवंरुध्यैसप्तचं ॥ ५ ॥
प्रजापंतिःप्रजाःसृष्ट्वावृत्तोंशयत् ॥ तंदेवाभूतानां ॰रसंतेजंःसंभृत्यं ॥ तेनैंनमभिषज्यन् ॥ महानंववर्ती
तिं ॥ तन्मंहाव्रतस्यंमहाव्रतत्वं ॥ महाव्रतमितिं ॥ तन्मंहाव्रतस्यंमहाव्रतत्वं ॥ महतोव्रतमितिं ॥ तन्मंहा
व्रतस्यंमहाव्रतत्वं ॥ पंचवि॰शस्तोमोंभवति ॥ १ ॥ चतुंर्वि॰शत्यर्द्धमासःसंवत्सरः ॥ यद्वाएत
स्मिंन्त्संवत्सरोधिप्राजांयत ॥ तदन्नंपंचवि॰शमंभवत् ॥ मध्यतःक्रिंयते ॥ मध्यतोह्यन्नंमशितंधिनोतिं ॥
अथोंमध्यतएवप्रजानामूर्ग्धीयते॥ अथयद्वाइदमंततःक्रियतें ॥ तस्मांदुदंतेप्रजाःसमेंधंते ॥ अंततःक्रिंयतेप्र
जनंनायैव ॥ त्रिवृच्छिरोंभवति ॥ २॥ त्रेधाविहितं॰हिशिरंः ॥ लोमंच्छवीरस्थिं ॥ परांचास्तुवंति ॥ त
स्मात्तत्सहगेव ॥ नमेद्यतोनुंमेद्यति ॥ नकृश्यतोनुंकृश्यति ॥ पंचदशोंन्यःपक्षोभंवति ॥ सप्तदशोंन्यः॥
तस्माद्वयां॰स्यन्यतरमर्द्धमभिपर्यावर्त्तंते ॥ अन्यतरतोहितद्वरींयःक्रियतें ॥ ३ ॥ पंचवि॰शआत्माभंवति ॥
तस्मांन्मध्यतःपशवोवरिंष्ठाः॥ एकवि॰शंपुच्छं ॥ द्विपदांसुस्तुवंतिप्रतिंष्ठित्यै ॥सर्वैंणसहस्तुवंति॥ सर्वैंणह्यां
त्मनांत्मन्वी ॥ सहोत्पतंति ॥ एकैंकामुच्छिं॰षंति॥ आत्मन्ह्यंगांनिबद्धानिं ॥ नवाएतेनसर्वंःपुरुषः ॥ ४॥
यदितइंतोलोमांनिदतोनखान् ॥ परिमादंःक्रियंते ॥ तान्येवतेनप्रत्युंप्यंते ॥ औदुंबरस्तल्पोंभवति ॥
ऊर्ग्वाअन्नंमुदुंबरंः ॥ ऊर्जएवान्नाद्यस्यावंरुध्यै ॥ यस्यंतल्पसद्यमनंभिजित॰स्यात् ॥ सदेवाना॰साम्यं

क्षे ॥ तल्पसद्यंमभिजंयानीतितल्पंमारुह्योद्गायेत् ॥ तल्पसद्यंमेवाभिजंयति ॥ ५ ॥ यस्यंतल्पसद्यं
मभिजिंतंस्यात् ॥ सदेवानांसाम्यंक्षे ॥ तल्पसद्यंमापराजेषीतितल्पंमारुह्योद्गायेत् ॥ नतंल्पसद्यंप
राजयते ॥ ब्रंखेशंसति ॥ महोवैब्रंखः ॥ महंसएवान्नाद्यस्यावंरुध्यै ॥ देवासुराःसंयंत्ताआसन् ॥
तआंदित्येव्यायंच्छंत ॥ तंदेवाःसमंजयन् ॥ ६ ॥ ब्राह्मणश्चंशूद्रश्चंचर्मकर्तेव्यायच्छेते ॥ दैव्योवैवर्णोब्राह्म
णः ॥ असुर्यःशूद्रः ॥ इमेरात्सुरिमेसुभूतमंक्रन्नित्यन्यतरोब्रूयात् ॥ इमउंद्वासीकारिणंइमेदुंर्भूतमंक्र
न्नित्यंन्यतरः ॥ यदेवैषांसुकृतंयाराद्धिः ॥ तदंन्यतरोभिःश्रीणाति ॥ यदेवैषांदुष्कृतंयाराद्धिः ॥ तदंन्यत
रोपंहंति ॥ ब्राह्मणःसंजयति ॥ अमुमेवादित्यंभ्रातृंव्यस्यसंविंदते ॥ ७ ॥ भवतिभवतिक्रियतेपुरु
षोजयत्यजयंजयत्येकंच ॥ ६ ॥ उद्धन्यमानंनवैतानिसंतातिरेकविंशएषोप्रतिष्ठांप्रजापतिःप्रजाःसृ
ष्ट्वावृत्तःषट् ॥ ६ ॥ उद्धन्यमानंशोचिष्केशोग्नेसपत्नान्नातिग्राह्यावैश्वदेवमालंभंतेपंचाशत् ॥
॥ ५० ॥ २ ॥ हरिःॐ म् ॥ देवासुराःसंयंत्ताआसन् ॥ तेदेवाविंजयमुंपयंतः ॥ अग्नीषोमंयोस्ते
जस्विनीस्तनूःसन्यंदधत ॥ इदमुंनोभविष्यति ॥ यदिंनोजेष्यंतीति ॥ तेनाग्नीषोमावपांक्रामतां ॥
तदेवाविजित्यं ॥ अग्नीषोमावन्वैच्छन् ॥ तेग्निमन्वविंदनृतुषूत्संन्नं ॥ तस्यविभंक्तीभिस्तेजस्विनीस्तनूरवां

रुंधत ॥ १ ॥ तेसोममन्वविंदन् ॥ तमघ्नन् ॥ तस्ययथाभिज्ञायंतनूर्व्यगृह्णत ॥ तेग्रहाअभवन् ॥
तद्ग्रहाणांग्रहत्वं ॥ यस्यैवंविदुषोग्रहागृह्यंते ॥ तस्यत्वेवगृहीताः ॥ नानाग्नेयंपुनराधेयेकुर्यात् ॥ यदनां
ग्नेयंपुनराधेयेकुर्यात् ॥ व्यृद्धमेवतत् ॥ २ ॥ अनाग्नेयंवाएतक्रियते ॥ यत्समिधस्तनूनपातमिडोबर्हि
र्यजति ॥ उभावाग्नेयावाज्यभागौस्यातां ॥ अनाज्यभागौभवतइत्याहुः ॥ यदुभावाग्नेयावन्वंचावि
तिं ॥ अग्नयेपवमानायोत्तरस्यात् ॥ यत्पवमानाय ॥ तेनाज्यभागः ॥ तेनसौम्यः ॥ बुधन्वत्याग्नेयस्या
ज्यभागस्यपुरोनुवाक्याभवति ॥३॥ यथासुप्तंबोधयति ॥ तादृगेवतत् ॥ अग्निंन्यक्ताःपत्नीसंयाजा
नामृचस्युः ॥ तेनाग्नेयंसर्वंभवति ॥ एकधातेजस्विनींदेवतामुपैतीत्याहुः ॥ सैनमीश्वराप्रदहइतिं
॥ नेतिंब्रूयात् ॥ प्रजननंवाअग्निः ॥ प्रजननमेवोपैतीतिं ॥ कृतयजुःसंभृतसंभारइ
त्याहुः ॥ ४ ॥ नसंभृत्याःसंभाराः ॥ नयजुःकार्यमितिं ॥ अथोखलु ॥ संभृत्याएवसंभाराः ॥
कार्ययजुः ॥ पुनराधेयस्यसमृद्ध्यै ॥ तेनोपांशुप्रचरति ॥ एष्यइववाएषः ॥ यत्पुनराधेयः ॥ यथोपां
शुनष्टामिच्छतिं ॥ ५ ॥ तादृगेवतत् ॥ उच्चैःस्विष्टकृतमुत्सृजति ॥ यथानष्टंवित्वाप्राहायमितिं । तादृगे
वतत् ॥ एकधातेजस्विनींदेवतामुपैतीत्याहुः ॥ सैनमीश्वराप्रदहइतिं ॥ तत्तथानेपैति ॥ प्रयाजानू

याजेष्वेवविभंक्तीःकुर्यात् ॥ यथापूर्वमाज्यभागौस्याताम् ॥ एवंपत्नीसंयाजाः ॥ ६ ॥ तद्वैश्वानरवत्प्र
जनंनवत्तरमुपैतीति ॥ तदाहुः ॥ व्यृद्धंवाएतत् ॥ अनाग्नेयंवाएतक्रियतइति ॥ नेतिंब्रूयात् ॥ अ
ग्निंप्रथमंविभंक्तीनांयजति ॥ अग्निमुत्तमंपत्नीसंयाजानाम् ॥ तेनाग्नेयम् ॥ तेनसमृद्धंक्रियतइति ॥ ७ ॥
अरुंधतैवतद्भवतिसंभृतसंभारइत्याहुरिच्छतिंपत्नीसंयाजानवंच ॥ १ ॥ देवावैयथादर्शंयज्ञानाहरंत ॥
योग्निष्टोमम् ॥ यउक्थ्यम् ॥ योतिरात्रम् ॥ तेसहैवसर्वैवाजपेयमपश्यन् ॥ ते ॥ अन्योन्यस्मैनातिष्ठंत ॥
अहमनेनंयजाइति ॥ तेब्रुवन् ॥ आजिमस्यधावामेति ॥ १ ॥ तस्मिन्नाजिमधावन् ॥ तंबृहस्पति
रुदजयत् ॥ तेनायजत ॥ सस्वाराज्यमगच्छत् ॥ तमिंद्रोब्रवीत् ॥ मामनेनंयाजयेति ॥ तेनेंद्रमया
जयत् ॥ सोग्रंदेवतानांपर्यैत् ॥ अगच्छत्स्वाराज्यम् ॥ अतिष्ठंतास्मैज्यैष्ठ्याय ॥२॥ यएवंविद्वान्वाजपे
येनयजंते ॥ गच्छंतिस्वाराज्यम् ॥ अग्रंसमानानांपर्यंति ॥ तिष्ठंतेस्मैज्यैष्ठ्याय ॥ सवाएषब्राह्मणस्यचै
वराजन्यस्यचयज्ञः ॥ तंवाएतंवाजपेयइत्याहुः ॥ वाजाप्योवाएषः ॥ वाजंह्येतेनदेवाऐप्सन् ॥ सो
मोवैवाजपेयः ॥ योवैसोमंवाजपेयंवेद ॥ ३ ॥ वाज्येवैनंपीत्वाभवति ॥ आस्यवाजोजायते ॥ अ
न्नंवैवाजपेयः ॥ यएवंवेद ॥ अत्यन्नम् ॥ आस्यान्नादोजायते ॥ ब्रह्मवैवाजपेयः ॥ यएवंवेद ॥ अ
त्तिब्रह्मणान्नम् ॥ आस्यंब्रह्माजायते ॥ ४ ॥ वाग्वैवाजस्यप्रसवः ॥ यएवंवेद ॥ करोतिवाचावीर्यम् ॥

ऐनंबाचागच्छति ॥ अपिंवतांवाचंवदति ॥ प्रजापतिर्देवेभ्योयज्ञान्व्यादिशत् ॥ सआत्मन्वाजपेयंम
धत्त ॥ तंदेवाअंब्रुवन् ॥ एषवावयज्ञः ॥ यद्वाजपेयः ॥५॥ अप्येवनोत्रास्त्विति ॥तेभ्यएताउज्जितीः
प्रायच्छत् ॥ तावाएताउज्जितयोव्याख्यायंते ॥ यज्ञस्यसर्वत्वाय ॥ देवतानामनिर्भागाय ॥ देवावैब्र
ह्मणश्चान्नस्यचशर्मलमपाघ्नन् ॥ यद्ब्रह्मणःशर्मलमासीत् ॥ सागाथानाराशꣳस्यभवत् ॥ यदन्नस्य ॥
सासुरा ॥ ६ ॥ तस्माद्गायतश्चमत्तस्यचनप्रतिगृह्यं ॥ यत्प्रतिगृह्णीयात् ॥ शर्मलंप्रतिगृह्णीयात् ॥ सर्वा
वाएतस्यवाचोवरुद्धाः ॥ योवाजपेययाजी ॥ यापृथिव्यांयाग्नौयारथंतरे ॥ यांतरिक्षेयावायौयावामदे
व्ये ॥ यादिवियादित्येयाबृहति ॥ याप्सुयौषधीषुयावनस्पतिषु ॥ तस्माद्वाजपेययाज्यार्त्विजीनः ॥
सर्वाह्यस्यवाचोवरुद्धाः ॥७॥ धावामेतिज्यैष्ठ्यायवेदंब्रह्माजायतेवाजपेयःसुरार्त्विजीनएकंच ॥२॥ देवा
वैयदन्यैर्ग्रहैर्यज्ञस्यनावारुंधत ॥ तदतिग्राह्यैरतिगृह्यावारुंधत ॥ तदतिग्राह्याणामतिग्राह्यत्वं ॥ यदतिग्राह्या
गृह्यंते ॥ यदेवान्यैर्ग्रहैर्यज्ञस्यनावरुंधे ॥ तदेवैतैरतिगृह्यावरुंधे ॥ पंचगृह्यंते ॥ पांक्तोयज्ञः ॥ यावानेवय
ज्ञः ॥ तमाप्त्वावरुंधे ॥ १ ॥ सर्वऐंद्राभवंति ॥ एकधैवयजमानइंद्रियंदधाति ॥ सप्तदशप्राजापत्या
ग्रहागृह्यंते ॥ सप्तदशःप्रजापतिः ॥ प्रजापतेराप्त्यै ॥ एकयर्चागृह्णाति ॥ एकधैवयजमानेवीर्यंदधा
ति ॥ सोमग्रहाꣳश्चसुराग्रहाꣳश्चगृह्णाति ॥ एतद्वैदेवानांपरममन्नं ॥ यत्सोमः ॥ २ ॥ एतन्मनुष्याणां

णां ॥ यत्सुरां ॥ परमेणैवास्मांअन्नाद्येनावरमन्नाद्यमवरुंधे ॥ सोमग्रहान्गृह्णाति ॥ ब्रह्मणोवाएतत्ते
जः ॥ यत्सोमः ॥ ब्रह्मणएवतेजसातेजोयजमानेदधाति ॥ सुराग्रहान्गृह्णाति ॥ अन्नस्यवाएतच्छमं
लं ॥ यत्सुरां ॥ ३ ॥ अन्नस्यैवशमलेनशमलंयजमानादपहंति ॥ सोमग्रहाꣳश्चसुराग्रहाꣳश्चगृह्णा
ति ॥ पुमान्वैसोमः ॥ स्त्रीसुरां ॥ तन्मिथुनं ॥ मिथुनमेवास्यतद्यज्ञेकरोतिप्रजननाय ॥ आत्मानमे
वसोमग्रहैस्पृणोति ॥ जायाꣳसुराग्रहैः ॥ तस्मांद्वाजपेययाज्यमुष्मिंन्लोकेस्त्रियꣳसंभवति ॥ वाज
पेयाभिजितꣳह्यस्य ॥ ४ ॥ पूर्वेसोमग्रहागृह्यंते ॥ अपरेसुराग्रहाः ॥ पुरोक्षꣳसोमग्रहान्त्सादयति ॥
पश्चादक्षꣳसुराग्रहान् ॥ पापवस्यसस्यविधृत्यै ॥ एषवैयजमानः ॥ यत्सोमः ॥ अन्नꣳसुरां ॥ सो
मग्रहाꣳश्चसुराग्रहाꣳश्चव्यतिषजति ॥ अन्नाद्येनैवैनंव्यतिषजाति ॥ ५ ॥ संपृचस्थसंमांभद्रेणपृंक्
त्यांह ॥ अन्नंवैभद्रं ॥ अन्नाद्येनैवैनꣳसꣳसृजाति ॥ अन्नस्यवाएतच्छमलं ॥ यत्सुरां ॥ पाप्मेवखलु
वैशमलं । पाप्मनावाएनमेतच्छमलेनव्यतिषजति ॥ यत्सोमग्रहाꣳश्चसुराग्रहाꣳश्चव्यतिषजंति ॥ वि
पृचस्थविमांपाप्मनांपृंक्तेत्यांह ॥ पाप्मनैवैनꣳशमलेनव्यावर्त्तयति ॥ ६ ॥ तस्मांद्वाजपेययाजो
पूतोमेध्योदक्षिण्यः ॥ प्राङुद्रवतिसोमग्रहैः ॥ अमुमेवतैर्लोकमभिजयति ॥ प्रत्यङ्सुराग्रहैः ॥ इम

मेवतैर्लोकमभिजयति ॥ प्रतिष्ठंतिसोमग्रहैः ॥ यावदेवसत्यं ॥ तेनसूयते ॥ वाजसृद्भ्यःसुराग्रहान्हरं
ति ॥ अनृतेनैवविश्ँ्सँ्सृजति ॥ हिरण्यपात्रमधोःपूर्णंददाति ॥ मधव्योसानीति ॥ एकधाब्रह्मणउ
पहरति ॥ एकधैवयजमानआयुस्तेजोदधाति ॥ ७ ॥ आप्त्वावरुंधेसोमःशमलंयत्सुराह्यस्यैनंव्यातिष
जतिव्यावर्तयतिसृजतिचत्वारिच ॥ ३ ॥ ब्रह्मवादिनोवदंति ॥ नाग्निष्टोमोनोक्थ्यः ॥ नषोडशीना
तिरात्रः ॥ अथकस्माद्वाजपेयेसर्वैयज्ञक्रतवोवरुध्यंतइति ॥ पशुभिरितिब्रूयात् ॥ आग्नेयंपशुमालभते ॥
अग्निष्टोममेवतेनावरुंधे ॥ ऐंद्राग्नेनोक्थ्यं ॥ ऐंद्रेणषोडशिनस्तोत्रं ॥ सारस्वत्यातिरात्रं ॥ १ ॥ मारुत्या
बृहतस्तोत्रं ॥ एतावंतोवैयज्ञक्रतवः ॥ तान्पशुभिरेवावरुंधे ॥ आत्मानमेवस्पृणोत्यग्निष्टोमेन ॥ प्राणा
पानावुक्थ्येन ॥ वीर्यँ्षोडशिनस्तोत्रेण ॥ वाचमतिरात्रेण ॥ प्रजांबृहतःस्तोत्रेण ॥ इममेवलोकमभि
जयत्यग्निष्टोमेन ॥ अंतरिक्षमुक्थ्येन ॥ २ ॥ सुवर्गलोकँ्षोडशिनस्तोत्रेण ॥ देवयानानेवपथआरोह
त्यतिरात्रेण ॥ नाकँ्रोहतिबृहतःस्तोत्रेण ॥ तेजएवात्मंधत्तआग्नेयेनपशुना ॥ ओजोबलमैंद्राग्नेन ॥
इंद्रियमैंद्रेण ॥ वाचँ्सारस्वत्या ॥ उभावेवदेवलोकंचमनुष्यलोकंचाभिजयतिमारुत्यावशया ॥ स
प्तदशप्राजापत्यान्पशूनालभते ॥ सप्तदशःप्रजापतिः ॥ ३ ॥ प्रजापतेराप्त्यै ॥ श्यामाएकरूपाभवं
ति ॥ एवमिवहिप्रजापतिःसमृध्यै ॥ तान्पर्यग्निकृतानुत्सृजति ॥ मरुतोयज्ञमजिघाँ्सन्प्रजापतेः ॥

तेभ्यएतांमारुतींवशामालभत ॥ तयैवैनानशमयत् ॥ मारुत्याप्रचर्य ॥ एतान्त्संज्ञपयेत् ॥ मरुतएववशं
मयित्वा ॥ ४ ॥ एतैःप्रचरति ॥ यज्ञस्याघाताय ॥ एकधावपाजुहोति ॥ एकदेवत्याहि ॥ एते ॥
अथोएकधैवयजमानेवीर्यंदधाति ॥ नैवारेणसप्तदशशरावेणैतर्हिप्रचरति ॥ एतत्पुरोडाशाह्येते ॥ अथोप
शूनामेवच्छिद्रमपिदधाति ॥ सारस्वत्योत्तमयाप्रचरति ॥ वाग्वैसरस्वती ॥ तस्मात्प्राणानांवागुत्तमा ॥
अथोप्रजापतावेवयज्ञंप्रतिष्ठापयति ॥ प्रजापतिर्हिवाक् ॥ अपन्नदतीभवति ॥ तस्मान्मनुष्याःसर्वावा
चंवदंति ॥ ५ ॥ अतिरात्रमंतरिक्षमुक्थ्येनप्रजापतिःशमयित्वोत्तमयाप्रचरतिषट्च ॥ ४ ॥ सावित्रंजु
होतिकर्मणःकर्मणःपुरस्तात् ॥ कस्तद्वेदेत्याहुः ॥ यद्वाजपेयस्यपूर्वंयदपरमिति ॥ सवितृप्रसूतएवंयथा
पूर्वंकर्माणिकरोति ॥ सवनेसवनेजुहोति ॥ आक्रमणमेवतत्सेतुंयजमानःकुरुते ॥ सुवर्गस्यलोकस्यस
मष्ट्यै ॥ वाचस्पतिर्वाचमद्यस्वदातिनइत्याह ॥ वाग्वैदेवानांपुरान्नमासीत् ॥ वाचमेवास्माअन्नंस्व
दयति ॥ १ ॥ इंद्रस्यवज्रोसिवार्त्रघ्नइतिरथमुपावहरतिविजित्यै ॥ वाजस्यनुप्रसवेमातरंमहीमित्या
ह ॥ यन्नैवेयं ॥ यन्नास्यामधि ॥ तदेवावरुंधे ॥ अथोतस्मिन्नेवोभयेभिषिच्यते ॥ अप्स्वंतरमृतमप्सु
भेषजमित्यश्वान्पल्पूलयति ॥ अप्सुवाअश्वस्यतृतीयंप्रविष्टं ॥ तदंनुवेनन्ववप्लवते ॥ यदप्सुपल्पू

लयंति ॥ २ ॥ यदेवास्याप्सुप्रविष्टं ॥ तदेवावरुंधे ॥ बहुवाअश्वोमेध्यमुपगच्छति ॥ यदप्सुपल्पूल
यंति ॥ मेध्यानेवैनान्करोति ॥ वायुर्वात्वामनुर्वात्वेत्याह ॥ एतावाएतंदेवताअग्रेअश्वमयुंजन् ॥ ता
भिरेवैनान्युनक्ति ॥ सवस्योज्जित्यै ॥ यजुषायुनक्तिव्यावृत्यै ॥ ३ ॥ अपान्नपादाशुहेमन्निति संमा
र्ष्टि ॥ मेध्यानेवैनान्करोति ॥ अथोस्तौत्येवैनानाजिꣳसारिष्यतः ॥ विष्णुक्रमान्क्रमते ॥ विष्णुरेव
भूत्वेमान्लोकानभिजयति ॥ वैश्वदेवोवैरथः ॥ अंकौन्यंकावभितोरथंयावित्याह ॥ याएवदेवतारथेप्र
विष्टाः ॥ ताभ्यएवनमस्करोति ॥ आत्मनोनार्त्यै ॥ अशंमरथंभावुकोस्यरथोभवति ॥ यएवंवेद ॥ ४ ॥
स्वदयतिपल्पूलयंतिव्यावृत्याअनार्त्यैद्वेचं ॥ ५ ॥ देवस्याहꣳसवितुःप्रसवेबृहस्पतिनावाजजितावाजं
जेषमित्याह ॥ सवितृप्रसूतएवब्रह्मणावाजमुज्जयति ॥ देवस्याहꣳसवितुःप्रसवेबृहस्पतिनावाजजिता
वर्षिष्ठंनाकꣳरुहेयमित्याह ॥ सवितृप्रसूतएवब्रह्मणावर्षिष्ठंनाकꣳरोहति ॥ चात्वालेरथचक्रंनिमितꣳरो
हति ॥ अतोवाअंगिरसउत्तमाःसुवर्गंलोकमायन् ॥ साक्षादेवयजमानःसुवर्गंलोकमेति ॥ आवेष्टय
ति ॥ वज्रोवैरथः ॥ वज्रेणैवदिशोभिजयति ॥ १ ॥ वाजिनाꣳसामगायते ॥ अन्नंवैवाजः ॥ अन्न
मेवावरुंधे ॥ वाचोवर्ष्मदेवेभ्योपाक्रामत् ॥ तद्वनस्पतीन्प्राविशत् ॥ सैषावाग्वनस्पतिषुवदति ॥ यादुंदु

भौ ॥ तस्माद्दुंदुभिः सर्वावाचोतिवदति ॥ दुंदुभीन्त्समाघ्नंति ॥ परमावाएषावाक् ॥ २ ॥ यादुंदुभौ ॥ परमयैववाचावरांवाचमवरुंधे ॥ अथोवाचएववर्ष्मंयजमानोवरुंधे ॥ इंद्रायवाचंवदतेंद्रंवाजंजापयतेंद्रोवाजंमजयिदित्याह ॥ एषवाएतर्हींद्रः ॥ योयजते ॥ यजमानएववाजमुज्जयति ॥ सप्तदशप्रव्याधानाजिंधावंति ॥ सप्तदश स्तोत्रंभवति ॥ सप्तदशसप्तदशदोयंते ॥ ३ ॥ सप्तदश प्रजापतिः ॥ प्रजापतेराप्त्यै ॥ अर्वासिसप्तिरसिवाज्यसीत्याह ॥ अग्निर्वाअर्वा ॥ वायुःसप्तिः ॥ आदित्योवाजी ॥ एताभिरेवास्मैदेवताभिर्देवरथंयुनाक्ति ॥ प्रष्टिवाहिनंयुनक्ति ॥ प्रष्टिवाहीवैदेवरथः ॥ देवरथमेवास्मैयुनाक्ति ॥ ४ ॥ वाजिनोवाजंधावतकाष्ठांगच्छतेत्याह ॥ सुवर्गोवैलोकःकाष्ठा ॥ सुवर्गमेवलोकंयंति ॥ सुवर्गवाएतेलोकंयंति ॥ यआजिंधावंति ॥ प्रांचोधावंति ॥ प्राङिवहिसुवर्गोलोकः ॥ चतसृभिरनुमंत्रयते ॥ चत्वारिच्छंदांसि ॥ च्छंदोभिरेवैनान्त्सुवर्गंलोकंगमयति ॥ ५ ॥ प्रवाएतेस्माल्लोकाच्च्यवंते ॥ यआजिंधावंति ॥ उदंचआवर्त्तंते ॥ अस्मादेवतेनंलोकान्नयंति ॥ रथमिवोचनीयंजुहोति प्रतिष्ठित्यै ॥ आमावाजस्यप्रसवोजंगम्यादित्याह ॥ अन्नंवैवाजः ॥ अन्नमेवावरुंधे ॥ यथालोकंवाएतउज्जयंति ॥ यआजिंधावंति ॥ ६ ॥ कृष्णलंकृष्णलंवाजसृद्भ्यःप्रयच्छति ॥ यमेवतेवाजंलोकमुज्जयं

ति ॥ तंपरिक्रीयावरुंधे ॥ एकधाब्रह्मणउपंहरति ॥ एकधैवयजमानेवीर्यंदधाति ॥ देवावाओषधी
ष्वाजिमयुः ॥ ताबृहस्पतिरुदजयत् ॥ सनीवारान्निरवृणीत ॥ तन्नीवाराणांनीवारत्वं ॥ नैवारश्चरुर्भ
वति ॥ ७ ॥ एतद्वैदेवानांपरममन्नं ॥ यन्नीवाराः ॥ परमेणैवास्मांअन्नाद्येनावरमन्नाद्यमवरुंधे ॥ स
प्तदशशरावोभवति ॥ सप्तदशःप्रजापतिः ॥ प्रजापतेराप्त्यै ॥ क्षीरेभवति ॥ रुचमेवास्मिन्दधाति ॥
सर्पिष्वांन्भवतिमेध्यत्वाय ॥ बार्हस्पत्योवाएषदेवतया ॥ ८ ॥ योवाजपेयेनयजते ॥ बार्हस्पत्यएष
चरुः ॥ अश्वान्त्सरिष्यतःसन्नुषश्चावघ्रापयति ॥ यमेवतेवाजंल्लोकमुज्जयंति ॥ तमेवावरुंधे ॥ अजी
जिपतवनस्पतयइंद्रंवाजंविमुच्यध्वमितिदुंदुभीन्विमुंचति ॥ यमेवतेवाजंलोकमिंद्रियंदुंदुभयउज्जयंति ॥
तमेवावरुंधे ॥ ९ ॥ अभिजयतिवाएषावाग्दीयंतेस्मैयुनक्तिगमयतियआजिंधावंतिभवतिदेवतयाष्टौचं ॥
॥ ६ ॥ तार्प्यंयजमानंपरिधापयति ॥ यज्ञोवैतार्प्यं ॥ यज्ञेनैवैनꣳसमर्द्धयति ॥ दर्भमयंपरिधापयति ॥
पवित्रंवैदर्भाः ॥ पुनात्येवैनं ॥ वाजंवाएषोवरुरुत्सते ॥ योवाजपेयेनयजते ॥ ओषधयःखलुवैवाजः ॥
यद्दर्भमयंपरिधापयति ॥ वाजस्यावरुद्ध्यै ॥ १ ॥ जायएहिसुवोरोहावेत्याह ॥
पत्नियाएवैषयज्ञस्यान्वारंभोनवच्छित्त्यै ॥ सप्तदशारत्निर्यूपोभवति ॥ सप्तदशःप्रजापतिः ॥
प्रजापतेराप्त्यै ॥ तूपरश्चतुरश्रिर्भवति ॥ गौधूमंचषालं ॥ नवाएतेव्रीहयोनयवाः ॥

यद्गोधूमाः ॥ २ ॥ एवमिवहिप्रजापतिःसमृध्यै ॥ अथोअमुमेवास्मैलोकमन्नवंतंकरोति ॥ वासोभिर्वेष्टयति ॥ एषवैयजमानः ॥ यद्यूपः ॥ सर्वदेवत्यंवासः ॥ सर्वाभिरेवैनंदेवताभिःस मर्धयति ॥ अथोआक्रमणमेवतत्सेतुंयजमानःकुरुते ॥ सुवर्गस्यलोकस्यसमष्ट्यै ॥ द्वादशवाजप्रसवी यानिजुहोति ॥ ३ ॥ द्वादशमासाःसंवत्सरः ॥ संवत्सरमेवप्रीणाति ॥ अथोसंवत्सरमेवास्माउपदधा ति ॥ सुवर्गस्यलोकस्यसमष्ट्यै ॥ दशभिःकल्पैरोहति ॥ नववैपुरुषेप्राणाः ॥ नाभिर्दशमी ॥ प्राणा नेवयथास्थानंकल्पयित्वा ॥ सुवर्गंलोकमेति ॥ एतावद्वैपुरुषस्यस्वं ॥ ४ ॥ यावत्प्राणाः ॥ यावदे वास्यास्ति ॥ तेनसहसुवर्गंलोकमेति ॥ सुवर्देवाꣳअगन्मेत्याह ॥ सुवर्गमेवलोकमेति ॥ अमृताअ भूमेत्याह ॥ अमृतमिवहिसुवर्गोलोकः ॥ प्रजापतेःप्रजाअभूमेत्याह ॥ प्राजापत्योवाअयंलोकः ॥ अस्मादेवतेनलोकान्नैति ॥५॥ समहंप्रजयासंमयाप्रजेत्याह ॥ आशिषमेवैतामाशास्ते ॥ आसपुटैर्घ्नंति ॥ अन्नंवाइयं ॥ अन्नाद्येनैवैनꣳसमर्धयंति ॥ उषैर्घ्नंति ॥ एतेहिसाक्षादन्नं ॥ यदूषाः ॥ साक्षादेवैनमन्नाद्येनस मर्धयति ॥ पुरस्तात्प्रत्यंचंघ्नंति ॥६॥ पुरस्ताद्धिप्रतीचीनमन्नमद्यते ॥ शीर्षतोघ्नंति ॥ शीर्षतोह्यन्नमद्यते ॥ दिग्भ्योघ्नंति ॥ दिग्भ्यएवास्माअन्नाद्यमवरुंधते ॥ ईश्वरोवाएषपराङ्प्रदघः ॥ योयूपꣳरोहति ॥

हिरंण्यमध्यवरोहति ॥ अमृतंवैहिरंण्यं ॥ अमृतं सुवर्गोलोकः ॥ ७ ॥ अमृतएवसुवर्गेलोकेप्रतितिष्ठति ॥ शतमानंभवति ॥ शतायुःपुरुषःशतेंद्रियः ॥ आयुष्येवेंद्रियेप्रतितिष्ठति ॥ पुष्टत्रैवाएतद्रूपं ॥ यदजा ॥ त्रिःसंवत्सरस्यान्यान्पशून्पारिप्रजायते ॥ वस्ताजिनमध्यवरोहति ॥ पुष्टचामेवप्रजननेप्रतितिष्ठति ॥८॥ परिधापयंतिगोधूमांजुहोतिस्वंनैतिंप्रत्यंचंमंतिलोकोनवंच ॥ ७ ॥ सप्तान्नहोमांजुहोति ॥ सप्तवाअन्नानि ॥ यावंत्येवान्नानि ॥ तान्येवावरुंधे ॥ सप्तग्राम्याओषधयः ॥ सप्तारण्याः ॥ उभयीषामवरुध्यै ॥ अन्नंस्यान्नस्यजुहोति ॥ अन्नंस्यान्नस्यावरुध्यै ॥ यद्वाजपेययाज्यनवरुद्धस्याश्नीयात् ॥ १ ॥ अवरुद्धेनव्यृंद्धेत ॥ सर्वस्यसमवदायंजुहोति ॥ अनवरुद्धस्यावरुध्यै ॥ औदुंबरेणस्रुवेणंजुहोति ॥ ऊर्ग्वाअन्नमुदुंबरः ॥ ऊर्जएवान्नाद्यस्यावरुध्यै ॥ देवस्यंत्वासवितुःप्रसवइत्याह ॥ सवितृप्रसूतएवैनंब्रह्मणादेवताभिरभिषिंचति ॥ अन्नंस्यान्नस्याभिषिंचति ॥ अन्नंस्यान्नस्यावरुध्यै ॥ २ ॥ पुरस्तात्प्रत्यंचमभिषिंचति ॥ पुरस्ताद्धिप्रतीचीनमन्नमद्यते ॥ शीर्षतोभिषिंचति ॥ शीर्षतोह्यन्नमद्यते ॥ आमुखादन्ववस्रावयति ॥ मुखतएवास्माअन्नाद्यंदधाति ॥ अग्नेस्त्वासाम्राज्येनाभिषिंचामीत्याह ॥ एषवाअग्नेःसवः ॥ तेनैवैनमभिषिंचति ॥ इंद्रस्यत्वासाम्राज्येनाभिषिंचामीत्याह ॥ ३ ॥ इंद्रिय

मेवास्मिंन्नेतेनंदधाति ॥ बृहस्पतेंस्त्वासाम्राज्येनाभिषिंचामीत्यांह ॥ ब्रह्मवैदेवानांबृहस्पतिः ॥ ब्रह्म णैवैनंमभिषिंचति ॥ सोमग्रहाꣳश्चांवदानीयानिंचर्त्विग्भ्यउपंहरंति ॥ अमुमेवतैर्लोकमन्नंवंतंकरोति ॥ सुराग्रहाꣳश्चांनवदानीयानिंचवाजसृद्भ्यः ॥ इममेवतैर्लोकमन्नंवंतंकरोति ॥ अथोंउभयोंष्वेवाभिषिच्य ते ॥ विमाथंकुर्वंतेवाजसृतः ॥ ४ ॥ इंद्रियस्यावंरुध्यै ॥ अनिंरुक्ताभिःप्रातःसवनेस्तुंवते ॥ अनिंरुक्तः प्रजापंतिः ॥ प्रजापंतेराप्त्यै ॥ वाजंवतीभिर्माध्यंदिने ॥ अन्नंवैवाजः ॥ अन्नमेवावंरुंधे ॥ शिपि विष्ठवंतीभिस्तृतीयसवने ॥ यज्ञोवैविष्णुः ॥ पशवःशिपिः ॥ यज्ञएवपशुषुप्रतिंतिष्ठति ॥ बृहदंत्यंभव ति ॥ अंतमेवैनंꣳश्रियैगंमयति ॥ ५ ॥ अश्वोयादन्नंस्यान्नस्यावंरुध्याइंद्रंस्यत्वासाम्राज्येनाभिषिं चामीत्यांहवाजसृतःशिपिस्त्रीणिंच ॥ ८ ॥ नृषदंत्वेत्यांह ॥ प्रजावैनृन् ॥ प्रजानांमेवैतेनंसूयते ॥ द्रुषदमित्यांह ॥ वनस्पतंयोवैद्रु ॥ वनस्पतींनामेवैतेनंसूयते ॥ भुवनसदमित्यांह ॥ यदावैवसीयान्भ वंति ॥ भुवंनमगन्निति वैतमांहुः ॥ भुवंनमेवैतेनंगच्छति ॥ १ ॥ अप्सुषदंत्वाघृतसदमित्यांह ॥ अ पामेवैतेनंघृतस्यंसूयते ॥ व्योमसदमित्यांह ॥ यदावैवसीयान्भवंति ॥ व्योंमागन्निति वैतमांहुः ॥ व्योंमैवैतेनंगच्छति ॥ पृथिविषदंत्वांतरिक्षसदमित्यांह ॥ एषामेवैतेनंलोकानांꣳसूयते ॥ तस्मांद्वाज

पेययाजीनकंचनप्रत्यवरोहाति ॥ अपांवहिदेवतानांꣳसूयते ॥ २ ॥ नाकसदमित्याह ॥ यदावैव
सोयान्भवति ॥ नाकमगन्निति वैतमाहुः ॥ नाकमेवैतेनगच्छाति ॥ येग्रहाःपंचजनानाइत्याह ॥ पंचज
नानामेवैतेनसूयते ॥ अपाꣳरसमुद्वयसमित्याह ॥ अपामेवैतेनरसंस्यसूयते ॥ सूर्यरश्मिꣳसमाभृतामि
त्याहसशुक्रत्वाय ॥ ३ ॥ गच्छातिसूयतेनवच ॥ ९ ॥ इंद्रोवृत्रꣳहत्वा ॥ असुरान्पराभाव्य ॥ सोमावा
स्यांप्रत्यागच्छत् ॥ तेपितरःपूर्वेद्युरागच्छन् ॥ पितृन्यज्ञोगच्छत् ॥ तंदेवाःपुनरयाचंत ॥ तमेभ्योनपुनर
ददुः ॥ तेब्रुवन्वरंवृणामहै ॥ अथवः पुनर्दास्यामः ॥ अस्मभ्यमेवपूर्वेद्युःक्रियाताइति ॥ १ ॥ तमे
भ्यःपुनरददुः ॥ तस्मात्पितृभ्यःपूर्वेद्युःक्रियते ॥ यत्पितृभ्यःपूर्वेद्युः करोति ॥ पितृभ्यएवतद्यज्ञंनिष्क्री
ययजमानःप्रतनुते ॥ सोमायपितृपीतायस्वधानमइत्याह ॥ पितुरेवाधिसोमपीथमवरुंधे ॥ नहिपि
ताप्रमीयमाणआहैषसोमपीथइति ॥ इंद्रियंवैसोमपीथः ॥ इंद्रियमेवसोमपीथमवरुंधे ॥ तेनेंद्रियेण
द्वितीयांजायामभ्यश्नुते ॥ २ ॥ एतद्वैब्राह्मणंपुरावाजश्रवसाविदामक्रन् ॥ तस्मात्तेद्वेद्वेजायेअभ्या
क्षत ॥ यएवंवेद ॥ अभिद्वितीयांयजामश्नुते ॥ अग्नयेकव्यवाहनायस्वधानमइत्याह ॥ यएवपितृणा
मग्निः ॥ तंप्रीणाति ॥ तिस्रआहुतीर्जुहोति ॥ त्रिर्निदधाति ॥ षट्संपद्यंते ॥ ३ ॥ षड्वाऋतवः ॥
ऋतूनेवप्रीणाति ॥ तूष्णीमेक्षणमादधाति ॥ अस्तिवाहिषष्ठऋतुर्नवा ॥ देवान्वैपितृन्प्रीतान् ॥ मनु

ष्यांः पितरोनुप्रपिपंते ॥ तिस्रआहुतीर्जुहोति ॥ त्रिर्निदंधाति ॥ षट्संपंद्यंते ॥ षड्वाऋतवंः ॥ ४ ॥ ऋतवःखलुवैदेवाःपितरंः ॥ ऋतूनेवदेवान्पितॄन्प्रीणाति ॥ तान्प्रीतान् ॥ मनुष्यांःपितरोनुप्रपिंपते ॥ सकृदाच्छिन्नंबर्हिर्भवति ॥ सकृदिंवहिपितरंः ॥ त्रिर्निदंधाति ॥ तृतीयेवाइतोलोकेपितरंः ॥ तानेवप्रीणाति ॥ पराङावर्त्तते ॥ ५ ॥ ह्लीकाहिपितरंः ॥ ओष्मणोव्यावृतउपांस्ते ॥ ऊष्मभागाहिपितरंः ॥ ब्रह्मवादिनोवदंति ॥ प्राश्यां ३ नप्राश्यां ३ मिर्तिं ॥ यत्प्रांश्नीयात् ॥ जन्यमन्नमद्यात् ॥ प्रमायुक स्यात् ॥ यंनप्राश्नीयात् ॥ अहविःस्यात् ॥ ६ ॥ पितृभ्यआवृंश्च्येत ॥ अवघ्रेयमेव ॥ तन्नेवप्राशितंनेवाप्राशितं ॥ वीरंवावैपितरःप्रयंतोहरंति ॥ वीरंवांददति ॥ दशांच्छिनत्ति ॥ हरंणभागाहिपितरंः ॥ पितॄनेवनिरवदयते ॥ उत्तरआयुंषिलोमंछिंदीत ॥ पितॄणांह्येतर्ह्निनेदीयः ॥ ७ ॥ नमंस्करोति ॥ नमस्कारोहिपितॄणां ॥ नमोवःपितरोरसाय ॥ नमोवःपितरःशुष्माय ॥ नमोवःपितरोजीवाय ॥ नमोवःपितरःस्वधायै ॥ नमोवःपितरोमन्यवें ॥ नमोवःपितरोघोराय ॥ पितंरोनमोवः ॥ यएतस्मिंन्लोकेस्थ ॥८॥ युष्मा्ँस्तेनु ॥ येस्मिन्लोके ॥ मांतेनु ॥ यएतस्मिंन्लोकेस्थ ॥ यूयंतेषांवसिंष्ठाभूयास्त ॥ येस्मिन्लोके ॥ अहंतेषांवसिंष्ठोभूयासमित्यांह ॥ वसिंष्ठःसमानानांभवति ॥ यएवंविद्वान्पितॄ

भ्यंःकरोतिं ।। एषवैमंनुष्याणांयज्ञः ।।९।। देवानांवाइतंरेयज्ञाः ॥ तेनवाएततिंपतृलोकेचंरति ॥ यत्पितृ
भ्यंःकरोतिं ॥ सईश्वरःप्रमेंतोः ॥ प्राजापत्ययर्चापुनैरैतिं ॥ यज्ञोवैप्रजापंतिः ॥ यज्ञेनैवसहपुनैरैतिं ॥
नप्रमायुंकोभवति ॥ पितृलोकेवाएतद्यजमानश्चरति ॥ यत्पितृभ्यंःकरोतिं ॥ सईश्वरआर्तिमार्तोः ॥ प्र
जापंतिस्त्वावैनंततउन्नेंतुमर्हतीत्यांहुः ॥ यत्प्राजापत्ययर्चापुनैरैतिं ॥ प्रजापतिरेवैनंततउन्नयति ॥ ना
र्तिमार्च्छंतियजमानः ॥ १० ॥ इत्यंश्रुतेपद्यंतेपद्यंतेषड्वाऋतवोंवर्त्ततेहंविस्यान्नेदीयस्थयज्ञोयजमानश्च
रतियत्पितृभ्यंःकरोतिपंचंच ॥ १० ॥ देवासुरादेवावैयथादर्शदेवावैयदन्यैर्ग्रहैर्ब्रह्मवादिनोनाग्निष्टोमो
नसावित्रंदेवस्याहंताप्यंंस्सप्तान्नंहोमान्नृषदंत्वेंद्रोंवृत्रंंहत्वादशं ॥ १० ॥ देवासुरावाज्येवैनंतस्मांद्वाज
पेययाजीदेवस्याहंवाजस्यावंरुध्याइंद्रियमेवास्मिल्हीकाहिपितरःपंचषष्टिः ॥ ६५ ॥ ॥ हरिःॐम् ॥
॥ उभयेवाएतेप्रजापतेरध्यंसृज्यंत ॥ देवाश्चासुराश्च ॥ तांनव्यंजानात् ॥ इमेंन्यइमेंन्यइतिं ॥ सदेवा
नंंशूनंकरोत् ॥ तानभ्यंषुणोत् ॥ तान्पवित्रेंणापुनात् ॥ तान्परस्तात्पवित्रंस्यव्यंगृह्णात् ॥ तेग्रहांअभ
वन् ॥ तद्ग्रहाणांग्रहत्वं ॥ १ ॥ देवतावाएतायजमानस्यगृहेगृह्यंते ॥ यद्ग्रहाः ॥ विदुरेनंदेवाः ॥ य
स्यैवंविदुषएतेग्रहागृह्यंते ॥ एषावैसोमस्याहुतिः ॥ यदुपांंशुः ॥ सोमेंनदेवांंस्तर्पयाणोतिखलुवैसो

मेनयजते ॥ यदुपाꣳशुंजुहोति ॥ सोमेनैवतद्देवाꣳस्तर्पयाति ॥ यद्ग्रहांजुहोति ॥ २ ॥ देवाएवतद्दे वान्गंछंति ॥ यच्चमसांजुहोति ॥ तेनैवानुरूपेणयजमानःसुवर्गंलोकमेति ॥ किन्वेंतदग्रआसीदित्या हुः ॥ यत्पात्राणीति ॥ इयंवाएतदग्रआसीत् ॥ मृन्मयांनिवाएतान्यासन् ॥ तैर्देवानव्यावृतमगच्छन् ॥ तएतानिदारुमयाणिपात्राण्यपश्यन् ॥ तान्यकुर्वत ॥ ३ ॥ तैर्वैतेव्यावृतमगच्छन् ॥ यद्दारुमयाणिपा त्राणिभवंति ॥ व्यावृतमेवतैर्यजमानोगच्छति ॥ यानिदारुमयाणिपात्राणिभवंति ॥ अमुमेवतैर्लोकम भिजयति ॥ यानिमृन्मयानि ॥ इममेवतैर्लोकमभिजयाति ॥ ब्रह्मवादिनोवदंति ॥ काश्वतस्रःस्थाली र्वायव्याःसोमग्रहणीरिति ॥ देवावैपृश्निमदुहन् ॥ ४ ॥ तस्यांएतेस्तनाआसन् ॥ इयंवैपृश्निः ॥ तामा दित्याआदित्यस्थाल्याचतुष्पदःपशूनदुहन् ॥ यदादित्यस्थालीभवंति ॥ चतुष्पदएवतयापशून्यजमा नइमांदुहे ॥ तामिंद्रउक्थ्यस्थाल्येंद्रियमदुहत् ॥ यदुक्थ्यस्थालीभवति ॥ इंद्रियमेवतयायजमानइ मांदुहे ॥ तांविश्वेदेवाआग्रयणस्थाल्योर्जमदुहन् ॥ यदाग्रयणःस्थालीभवंति ॥ ५ ॥ ऊर्जमेवतयाय जमानइमांदुहे ॥ तांमनुष्याध्रुवस्थाल्यायुरदुहन् ॥ यद्ध्रुवस्थालीभवंति ॥ आयुरेवतयायजमानइमां दुहे ॥ स्थाल्यागृह्णाति ॥ वायव्येनजुहोति ॥ तस्मादन्येनपात्रेणपशूंदुहंति ॥ अन्येनप्रतिगृह्णंति ॥

अथोव्यावृतमेवतद्यजमानोगच्छति ॥ ६ ॥ ग्रहत्वंग्रहान्जुहोत्यंकुर्वताद्धुह्नाग्रयणस्थालीभवंतिनवं
च ॥ १ ॥ युवꣳसुराममश्विना ॥ नमुचावासुरेसचा ॥ विपिपानाशुभस्पती ॥ इंद्रंकर्मस्वावतं ॥
पुत्रमिवपितरावश्विनोभा ॥ इंद्रावतंकर्मणादꣳसनाभिः ॥ यत्सुराम्व्यपिबःशचीभिः ॥ सरस्वतीत्वामघ
वन्नभीष्णात् ॥ अहाव्यग्नेहविरास्येते ॥ स्रुचीवघृतंचमूइवसोमः ॥ १ ॥ वाजसनिꣳरयिमस्मेसुवीरं
॥ प्रशस्तंवोहियशसंबृहंतं ॥ यस्मिन्नश्वासऋषभासउक्षणः ॥ वशामेषाअवसृष्टासआहुताः ॥ कीला
लपेसोमपृष्ठायवेधसे ॥ त्हदामतिंजनयचारुमग्नये ॥ नानाहिवांदेवहितꣳसदोमितं ॥ मासꣳसृक्षाथां
परमेव्योमन् ॥ सुरात्वमसिशुष्मिणीसोमएषः ॥ मामाहिꣳसीःस्वांयोनिमाविशन् ॥ २ ॥ यदत्रशि
ष्टꣳरसिनःसुतस्य ॥ यदिंद्रोअपिबच्छचीभिः ॥ अहंतदस्यमनसाशिवेन ॥ सोमꣳराजानमिहभक्षया
मि ॥ द्वेस्रुतीअशृणवंपितृणां ॥ अहंदेवानामुतमर्त्यानां ॥ ताभ्यामिदंविश्वंभुवनꣳसमेति ॥ अंतरा
पूर्वमपरंचकेतुम् ॥ यस्तेदेववरुणगायत्रच्छंदाःपाशः ॥ तंतएतेनावयजे ॥ ३ ॥ यस्तेदेववरुणत्रिष्टुप
च्छंदाःपाशः ॥ तंतएतेनावयजे ॥ यस्तेदेववरुणजगतीच्छंदाःपाशः ॥ तंतएतेनावयजे ॥ सोमोवा
एतस्यराज्यमादत्ते ॥ योराजासन्राज्योवासोमेनयजते ॥ देवसुवामेतानिहवीꣳषिभवंति ॥ एतावंतो

वैदेवानांꣳसवाः ॥ तएवास्मैसवान्प्रयच्छंति ॥ तएनंपुनःसुवंतेराज्याय ॥ देवसूराजाभवति ॥ ४ ॥ सोमंआविशन्यंजेराज्यायैकंच ॥ २ ॥ उदस्थाद्देव्यदितिर्विश्वरूपी ॥ आयुर्यज्ञपतावधात् ॥ इंद्राय कृण्वतीभागं ॥ मित्रायवरुणायच ॥ इयंवाअग्निहोत्री ॥ इयंवाएतस्यनिषीदति ॥ यस्याग्निहोत्री निषीदति ॥ तामुत्थापयेत् ॥ उदस्थाद्देव्यदितिरिति ॥ इयंवैदेव्यदितिः ॥ १ ॥ इमामेवास्माउत्थापय ति ॥ आयुर्यज्ञपतावधादित्याह ॥ आयुरेवास्मिन्दधाति ॥ इंद्रायकृण्वतीभागंमित्रायवरुणायचेत्याह ॥ यथायजुरेवैतत् ॥ अवार्त्तिवाएषैतस्यपाप्मानंप्रतिख्यायनिषीदति ॥ यस्याग्निहोत्र्युपसृष्टानिषीदति ॥ तांदुग्ध्वाब्राह्मणायदद्यात् ॥ यस्यान्ननाद्यात् ॥ अवार्तिमेवास्मिन्पाप्मानंप्रतिमुंचति ॥ २ ॥ दुग्ध्वा ददाति ॥ नह्यदुष्टादक्षिणादीयते ॥ पृथिवींवाएतस्यपयःप्रविशति ॥ यस्याग्निहोत्रंदुह्यमानꣳस्कंदति यदद्यदुग्धंपृथिवीमसक्त ॥ यदोषधीरप्यसरद्यदापः ॥ पयोगृहेषुपयोअघ्नियासु ॥ पयोवत्सेषुपयोअ स्तुतन्मयीत्याह ॥ पयएवात्मन्गृहेषुपशुषुधत्ते ॥ अपउपसृजति ॥ ३ ॥ अद्भिरेवैनदाप्नोति ॥ यो वैयज्ञस्यार्तेनानार्त्तꣳसꣳसृजति ॥ उभेवैतेतर्ह्यार्च्छतः ॥ आर्च्छतिखलुवाएतदग्निहोत्रं ॥ यद्दुह्यमा

नꣳस्कंदति ॥ यदभिदुह्यात् ॥ आर्त्तेनानार्त्तयज्ञस्यसꣳसृजेत् ॥ तदेवयाद्दक्रीदृक्कंहोतव्यं ॥ अथान्यां दुग्ध्वापुनर्होतव्यं ॥ अनार्त्तेनैवार्त्तयज्ञस्यनिष्कंरोति॥४॥यद्दुग्धंतस्यस्कंदेत् ॥ यत्ततोहुत्वापुनरेयात् ॥ यज्ञं विच्छिंद्यात् ॥ यत्रस्कंदेत् ॥ तन्निषद्यपुनर्गृह्णीयात् ॥ यत्रैवस्कंदति ॥ ततएवैनत्पुनर्गृह्णाति ॥ तदेवयाद्द क्रीदृक्कंहोतव्यं ॥ अथान्यांदुग्ध्वापुनर्होतव्यं ॥ अनार्त्तेनैवार्त्तयज्ञस्यनिष्कंरोति ॥ ५ ॥ विवाएतस्यय ज्ञश्छिंद्यते ॥ यस्यांग्निहोत्रेधिश्रितेश्वांतराधावति ॥ रुद्रःखलुवाएषः ॥ यदग्निः ॥ यद्गामन्वर्त्तयावर्त्तये त् ॥ रुद्रायपशूनपिंदध्यात् ॥ अपशुर्यजमानःस्यात् ॥ यदपोन्वतिषिंचेत् ॥ अनाद्यमग्नेरापः ॥ अना द्यमांभ्यामपिंदध्यात् ॥ गार्हपत्याद्भस्मादाय ॥ इदंविष्णुर्विचंक्रमइतिवैष्णव्यर्चाहवनीयाध्वꣳसयन्नुद्द्र वेत् ॥ यज्ञोवैविष्णुः ॥ यज्ञेनैवयज्ञꣳसंतनोति ॥ भस्मनापदमपिंवपतिशांत्यै ॥ ६ ॥ वैदेव्यदितिर्मु चतिसृजतिकरोतिकरोत्याभ्यामपिंदध्यात्पंचच ॥ ३ ॥ निवाएतस्याहवनीयोगार्हपत्यंकामयते ॥ नि गार्हपत्यआहवनीयं ॥यस्याग्निमनुद्धृतꣳसूर्योभिनिम्रोचति ॥ दर्भेणहिरण्यंप्रबध्यपुरस्ताद्धरेत् ॥ अथाग्निं॥ अथाग्निहोत्रं ॥यद्धिरण्यंपुरस्ताद्धरति ॥ ज्योतिर्वैहिरण्यं॥ ज्योतिरेवैनंपश्यन्नुद्धरति ॥ यदग्निपूर्वꣳहरत्यथा ग्निहोत्रम् ॥ १ ॥ भागधेयेनैवैनंप्रणयति ॥ ब्राह्मणआर्षेयउद्धरेत् ॥ ब्राह्मणोवैसर्वादेवताः ॥ सर्वाभि

कृ०य० ॥२५॥

रेवैनंदेवताभिरुद्धरति ॥ अग्निहोत्रमुपसाद्यातमितोरासीत ॥ व्रतमेवहूतमनुम्रियते ॥ अंतंवाएषआत्म
नोगच्छति ॥ यस्ताम्यंति ॥ अंतमेषयज्ञस्यगच्छति ॥ यस्याग्निमनुद्धृतꣳसूर्योभिनिम्रोचति ॥ २ ॥
पुनःसमन्यंजुहोति ॥ अंतेनैवांतंयज्ञस्यनिष्करोति ॥ वरुणोवाएतस्ययज्ञंगृह्णाति ॥ यस्याग्निमनुद्धृतꣳ
सूर्योभिनिम्रोचति ॥ वारुणंचरुंनिर्वपेत् ॥ तेनैवयज्ञंनिष्क्रीणीते ॥ निवाएतस्याहवनीयोगार्हपत्यं
कामयते ॥ निगार्हपत्यआहवनीयं ॥ यस्याग्निमनुद्धृतꣳसूर्योभ्युदेति ॥ चतुर्गृहीतमाज्यंपुरस्ताद्धरेत् ॥
॥ ३ ॥ अथाग्निं ॥ अथाग्निहोत्रं ॥ यदाज्यंपुरस्ताद्धरति ॥ एतद्वाअग्नेःप्रियंधाम ॥ यदाज्यं ॥ प्रि
येणैवैनंधाम्नासमर्धयति ॥ यदग्निंपूर्वꣳहरत्यथाग्निहोत्रम् ॥ भागधेयेनैवैनंप्रणयति ॥ ब्राह्मणआर्षेय
उद्धरेत् ॥ ब्राह्मणोवैसर्वादेवताः ॥ ४ ॥ सर्वाभिरेवैनंदेवताभिरुद्धरति ॥ पराचीर्वाएतस्मैव्युच्छं
तीर्व्युच्छंति ॥ यस्याग्निमनुद्धृतꣳसूर्योभ्युदेति ॥ उषाःकेतुनाजुषताम् ॥ यज्ञंदेवेभिरन्वितम् ॥ देवे
भ्योमधुमत्तमꣳस्वाहेतिप्रत्यङ्ङिषद्याज्येनजुहुयात् ॥ प्रतीचीमेवास्मैविवासयति ॥ अग्निहोत्रमुपसा
द्यातमितोरासीत ॥ व्रतमेवहूतमनुम्रियते ॥ अंतंवाएषआत्मनोगच्छति ॥ ५ ॥ यस्ताम्यंति ॥ अंत
मेषयज्ञस्यगच्छति ॥ यस्याग्निमनुद्धृतꣳसूर्योभ्युदेति ॥ पुनःसमन्यंजुहोति ॥ अंतेनैवांतंयज्ञस्यनिष्क
रोति ॥ मित्रोवाएतस्ययज्ञंगृह्णाति ॥ यस्याग्निमनुद्धृतꣳसूर्योभ्युदेति ॥ मैत्रंचरुंनिर्वपेत् ॥ तेनैवयज्ञंनि

तै०ब्रा० ॥२५॥

ष्क्रीणीते ॥ यस्याहवनीयेनुद्वातेगार्हपत्यउद्वायेत् ॥ ६ ॥ यदाहवनीयमनुद्वाप्यगार्हपत्यंमंथेत् ॥
विच्छिंद्यात् ॥ भ्रातृव्यमस्मैजनयेत् ॥ यद्वैयज्ञस्यवास्तव्यंक्रियते ॥ तदनुरुद्रोवचरति ॥ यत्पूर्वंनन्ववव
स्येत् ॥ वास्तव्यमग्निमुपासीत ॥ रुद्रोस्यपशून्घातुकःस्यात् ॥ आहवनीयमुद्वाप्यं ॥ गार्हपत्यंमंथेत् ॥
॥ ७ ॥ इतःप्रथमंजज्ञेअग्निः ॥ स्वाद्योनेरधिजातवेदाः ॥ सगायत्रियात्रिष्टुभाजगत्या ॥ देवेभ्योहव्यंवह
तुप्रजानन्निति ॥ छंदोभिरेवैनꣳस्वाद्योनेःप्रजनयति ॥ गार्हपत्यंमंथति ॥ गार्हपत्यंवाअन्वाहिता
ग्नेःपशवउपतिष्ठंते ॥ सयदुद्वायति ॥ तदनुपशवोपक्रामंति ॥ इषेरय्यैरमस्व ॥ ८ ॥ सहसेद्युम्नाय॥
ऊर्जेपत्यायेत्याह ॥ पशवोवैरयिः ॥ पशूनेवास्मैरमयति ॥ सारस्वतौत्वोत्सौसमिंधातामित्याह ॥
ऋक्सामेवैसारस्वतावुत्सौ ॥ ऋक्सामाभ्यामेवैनꣳसमिंधे ॥ सम्राडसिविराडसीत्याह ॥ रथंतरवैसं
म्राट् ॥ बृहद्विराट् ॥ ९ ॥ ताभ्यामेवैनꣳसमिंधे ॥ वज्रोवैचक्रं ॥ वज्रोवाएतस्ययज्ञंविच्छिनत्ति ॥
यस्यानोवारथोवांतराग्नीयाति ॥ आहवनीयमुद्वाप्यं ॥ गार्हपत्यादुद्धरेत् ॥ यदग्नेपूर्वंप्रभृतंपदꣳहिते ॥
सूर्यस्यरश्मीनन्वाततान ॥ तत्ररयिष्ठामनुसंभरैतं ॥ संनःसृजसुमत्यावाजवत्येति ॥ १० ॥ पूर्वेणैवा
स्ययज्ञेनयज्ञमनुसंतनोति ॥ त्वमग्नेसप्रथाअसीत्याह ॥ अग्निःसर्वादेवताः ॥ देवताभिरेवयज्ञꣳसंतनो

ति ॥ अग्नयेपथिकृतेपुरोडाशमष्टाकपालंनिर्वपेत् ॥ अग्निमेवपथिकृतꣳस्वेनभागधेयेनोपधावति ॥ स
एवैनंयज्ञियंपंथामपिनयति ॥ अनड्वान्दक्षिणा ॥ वहीह्येषसमृध्यै ॥ ११ ॥ हरत्यथाग्निहोत्रंनिम्रोचं
तिहरेद्देवतांगच्छत्युद्वायेन्मंथेद्भ्रमस्वबृहद्विराडितिनवंच ॥ ४ ॥ यस्यप्रातःसवनेसोमोतिरिच्यते ॥ मा
ध्यंदिनꣳसवनंकामयमानोभ्यतिरिच्यते ॥ गौर्द्धयतिमरुतामितिधयंद्वतोषुकुर्वीत ॥ द्विनस्तिवैसंध्यधी
तं ॥ संधीवखलुवाएतत् ॥ यत्सवनस्यातिरिच्यते ॥ यद्धयंद्वतोषुकुर्वीत ॥ संधेःशांत्यै ॥ गायत्र
ꣳसामंभवतिपंचदशस्तोमः ॥ तेनैवप्रातःसवनान्नयंति ॥ १ ॥ मरुत्वंतोषुकुर्वीत ॥ तेनैवमाध्यंदिना
त्सवनान्नयंति ॥ होतुश्चमसमनून्नयंते ॥ होतानुशꣳसति ॥ मध्यतएवयज्ञꣳसमादधाति ॥ यस्यमा
ध्यंदिनेसवनेसोमोतिरिच्यते ॥ आदित्यंतृतीयसवनंकामयमानोभ्यतिरिच्यते ॥ गौरिवीतꣳसामंभव
ति ॥ अतिरिक्तंवैगौरिवीतं ॥ अतिरिक्तंयत्सवनस्यातिरिच्यते ॥ २ ॥ अतिरिक्तस्यशांत्यै ॥ बण्महाꣳअसि
सुर्येतिकुर्वीत ॥ यस्यैवादित्यस्यसवनस्यकामेनातिरिच्यते ॥ तेनैवैनंकामेनसमर्धयति ॥ गौरिवीतꣳसामंभव
ति ॥ तेनैवमाध्यंदिनात्सवनान्नयंति ॥ सप्तदशस्तोमः ॥ तेनैवतृतीयसवनान्नयंति ॥ होतुश्चमसमनून्नयंते
॥ होतानुशꣳसति ॥ ३ ॥ मध्यतएवयज्ञꣳसमादधाति ॥ यस्यतृतीयसवनेसोमोतिरिच्येत ॥ उक्थ्यंकु
र्वीत ॥ यस्योक्थ्योतिरिच्येत ॥ अतिरात्रंकुर्वीत ॥ यस्यातिरात्रेतिरिच्यते ॥ तत्वैदुष्प्रज्ञानम् ॥ यजं

मानंवाएतत्पशवंआसाद्यंयंति ॥ बृहत्सामंभवति॥बृहद्वाइमान्लोकान्दाधार ॥ बार्हताःपशवः ॥ बृहतैवास्मैपशून्दाधार ॥ शिपिविष्टवंतीषुकुर्वंति ॥ शिपिविष्टोवैदेवानांपुष्टं ॥ पुष्टयैवैनंसमर्धयंति ॥ होतुश्चमसमनुन्नयंते ॥ होतानुशंसति ॥ मध्यतएवयज्ञंसमादधाति ॥ ४ ॥ यंतियत्सवनस्यातिरिच्यंतेशंसतिदाधाराष्टौचं ॥ ५ ॥ एकैकोवैजनतायामिंद्रः ॥ एकंवाएताविंद्रमभिसंसुनुतः ॥ यौद्वौसंसुनुतः ॥ प्रजापतिर्वाएषवितायते ॥ यद्यज्ञः॥तस्यग्रावाणोदंताः ॥ अन्यतरंवाएतेसंसुन्वतोर्निर्बप्सति ॥ पूर्वेणोपसृत्यांदेवताइत्यांहुः॥ ॥ पूर्वोपसृतस्यवैश्रेयान्भवति ॥ एतिवंत्याज्यानिभवंत्यभिजित्यै ॥ १ ॥ मरुत्वतीःप्रतिपदः ॥ मरुतोवैदेवानामपराजितमायतनं ॥ देवानामेवापराजितआयतनेयतते ॥ उभेबृहद्रथंतरेभवतः॥ इयंवावरथंतरं ॥ असौबृहत् ॥ आभ्यामेवैनमंतरेति ॥ वाचश्चमनसश्च ॥ प्राणाच्चापानाच्च ॥ दिवश्चपृथिव्याश्च ॥ २ ॥ सर्वस्माद्वित्ताद्द्वेयात् ॥ अभिवर्तोब्रह्मसामंभवति ॥ सुवर्गस्यलोकस्याभिवृत्यै ॥ अभिजिद्भवति ॥ सुवर्गस्यलोकस्याभिजित्यै ॥ विश्वजिद्भवति ॥ विश्वस्यजित्यै ॥ यस्यभूयांसोयज्ञक्रतवइत्यांहुः ॥ सदेवतावृंक्तइति ॥ यद्यग्निष्टोमःसोमःपरस्तात्स्यात् ॥ ३ ॥ उक्थ्यंकुर्वीत ॥ यद्युक्थ्यस्यात् ॥ अतिरात्रंकुर्वीत ॥ यज्ञक्रतुभिरेवास्यदेवतावृंक्ते ॥ योवैच्छंदोभिरभिभवं

ति ॥ ससꣳसुन्वतोरभिभंवति ॥ संवेशायंत्वोपवेशायत्वेत्यांह ॥ च्छंदाꣳसिवैसंवेशउपवेशः ॥ छंदोंभिरेवास्यच्छंदाꣳस्यभिभंवति ॥ इष्टर्गोवाऋत्विजामध्वर्युः ॥ ४ ॥ इष्टर्गःखलुवैपूर्वोर्ष्टुःक्षीयते ॥ प्राणांपानौमृत्योर्मीपातमित्यांह ॥ प्राणापानयोरेवश्रयंते ॥ प्राणांपानौमामांहासिष्टमित्यांह ॥ नैनं पुरायुंषप्राणापानौजंहितः ॥ आर्तिंवाएतेनियंति ॥ येषांदीक्षितानांप्रमीयंते ॥ तंयदंवर्जेयुः ॥ क्रूरकृतामिवैषांलोक स्यांत् ॥ आहरदहेतिंब्रूयात् ॥ ५ ॥ तंदंक्षिणतोवेद्यैनिधायं ॥ सर्पराज्ञियाऋग्भिस्तुंयुः ॥ इयंवैसर्पतोराज्ञीं ॥ अस्याएवैनंपरिंददाति ॥ व्यृंद्धतदित्यांहुः ॥ यत्स्तुतमनंनुशस्तमितिं ॥ होतांप्रथमःप्रांचीनावीतीमांर्जालीयंपरींयात् ॥ यामोरंनुब्रुवन् ॥ सर्पराज्ञीनांकीर्त्तयेत् ॥ उभयोरेवैनंलोकयोःपरिंददाति ॥ ६ ॥ अथोंधुवंत्येवैनं ॥ अथोन्येंबास्मैह्नुवते ॥ त्रिःपरियंति त्रयंइमेलोकाः ॥ एभ्यएवैनंलोकेभ्योंधुवते ॥ त्रिःपुनःपरियंति ॥ षट्संपंद्यंते ॥ षड्वाऋतवः ॥ ऋतुभिरेवैनंधुवते ॥ अग्नआयूंꣳषिपवसइतिप्रतिपदंकुर्वीरन् ॥ रथंतरसांमैषाꣳसोमंस्यात् ॥ आयुरेवात्मन्दंधते ॥ अथोंपाप्मानंमेवविजहंतोयंति ॥ ७ ॥ अभिजित्यैपृथिव्याश्वस्यादध्वर्युर्ब्रूयाल्लोकयोःपरिंददातिकुर्वीरꣳस्त्रोणिंच ॥ ६ ॥ असुर्यंवाएतस्माद्वर्णंकृत्वा ॥ पशवोवीर्यंमपक्रामंति ॥ यस्ययूपोविरोहंति ॥ त्वाष्ट्रं

बहुरूपमालभेत ॥ त्वष्टावैरूपाणामीशे ॥ यएवरूपाणामीशे ॥ सोऽस्मिन्पशून्वीर्यंयच्छति ॥ नास्मा
त्पशवोवीर्यमपक्रामंति ॥ आर्त्तिवाएतानियंति ॥ येषांदीक्षितानामग्निरुद्वायति ॥ १ ॥ यदाहवनीय
उद्वायेत् ॥ यत्तंमंथेत् ॥ विच्छिंद्यात् ॥ भ्रातृव्यमस्मैजनयेत् ॥ यदाहवनीयउद्वायेत् ॥ आग्नीध्रादुद्धरे
त् ॥ यदाग्नीध्रउद्वायेत् ॥ गार्हपत्यादुद्धरेत् ॥ यद्गार्हपत्यउद्वायेत् ॥ अतएवपुनर्मंथेत् ॥ २ ॥ अ
त्रवावसनिलयते ॥ यत्रखलुवैनिलीनमुत्तमंपश्यंति ॥ तदेनमिच्छंति ॥ यस्माद्दारोरुद्वायेत् ॥ तस्या
रणीकुर्यात् ॥ क्रुमुकमपिकुर्यात् ॥ एषावाअग्नेःप्रियातनूः ॥ यत्क्रुमुकः ॥ प्रिययैवैनंतनुवासमर्धयति
गार्हपत्यंमंथति ॥ ३ ॥ गार्हपत्योवाअग्नेर्योनिः ॥ स्वादेवैनंयोनेर्जनयति ॥ नास्मैभ्रातृव्यंजनय
ति ॥ यस्यसोमउपदस्येत् ॥ सुवर्णꣳहिरण्यंद्वेधाविच्छिद्य ॥ ऋजीषेऽन्यदाधूनुयात् ॥ जुहुयादन्य
त् ॥ सोममेवाभिषुणोति ॥ सोमंजुहोति ॥ सोमस्यवाअभिषूयमाणस्यप्रियातनूरुदक्रामत् ॥ ४ ॥
तत्सुवर्णꣳहिरण्यमभवत् ॥ यत्सुवर्णꣳहिरण्यंकुर्वंति ॥ प्रिययैवैनंतनुवासमर्धयंति ॥ यस्याक्रीतꣳसो
ममपहरेयुः ॥ क्रीणीयादेव ॥ सैवततःप्रायश्चित्तिः ॥ यस्यक्रीतमपहरेयुः ॥ आदाराꣳश्चफाल्गुनानिचा
भिषुणुयात् ॥ गायत्रीयꣳसोममाहरत् ॥ तस्ययोऽꣳशुःपरापतत् ॥ ५ ॥ तआदाराअभवन् ॥ इंद्रो

वृत्रमंहन् ॥ तस्यंवल्कःपरापतत् ॥ तानिंफाल्गुनान्यंभवन् ॥ पशवोवैफाल्गुनानि ॥ पशवःसोमोराजा ॥ यदांदाराश्श्चफाल्गुनानिंचाभिषुणोतिं॥सोमंमेवराजांनमभिषुणोति ॥ शृतेनंप्रातःसवनेश्रीणीयात् ॥ दध्ना मध्यंदिने ॥६॥ नीतमिश्रेणंतृतीयसवने ॥ अग्निष्टोमःसोमंस्याद्रथंतरसांमा ॥ यएवर्त्विजोवृतास्युः॥ तएनं याजयेयुः ॥ एकांगांदक्षिणांदद्यात्तेभ्यंएव ॥ पुनःसोमंक्रोणीयात् ॥ यज्ञेनैवतद्यज्ञमिच्छति ॥ सैवतत प्रायश्चित्तिः ॥ सर्वाभ्योवाएषदेवताभ्यःसर्वेभ्यःपृष्ठेभ्यंआत्मानमागुरते ॥ यःसत्रायांगुरते ॥ एतावा न्खलुवैपुरुषः ॥ यावदस्यवित्तं ॥ सर्ववेदसेनंयजेत ॥ सर्वपृष्ठोस्यसोमःस्यात् ॥ सर्वाभ्यएवदेवताभ्यः सर्वेभ्यःपृष्ठेभ्यंआत्मानंनिष्क्रीणीते ॥७॥ उद्वायंतिमंथेन्मंथत्यक्रामत्परापंतन्मध्यंदिंनआगुरतेपंचंच॥७॥

पवमानःसुवर्जनः ॥ पवित्रेणविचर्षणिः ॥ यःपोतासपुंनातुमा ॥ पुनंतुमादेवजनाः ॥ पुनंतुमनवोधिया ॥ पुनंतुविश्वंआयवः ॥ जातवेदःपवित्रंवत् ॥ पवित्रेणपुनाहिमा ॥ शुक्रेणंदेवदीद्यंत् ॥ अग्नेक्रत्वाक्रतू १रनु ॥ यत्तेंपवित्रमर्चिषि ॥ अग्नेवितंतमंतरा ॥ ब्रह्मतेनंपुनीमहे ॥ उभाभ्यांदेवसवितः ॥ पवित्रेणसवे नच ॥ इदंब्रह्मपुनीमहे ॥ वैश्वदेवीपुनतीदेव्यागात् ॥ यस्यैवह्वीस्तनुवोवीतपृष्ठाः ॥ तयामदंतःसधमाद्ये षु ॥ वयःस्यामपतंयोरयीणां ॥ २ ॥ वैश्वानरोरश्मिभिर्मापुनातु ॥ वातःप्राणेनेषिरोमयोभूः ॥ द्या

वांपृथिवीपयंसापयोभिः ॥ ऋतावंरीयज्ञियेंमापुनीतां ॥ बृहद्भिंःसवितस्तृभिंः ॥ वर्षिष्ठैर्देवमन्मंभिः ॥ अग्नेदक्षैंःपुनाहिमा ॥ येनंदेवाअपुंनत ॥ येनापोंदिव्यंकशंः ॥ तेनंदिव्येनब्रह्मंणा ॥ ३ ॥ इदंब्रह्मं पुनीमहे ॥ यःपांवमानीरध्येतिं ॥ ऋषिंभिःसंभृंतरसं ॥ सर्वंसपूतमंश्नाति ॥ स्वदितंमांतारिश्वंना ॥ पावमानीर्योअध्येतिं ॥ ऋषिंभिःसंभृंतरसं ॥ तस्मैसरंस्वतीदुहे ॥ क्षीरंसर्पिर्मधूदकम् ॥ पावमा नीःस्वस्त्ययंनीः ॥ ४ ॥ सुदुघाहिपयंस्वतीः ॥ ऋषिंभिःसंभृंतोरसंः ॥ ब्राह्मणेष्वमृतंहितं ॥ पा वमानीर्दिशंतुनः ॥ इमन्लोकमथोंअमुं ॥ कामान्त्समंर्धयंतुनः ॥ देवीर्देवैःसमाभृंताः ॥ पावमानीःस्व स्त्ययंनीः ॥ सुदुघाहिघृंतश्चुतंः ॥ ऋषिंभिःसंभृंतोरसंः ॥ ५ ॥ ब्राह्मणेष्वमृतंहितं ॥ येनंदेवाः पवित्रेंण ॥ आत्मानंपुनतेसदां ॥ तेनंसहस्रंधारेण ॥ पावमान्यःपुंनंतुमा ॥ प्राजापत्यंपवित्रं ॥ श तोद्यांमहिरण्मयं ॥ तेनंब्रह्मविदोंवयं ॥ पूतंब्रह्मंपुनीमहे ॥ इंद्रंःसुनीतोसहमांपुनातु ॥ सोमंःस्व स्त्यावरुंणःसमीच्यां ॥ यमोराजांप्रमृणाभिंःपुनातुमा ॥ जातवेंदामोर्जयंत्यापुनातु ॥ ६ ॥ अनुरयो णांब्रह्मंणास्वस्त्ययंनीःसुदुघाहिघृंतश्चुतऋषिंभिःसंभृंतोरसंःपुनातुत्रीणिंच ॥ ७ ॥ प्रजावैसत्रमांसततप रतप्यंमानाअजुह्वतीः ॥ देवाअंपश्यंचमसंघृतस्यंपूर्णंस्वधां ॥ तमुपोदंतिष्ठंतमंजुहवुः ॥ तेनार्धमासऊर्जम

वारुंधत ॥ तस्मादर्धमासे देवा इज्यंते ॥ पितरोऽपश्यंचमसं घृतस्य पूर्णꣳ स्वधां ॥ तमुपोदतिष्ठं तमजुहवुः ॥ तेनेमा
स्यूर्जमवारुंधत ॥ तस्मान्मासि पितृभ्यः क्रियते ॥ मनुष्या अपश्यंचमसं घृतस्य पूर्णꣳ स्वधां ॥ १ ॥ तमुपो
दतिष्ठंतमजुहवुः ॥ तेनद्वयीमूर्जमवारुंधत ॥ तस्माद्विरह्नो मनुष्येभ्य उपह्रियते ॥ प्रातश्च सायंच ॥
पशवोऽपश्यंचमसं घृतस्य पूर्णꣳ स्वधां ॥ तमुपोदतिष्ठंतमजुहवुः ॥ तेनत्रयीमूर्जमवारुंधत ॥ तस्मात्त्रिर
ह्नः पशवः प्रेरते ॥ प्रातः संगवे सायं ॥ असुरा अपश्यंचमसं घृतस्य पूर्णꣳ स्वधां ॥ २ ॥ तमुपोदतिष्ठंत
मजुहवुः ॥ तेन संवत्सर ऊर्जमवारुंधत ॥ ते देवा अमन्यंत ॥ अमी वा इदमभूवन् ॥ यद्वयꣳ स्मइति ॥
त एतानि चातुर्मास्यान्यपश्यन् ॥ तानि निरवपन् ॥ तैरेवैषां तामूर्जमवृंजत ॥ ततो देवा अभवन् ॥ परासु
राः ॥ ३ ॥ यद्यजंते ॥ यामेव देवा ऊर्जमवारुंधत ॥ तां तेनावरुंधे ॥ यत्पितृभ्यः करोति ॥ यामेव पि
तर ऊर्जमवारुंधत ॥ तां तेनावरुंधे ॥ यदावसथेन्नꣳ हरंति ॥ यामेव मनुष्या ऊर्जमवारुंधत ॥ तां तेनावरुंधे
यद्दक्षिणां ददाति ॥ ४ ॥ यामेव पशव ऊर्जमवारुंधत ॥ तां तेनावरुंधे ॥ यच्चातुर्मास्यैर्यजंते ॥ यामेवासु
रा ऊर्जमवारुंधत ॥ तां तेनावरुंधे ॥ भवत्यात्मना ॥ परास्य भ्रातृव्यो भवति ॥ विराजो वा एषा विक्रांतिः
यच्चातुर्मास्यानि ॥ वैश्वदेवेनास्मिन्लोके प्रत्यतिष्ठत् ॥ वरुणप्रघासैरंतरिक्षे ॥ साकमेधैरमुष्मिन्लोके ॥

एषहत्वावैतत्सर्वंभवति ॥ यएवंविद्वाꣳश्चांतुर्मास्यैर्यजंते ॥ ५ ॥ मनुष्याअपश्यंचमसंघृतस्यंपूर्णꣳ
स्वधामसुराअपश्यंचमसंघृतस्यंपूर्णꣳस्वधामसुराददात्यातिष्ठच्चत्वारिंच ॥ ९ ॥ अग्निर्वावसंवत्सरः ॥
आदित्यःपरिवत्सरः ॥ चंद्रमाइदावत्सरः ॥ वायुरनुवत्सरः ॥ यद्वैश्वदेवेनयजंते ॥ अग्निमेवतत्संव
त्सरमाप्नोति ॥ तस्माद्वैश्वदेवेनयजमानः ॥ संवत्सरीणाꣳस्वस्तिमाशास्तइत्याशासीत ॥ यद्वरुणप्रघा
सैर्यजंते ॥ आदित्यमेवतत्परिवत्सरमाप्नोति ॥ १ ॥ तस्माद्वरुणप्रघासैर्यजमानः ॥ परिवत्सरीणाꣳस्व
स्तिमाशास्तइत्याशासीत ॥ यत्साकमेधैर्यजंते ॥ चंद्रमसमेवतदिदावत्सरमाप्नोति ॥ तस्मात्साकमेधै
र्यजमानः ॥ इदावत्सरीणाꣳस्वस्तिमाशास्तइत्याशासीत ॥ यत्पितृयज्ञेनयजंते ॥ देवानेवतदन्ववं
स्याति ॥ अथवाअस्यवायुश्चानुवत्सरश्चाप्रीतावुच्छिष्येते ॥ यच्छुनासीरीयेणयजंते ॥ २ ॥ वायु
मेवतदनुवत्सरमाप्नोति ॥ तस्माच्छुनासीरीयेणयजमानः ॥ अनुवत्सरीणाꣳस्वस्तिमाशास्तइत्याशा
सीत ॥ संवत्सरंवाएषईप्सतीत्याहुः ॥ यश्चातुर्मास्यैर्यजतइति ॥ एषहत्वैसंवत्सरमाप्नोति ॥ यएवं
विद्वाꣳश्चातुर्मास्यैर्यजंते ॥ विश्वेदेवाःसमयजंत ॥ तेऽग्निमेवायजंत ॥ तएतंलोकमजयन् ॥ ३ ॥ य
स्मिन्नग्निः ॥ यद्वैश्वदेवेनयजंते ॥ एतमेवलोकंजयति ॥ यस्मिन्नग्निः ॥ अग्नेरेवसायुज्यमुपैति ॥ य
दावैश्वदेवेनयजंते ॥ अथसंवत्सरस्यगृहपतिमाप्नोति ॥ यदासंवत्सरस्यगृहपतिमाप्नोति ॥ अथसह

स्त्रयाजिनमाप्नोति ॥ यदासहस्त्रयाजिनमाप्नोति ॥ ४ ॥ अथगृहमेधिनमाप्नोति ॥ यदागृहमेधिनं
माप्नोति ॥ अथाग्निर्भवति ।। यदाग्निर्भवति ॥ अथगौर्भवति ॥ एषावैवैश्वदेवस्यमात्रा ॥ एतद्वाए
तेषामवमं ॥ अतोतोवाउत्तराणिश्रेयाꣳसिभवंति ॥ यद्विश्वेदेवाःसमयजंत ॥ तद्वैश्वदेवस्यवैश्वदेव
त्वं ॥ ५ ॥ अथादित्योवरुणꣳराजानंवरुणप्रघासैरयजत ॥ सएतंलोकमजयत् ॥ यस्मिन्नादित्यः ॥
यद्वरुणप्रघासैर्यजंते ॥ एतमेवलोकंजयति ॥ यस्मिन्नादित्यः ॥ आदित्यस्यैवसायुज्यमुपैति ॥ यदा
दित्योवरुणꣳराजानंवरुणप्रघासैरयजत ॥ तद्वरुणप्रघासानांवरुणप्रघासत्वं ॥ अथसोमोराजाछंदा
ꣳसिसाकमेधैरयजत ॥ ६ ॥ सएतंलोकमजयत् ॥ यस्मिꣳश्चंद्रमाविभाति ॥ यत्साकमेधैर्यजंते ॥
एतमेवलोकंजयति ॥ यस्मिꣳश्चंद्रमाविभाति ॥ चंद्रमसएवसायुज्यमुपैति ॥ सोमोवैचंद्रमाः ॥ एष
ह्त्वैसाक्षात्सोमंभक्षयति ॥ यएवंविद्वान्त्साकमेधैर्यजंते ॥ यत्सोमश्चराजाच्छंदाꣳसिचसमैधंत ॥ ७ ॥
तत्साकमेधानाꣳसाकमेधत्वं ॥ अथर्तवःपितरःप्रजापतिंपितरंपितृयज्ञेनायजंत ॥ तएतंलोकमजयन् ॥
यस्मिन्नृतवः ॥ यत्पितृयज्ञेनयजंते ॥ एतमेवलोकंजयति ॥ यस्मिन्नृतवः ॥ ऋतूनामेवसायुज्यमुपै
ति ॥ यदृतवःपितरःप्रजापतिंपितरंपितृयज्ञेनायजंत ॥ तत्पितृयज्ञस्यपितृयज्ञत्वं ।। ८ ॥ अथौषधय
इमंदेवंत्र्यंबकैरयजंतप्रथेमहीति ॥ ततोवैताअप्रथंत ।। यएवंविद्वाꣳस्त्र्यंबकैर्यजंते ॥ प्रथंतेप्रजयापशु

भिः ॥ अथवायुःपरमेष्ठिनं शुनासीरीयेणायजत ॥ सएतंलोकमजयत् ॥ यस्मिन्वायुः ॥ यच्छुना
सीरीयेणयजते ॥ एतमेवलोकंजयति ॥ यस्मिन्वायुः ॥ ९ ॥ वायोरेवसायुज्यमुपैति ॥ ब्रह्मवादि
नोवदंति ॥ प्रचातुर्मास्ययाजीमीयता३ नप्रमीयता३ इति ॥ जीवन्वाएषऋतूनप्येति ॥ यदिवसंताप्रमीयं
ते ॥ वसंतोभवति ॥ यदिग्रीष्मेग्रीष्मः ॥ यदिवर्षासुवर्षाः ॥ यदिशरदिशरत् ॥ यदिहेमन्हेमंतः ॥
ऋतुर्भूत्वासंवत्सरमप्येति ॥ संवत्सरःप्रजापतिः ॥ प्रजापतिर्वावैषः ॥ १० ॥ परिवत्सरमाप्नोति
शुनासीरीयेणयजंतेजयन्त्सहस्रयाजिनंमाप्नोतिवैश्वदेवत्व सांकमेधैरंयजतसमैधंतापितृयज्ञत्वंयजंतिय
स्मिन्वायुर्हेमंतस्त्रीणिच ॥ १० ॥ उभयेयुव सुरामगुदस्थानिवैयस्यंप्रातःसवनएकैकोसुर्यपवमानः
प्रजावैसत्रमासताग्निर्वावसंवत्सरोदशं ॥ १०॥ उभयेवाएतेउदस्थात्सर्वाभिमध्यतोत्रवावब्राह्मणेष्वथगृ
हमेधिन षट्षष्टिः ॥ ६६ ॥ ॥ हरिः ॐम् ॥ ॥ अग्नेःकृत्तिकाः ॥ शुक्रंपरस्ताज्योतिरवस्तात् ॥
प्रजापतेरोहिणी ॥ आपःपरस्तादोषधयोवस्तात् ॥ सोमस्येन्वकाविततानि ॥ परस्ताद्वयंतोवस्तात् ॥
रुद्रस्यबाहू ॥ मृगयवःपरस्ताद्विक्षारोवस्तात् ॥ अदित्यैपुनर्वसू ॥ वातःपरस्तादार्द्रमवस्तात् ॥ १ ॥
बृहस्पतेस्तिष्यः ॥ जुह्वतःपरस्ताद्यजमानाअवस्तात् ॥ सर्पाणामाश्रेषाः ॥ अभ्यागच्छंतःपरस्ताद

भ्यानृत्यंतोवस्तात् ॥ पितॄणांमघाः ॥ रुदंतःपरस्तादपभ्रंशोवस्तात् ॥ अर्यम्णःपूर्वेफल्गुनी ॥ जा
यापरस्तादृषभोवस्तात् ॥ भगस्योत्तरे ॥ वहतवःपरस्ताद्वहमानाअवस्तात् ॥ २ ॥ देवस्यसवितुर्ह
स्तः ॥ प्रसवःपरस्तात्सनिरवस्तात् ॥ इंद्रस्यचित्रा ॥ ऋतंपरस्तात्सत्यमवस्तात् ॥ वायोर्निष्ट्याव्रत
तिः ॥ परस्तादसिद्धिरवस्तात् ॥ इंद्राग्नियोर्विशाखे ॥ युगानिपरस्तात्कृषमाणाअवस्तात् ॥ मित्रस्या
नूराधाः ॥ अभ्यारोहत्परस्तादभ्यारूढमवस्तात् ॥ ३ ॥ इंद्रस्यरोहिणी ॥ शृणत्परस्तात्प्रतिशृणदव
स्तात् ॥ निर्ऋत्यैमूलवर्हणी ॥ प्रतिभंजंतःपरस्तात्प्रतिशृणंतोवस्तात् ॥ अपांपूर्वाअषाढाः ॥ वर्चःप
रस्तात्समितिरवस्तात् ॥ विश्वेषांदेवानामुत्तराः ॥ अभिजयत्परस्तादभिजितमवस्तात् ॥ विष्णोःश्रो
णापृच्छमानाः ॥ परस्तात्पंथाअवस्तात् ॥ ४ ॥ वसूनांश्रविष्ठाः ॥ भूतंपरस्ताद्भूतिरवस्तात् ॥ इं
द्रस्यशतभिषक् ॥ विश्वव्यचाःपरस्ताद्विश्वक्षितिरवस्तात् ॥ अजस्यैकपदःपूर्वेप्रोष्ठपदाः ॥ वैश्वानरं
परस्ताद्वैश्वावसवमवस्तात् ॥ अहेर्बुध्नियस्योत्तरे ॥ अभिषिंचंतःपरस्तादभिषुण्वंतोवस्तात् ॥ पूष्णो
रेवती ॥ गावःपरस्ताद्वत्साअवस्तात् ॥ अश्विनोरश्वयुजौ ॥ ग्रामःपरस्तात्सेनावस्तात् ॥ यमस्याप
भरणीः ॥ अपकर्षंतःपरस्तादपवहंतोवस्तात् ॥ पूर्णापश्चाद्यत्तेदेवाअदधुः ॥ ५ ॥ आर्द्रमवस्ताद्वह

मानाअवस्तांदभ्यारूढमवस्तात्पंथांअवस्तांद्वत्साअवस्तात्पंचंच ॥ ३ ॥ यत्पुण्यंनक्षंत्रं ॥ तद्वट्कुर्वी
तोपव्युषं ॥ यदावैसूर्यंउदेतिं ॥ अथनक्षंत्रनैतिं ॥ यावंतितत्रसूर्योगच्छेत् ॥ यत्रंजघन्यंपश्येत् ॥ तावं
तिकुर्वीतयत्कारीस्यात् ॥ पुण्याहएवकुंरुते ॥ एवꣳहवैयज्ञेषुंचशतद्युम्नंचमात्स्योनिरवसाययांचं
कार ॥ १ ॥ योवैनंक्षत्रियंप्रजापतिंवेदं ॥ उभयोरेनंलोकयोर्विदुः ॥ हस्तंएवास्यहस्तं ॥ चित्राशि
रः ॥ निष्ट्याहृदंयं ॥ ऊरूविशांखे ॥ प्रतिष्ठानूराधाः ॥ एषवैनंक्षत्रियंःप्रजापतिः ॥ यएवंवेदं ॥ उ
भयोरेनंलोकयोर्विदुः ॥ २ ॥ अस्मिꣳश्चामुष्मिꣳश्च ॥ यांकामयेतदुहितरंप्रियास्यादितिं ॥ तांनि
ष्ट्यांयांदद्यात् ॥ प्रियैवभंवति ॥ नेवतुपुनरागच्छति ॥ अभिजिन्नामनक्षंत्रं ॥ उपरिष्टादषाढानां ॥
अवस्तांच्छ्रोणायै ॥ देवासुराःसंयत्ताआसन् ॥ तेदेवास्तस्मिन्नक्षंत्रेभ्यंजयन् ॥ यदभ्यजंयन् ॥ तदं
भिजितोभिजित्वं ॥ यंकामयेतानपजय्यंजयेदितिं ॥ तमेतास्मिन्नक्षंत्रेयातयेत् ॥ अनपजय्यमेवजं
यति ॥ पापपंराजितमिवतु ॥ प्रजापतिःपशूनंसृजत ॥ तेनक्षंत्रंनक्षत्रमुपातिष्ठत ॥ तेसमावंतएवाभं
वन् ॥ तेरेवतीमुपातिष्ठंत ॥ ४ ॥ तेरेवत्यांप्राभंवन् ॥ तस्माद्रेवत्यांपशूनांकुर्वीत ॥ यत्किंचावाची
नꣳसोमात् ॥ प्रैवभंवंति ॥ सलिलंवाइदमंतरासीत् ॥ यदतंरन् ॥ तत्तारंकाणांतारकत्वं ॥ योवाइ
हयजंते ॥ अमुꣳसलोकंनक्षते ॥ तन्नक्षंत्राणांनक्षत्रत्वं ॥ ५ ॥ देवगृहावैनक्षंत्राणि ॥ यएवंवेदं ॥

गृह्येवभंवंति ॥ यानिवाइमानिंपृथिव्याश्चित्राणिं ॥ तानिनक्षंत्राणि ॥ तस्मांदश्लीलनांमंश्चित्रे ॥
नावंस्यैंनयंजेत ॥ यथांपापाहेकुंरुते ॥ तादृगेवतत् ॥ देवनक्षत्राणिवाअन्यानिं ॥ ६ ॥ यमनक्षत्रा
ण्यन्यानिं ॥ कृत्तिकाःप्रथमं ॥ विशांखेउत्तमं ॥ तानिंदेवनक्षत्राणिं ॥ अनूराधाःप्रंथमं ॥ अपभरंणी
रुत्तमं ॥ तानिंयमनक्षत्राणिं ॥ यानिंदेवनक्षत्राणिं ॥ तानिदक्षिंणेनपरींयंति ॥ यानिंयमनक्षत्राणिं ॥
॥ ७ ॥ तान्युत्तरेण ॥ अन्वेंषामरात्स्मेतिं ॥ तदंनूराधाः ॥ ज्येष्ठमेंषामवधिष्मेतिं ॥ तज्ज्येंष्ठघ्नी ॥
मूलंमेषामवृक्षामेतिं ॥ तन्मूंलवर्हंणी ॥ यन्नासंहंत ॥ तदंषाढाः ॥ यदश्लोंणत् ॥ ८ ॥ तच्छ्रोणा ॥
यदशृंणोत् ॥ तच्छ्रविंष्ठाः ॥ यच्छतमभिंषज्यन् ॥ तच्छतभिंषक् ॥ प्रोष्ठपदेषूदंयच्छंत ॥ रेवत्यां
मरवंत ॥ अश्वयुजोरयुंजत ॥ अपभरंणीष्वपांवहन् ॥ तानिवाएतानिंयमनक्षत्राणिं ॥ यान्येवदेंवन
क्षत्राणिं ॥ तेषुंकुर्वीतयत्कारीस्यात् ॥ पुण्याहएवकुंरुते ॥ ९ ॥ चकारैवंवेदोभयोरेनंल्लोकयोर्विदुरजय
न्रेवतीमुपातिष्ठंतनक्षत्रत्वमन्यानियानिंयमनक्षत्राण्यश्लोणद्यमनक्षत्राणित्रीणिंच ॥ २ ॥ ॥ देवस्यंसवितुः
प्रातःप्रंसव.प्राणः ॥ वरुंणस्यसायमांसवोंपानः ॥ यत्प्रंतीचीनंप्रातःस्तनात् ॥ प्राचीनंसंगवात् ॥ ततों
देवाअंग्निष्टोमंनिरंमिमत ॥ तत्तदात्तवीर्यंनिर्मार्गः ॥ मित्रस्यंसंगवः ॥ तत्पुण्यंतेजस्व्यहः ॥ तस्मात्तर्हिं
पशवःसमायंति ॥ यत्प्रंतीचीनंसंगवात् ॥ १ ॥ प्राचीनंमध्यंदिंनात् ॥ ततोंदेवाउक्थ्यंनिरंमिम

त ॥ तत्तदात्तवीर्यंनिर्मार्गः ॥ बृहस्पतेर्मध्यंदिनः ॥ तत्पुण्यंतेजस्व्यहः ॥ तस्मात्तर्हितेक्ष्णिष्ठंतपाति ॥
यत्प्रतीचीनंमध्यंदिनात् ॥ प्राचीनंमपराह्णात् ॥ ततोदेवाःषोडशिनंनिरमिमत ॥ तत्तदात्तवीर्यंनिर्मा
र्गः ॥ २ ॥ भर्गस्यापराह्णः ॥ तत्पुण्यंतेजस्व्यहः ॥ तस्मादपराह्णेकुमार्योभर्गमिच्छमानाश्चरंति ॥
यत्प्रतीचीनमपराह्णात् ॥ प्राचीनंसायात् ॥ ततोदेवाअतिरात्रंनिरमिमत ॥ तत्तदात्तवीर्यंनिर्मार्गः ॥
वरुणस्यसायं ॥ तत्पुण्यंतेजस्व्यहः ॥ तस्मात्तर्हिनानृतंवदेत् ॥ ३ ॥ ब्राह्मणोवाअष्टाविंशोनक्षत्रा
णां ॥ समानस्यान्हःपंचपुण्यानिनक्षत्राणि ॥ चत्वार्यश्लीलानि ॥ तानिनव ॥ यच्चपरस्तान्नक्षत्राणां
यच्चावस्तात् ॥ तान्येकादश ॥ ब्राह्मणोद्वादशः ॥ यएवंविद्वान्त्संवत्सरंव्रतंचरति ॥ संवत्सरेणैवास्यं
व्रतंगुप्तंभवति ॥ समानस्यान्हःपंचपुण्यानिनक्षत्राणि ॥ चत्वार्यश्लीलानि ॥ तानिनव ॥ आग्नेयोरा
त्रिः ॥ ऐंद्रमहः ॥ तान्येकादश ॥ आदित्योद्वादशः ॥ यएवंविद्वान्त्संवत्सरंव्रतंचरति ॥ संवत्सरेणै
वास्यंव्रतंगुप्तंभवति ॥ ४ ॥ संगवात्षोडशिनंनिरमिमततत्तदात्तवीर्यंनिर्मार्गोवेदेऋवतिसमानस्यान्हःपंच
पुण्यानिनक्षत्राण्यष्टौच ॥ ३ ॥ ब्रह्मवादिनोवदंति ॥ कतिपात्राणियज्ञंवहंतीति ॥ त्रयोदशेतिब्रूयात्
॥ सयद्ब्रूयात् ॥ कस्तानिनिरमिमीतेति ॥ प्रजापतिरितिब्रूयात् ॥ सयद्ब्रूयात् ॥ कुतस्तानिनिरमि
मीतेति ॥ आत्मनइति ॥ प्राणापानाभ्यामेवोपांश्वंतर्यामौनिरमिमीत ॥ १ ॥ व्यानादुपांशुसवनं

॥ वाचऐंद्रवायवं ॥ दक्षक्रतुभ्यांमैत्रावरुणं ॥ श्रोत्रांदाश्विनं ॥ चक्षुषःशुक्रामंथिनौ ॥ आत्मनंआग्रयणं ॥
अंगेभ्यउक्थ्यं ॥ आयुषोध्रुवं ॥ प्रतिष्ठायांऋतुपात्रे ॥ यज्ञंवावतंप्रजापतिर्निरंमिमीत ॥ सनिर्मितोनाध्रिय
तसमंव्लीयत ॥ सएतान्प्रजापतिरपिवापानंपश्यत् ॥ तान्निरंवपत् ॥ तैर्वैसयज्ञमप्यंवपत् ॥ यदंपिवापाभवंति
यज्ञस्यधृत्याअसंव्लयाय ॥ २ ॥ उपांश्वंतर्यामौनिरंमिमीतामिमीतषट्च ॥ ४ ॥ ऋतमेवपरमेष्ठि ॥
ऋतंनात्येतिकिंचन ॥ ऋतेसंमुद्रआहितः ॥ ऋतेभूमिरियंश्रिता ॥ अग्निस्तिग्मेनंशोचिषां ॥ तपआक्रां
तमुष्णिहां ॥ शिरस्तपस्याहितं ॥ वैश्वानरस्यतेजसा ॥ ऋतेनांस्यनिवर्त्तये ॥ सत्येनपरिवर्त्तये ॥ १ ॥
तपसास्यानुवर्त्तये ॥ शिवेनास्योपवर्त्तये ॥ शग्मेनांस्याभिवर्त्तये ॥ तदृतंतत्सत्यं ॥ तद्व्रतंतच्छंकेयं ॥ ते
नंशकेयंतेनराध्यासं ॥ यद्धर्मःपर्यवर्त्तयत् ॥ अंतान्पृथिव्यादिवः ॥ अग्निरीशानओजसा ॥ वरुणो
धीतिभिं सह ॥ २ ॥ इंद्रोमरुद्भिःसखिभिःसह ॥ अग्निस्तिग्मेनंशोचिषा ॥ तपआक्रांतमुष्णिहां ॥
शिरस्तपस्याहितं ॥ वैश्वानरस्यतेजसा ॥ ऋतेनास्यानिवर्त्तये ॥ सत्येनपरिवर्त्तये ॥ तपसास्यानुवर्त्त
ये ॥ शिवेनास्योपवर्त्तये ॥ शग्मेनास्याभिवर्त्तये ॥ ३ ॥ तदृतंतत्सत्यं ॥ तद्व्रतंतच्छंकेयं ॥ तेनशकेयं
तेनराध्यासं ॥ योअस्याःपृथिव्यास्त्वचि ॥ निवर्तयत्योषधीः ॥ अग्निरीशानओजसा ॥ वरुणोधीति

भिःसह ॥ इंद्रोमरुद्भिःसखिभिःसह ॥ अग्निस्तिग्मेनशोचिषा ॥ तपआक्रांतमुष्णिहा ॥ ४ ॥ शिरस्तपस्याहितं ॥ वैश्वानरस्यतेजसा ॥ ऋतेनास्यनिवर्तये ॥ सत्येनपरिवर्त्तये ॥ तपसास्यानुवर्त्तये ॥ शिवेनास्योपवर्त्तये ॥ शग्मेनास्याभिवर्त्तये ॥ तदृतंतत्सत्यं ॥ तद्व्रतंतच्छकेयं ॥ तेनशकेयंतेनराध्यासं ॥ ५ ॥ एकमासमुदसृजत् ॥ परमेष्ठीप्रजाभ्यः ॥ तेनाभ्योमहआवहत् ॥ अमृतंमर्त्येभ्यः ॥ प्रजामनुप्रजायसे ॥ तदुतेमर्त्यामृतं ॥ येनमासाअर्द्धमासाः ॥ ऋतवः परिवत्सराः ॥ येनतेतेप्रजापते ॥ ईजानस्यन्यवर्त्तयन् ॥ ६ ॥ तेनाहमस्यब्रह्मणा ॥ निवर्त्तयामिजीवसे ॥ अग्निस्तिग्मेनशोचिषा ॥ तपआक्रांतमुष्णिहा ॥ शिरस्तपस्याहितं ॥ वैश्वानरस्यतेजसा ॥ ऋतेनास्यनिवर्तय ॥ सत्येनपरिवर्त्तये ॥ तपसास्यानुवर्त्तये ॥ शिवेनास्योपवर्त्तये ॥ शग्मेनास्याभिवर्त्तये ॥ तदृतंतत्सत्यं ॥ तद्व्रतंतच्छकेयं ॥ तेनशकेयंतेनराध्यासं ॥ ७ ॥ परिवर्त्तयेसहाभिवर्त्तयउष्णिहाराध्यासंन्यवर्त्तयन्नुपवर्त्तयेचत्वारिच ॥ ५ ॥ देवावैयज्ञेकुर्वत ॥ तदसुराअकुर्वत ॥ तेसुराऊर्ध्वंपृष्ठेभ्योनापश्यन् ॥ तेकेशानग्रेवपंत ॥ अथश्मश्रूणि ॥ अथोपपक्षौ ॥ ततस्तेवाचआयन् ॥ पराभवन् ॥ यस्यैवंवपंति ॥ अवाङेति ॥ १ ॥ अथोपरैवभवति ॥ अथदेवाऊर्ध्वंपृष्ठेभ्योपश्यन् ॥ तउपपक्षावग्रेवपंत ॥ अथश्मश्रूणि ॥ अथकेशान् ॥ ततस्तेभवन् ॥ सुवर्गंलोकमायन् ॥ यस्यैवंवपंति ॥ भवत्यात्मना ॥ अथोसुवर्गंलोकमेति

॥ २ ॥ अथैतन्मनुर्वप्त्रेमिथुनमपश्यत् ॥ सश्मश्रूण्यग्रेवपत ॥ अथोपपक्षौ ॥ अथकेशान् ॥ ततो
वैसप्राजायतप्रजयापशुभिः ॥ यस्यैवंवपंति ॥ प्रप्रजयापशुभिर्मिथुनैर्जायते ॥ देवासुराःसंयत्ताआस
न् ॥ तेसंवत्सरेव्यायच्छंत ॥ तांदेवाश्चातुर्मास्यैरेवाभिप्रायुंजत ॥ ३ ॥ वैश्वदेवेनचतुरोमासोवृंजतेंद्ररा
जानः ॥ तांच्छीर्षनिचावर्त्तयंतपरिंच ॥ वरुणप्रघासैश्चतुरोमासोवृंजतवरुणराजानः ॥ तांच्छीर्षनि
चावर्त्तयंतपरिंच ॥ साकमेधैश्चतुरोमासोवृंजतसोमराजानः ॥ तांच्छीर्षनिचावर्त्तयंतपरिंच ॥ यासं
वत्सरउपजीवासीत् ॥ तामेषामवृंजत॥ततोदेवाअभवन् ॥ परासुराः॥ ४॥यएवंविद्वाꣳश्चातुर्मास्यैर्यजते॥
भ्रातृव्यस्यैवमासोवृक्त्वा ॥ शीर्षनिचवर्त्तयतेपरिंच॥यैषासंवत्सरउपजीवा ॥ वृंक्तेतांभ्रातृव्यस्य ॥ क्षु
धास्यभ्रातृव्यःपराभवति ॥ लोहितायसेननिवर्त्तयते ॥ यद्वाइमामग्निर्क्रंतावागतेनिवर्तयति ॥ एतदे
वैनाꣳरूपंकृत्वानिवर्त्तयति ॥ साततश्वश्वोभूयंसीभवंत्येति ॥ ५ ॥ प्रजायते ॥ यएवंविद्वाँल्लोहि
तायसेननिवर्त्तयते ॥ एतदेवरूपंकृत्वानिवर्त्तयते ॥ सततश्वश्वोभूयान्भवन्नेति ॥ प्रैवजायतेत्रेण्याशं
ल्ल्यानिवर्त्तयेत॥ त्रीणित्रीणिवैदेवानांमृद्धानि ॥ त्रीणिछंदांꣳसि ॥ त्रीणिसवनानि ॥ त्रयइमेलोकाः ॥
॥ ६ ॥ ऋध्यामेवतद्वीर्यएषुलोकेषुप्रतितिष्ठति ॥ यश्चातुर्मास्ययाजीस्यात्मनोनावद्येत् ॥ देवेभ्यआवृश्चे

त ॥ चतुर्षुचंतुर्षुमासेषुनिवर्तयेत ॥ परोक्षमेवतद्देवेभ्यआत्मनोवंद्यत्यनावस्काय ॥ देवानांवाएषआनीं
तः ॥ यश्चातुर्मास्ययाजो ॥ यएवंविद्वान्निचंवर्तयंतेपरिंच ॥ देवताएवाप्यैति ॥ नास्यरुद्रःप्रजांपशून
भिमंन्यते ॥ ७ ॥ एत्येत्ययुंजतासुराएतिलोकामंन्यते ॥ ६ ॥ आयुषःप्राणः संतनु ॥ प्राणादपान
ः संतनु ॥ अपानाद्व्यानः संतनु ॥ व्यानाच्चक्षुः संतनु ॥ चक्षुषःश्रोत्रः संतनु ॥ श्रोत्रान्मनः संतनु ॥
मनसोवाचः संतनु ॥ वाचआत्मानः संतनु ॥ आत्मनःपृथिवीः संतनु ॥ पृथिव्याअंतरिक्षः संतनु ॥
अंतरिक्षाद्दिवः संतनु ॥ दिवःसुवःसंतनु ॥ १ ॥ पृथिव्याअंतरिक्षः संतनुद्वेचं ॥ ७ ॥ इंद्रोदधीचो
अस्थभिः ॥ वृत्राण्यप्रतिष्कुतः ॥ जघानंनवतीर्नव ॥ इच्छन्नश्वस्ययच्छिरः ॥ पर्वतेष्वपश्रितं ॥ तद्विं
दच्छर्यणावति ॥ अत्राहगोरमंन्वत ॥ नामत्वष्टुरपीच्यं ॥ इत्थाचंद्रमसोगृहे ॥ इंद्रमिद्गाथिनोबृहत्
॥ १ ॥ इंद्रमर्केभिरर्किणः ॥ इंद्रवाणीरनूषत ॥ इंद्रइद्धर्योःसचा ॥ संमिश्लआवचोयुजा ॥ इंद्रो
वज्रीहिरण्ययः ॥ इंद्रोदीर्घायचक्षसे ॥ आसूर्यंरोहयद्दिवि ॥ विगोभिरद्रिमैरयत् ॥ इंद्रवाजेषुनो
अव ॥ सहस्रप्रधनेषुच ॥ २ ॥ उग्रउग्राभिरूतिभिः ॥ तमिंद्रंवाजयामसि ॥ महेवृत्रायहंतवे ॥
सवृषावृषभोभुवत् ॥ इंद्रः सदामनेकृतः ॥ ओजिष्ठःसबलेहितः ॥ द्युम्नीश्लोकीससोम्यः ॥ गिराव

त्रोनसंभृतः ॥ सबलोअनंपच्युतः ॥ ववक्षुरुग्रोअस्तृतः ॥ ३ ॥ बृहच्चास्तृतः ॥ ८ ॥ देवासुराःसं
यत्ताआसन् ॥ सप्रजापतिरिंद्रंज्येष्ठंपुत्रमपन्यधत्त ॥ नेदेंनमसुराबलीयाꣳसोहनन्निति ॥ प्रह्लादोहवै
कायाधवः ॥ विरोचनꣳस्वंपुत्रमपन्यधत्त ॥ नेदेंनंदेवाअहनन्निति ॥ तेदेवाःप्रजापतिमुपसमेत्योचुः
॥ नाराजकस्ययुद्धमस्ति ॥ इंद्रमन्विच्छामेति ॥ तंयज्ञक्रतुभिरन्वैच्छन् ॥ १ ॥ तंयज्ञक्रतुभिर्नान्वविं
दन् ॥ तमिष्टिभिरन्वैच्छन् ॥ तमिष्टिभिरन्वविंदन् ॥ तदिष्टीनामिष्टित्वं ॥ एष्टयोहवैनाम ॥ ताइ
ष्टयइत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ तस्माएतमाग्नावैष्णवमेकादशकपालंदीक्षणीयंनि
रवपन् ॥ तदपद्रुत्यातन्वत ॥ तान्पत्नीसंयाजांतउपानयन् ॥ २ ॥ तेतदंतमेवकृत्वोदद्रवन् ॥
तेप्रायणीयमभिसमारोहन् ॥ तदपद्रुत्यातन्वत ॥ ताञ्छंय्वंतउपानयन् ॥ तेतदंतमेवकृत्वोदद्रव
न् ॥ तआतिथ्यमाभिसमारोहन् ॥ तदपद्रुत्यातन्वत ॥ तानिडांतउपानयन् ॥ तेतदंतमे
वकृत्वोदद्रवन् ॥ तस्माद्देताएतदंताइष्टयःसंतिष्ठंते ॥ ३ ॥ एवꣳहिदेवाअकुर्वत ॥ इतिदेवाअकु
र्वत ॥ इत्युवैमनुष्याःकुर्वते ॥ तेदेवाऊचुः ॥ यद्वाइदमुच्चैर्यज्ञेनचराम ॥ तंनोसुराःपाप्मानुविंदंति ॥
उपाꣳशूपसदाचराम ॥ तथानोसुराःपाप्मानानुवेत्स्यंतीति ॥ तउपाꣳशूपसदमतन्वत ॥ तिस्रएव

धेनीरनूच्यं ॥ ४ ॥ स्रुवेणाघारमाघार्यं ॥ तिस्रःपरांचीराहुतीर्हुत्वा ॥ स्रुवेणोपसदंजुहवांचक्रुः ॥
उग्रंवचोअपावधीत्त्वेषंवचोअपावधीᳩस्वाहेति ॥ अशनयापिपासेहवाउग्रंवचः ॥ एनश्चवैरंहत्यंचत्वे
षंवचः ॥ एतᳩहवावतच्चतुर्द्धाविहितंपाप्मानंदेवाअपजघ्निरे ॥ तथोएवैतदेवंविद्यजमानः ॥ तिस्रए
वसामिधेनीरनूच्यं ॥ स्रुवेणाघारमाघार्यं ॥ ५ ॥ तिस्रःपरांचीराहुतीर्हुत्वा ॥ स्रुवेणोपसदंजुहोति ॥
उग्रंवचोअपावधीत्त्वेषंवचोअपावधीᳩस्वाहेति ॥ अशनयापिपासेहवाउग्रंवचः ॥ एनश्चवैरंहत्यंचत्वे
षंवचः ॥ एतमेवतच्चतुर्धाविहितंपाप्मानंयजमानोपहते ॥ तेभिनीयैवाहःपशुमालभंत ॥ अह्नएव
तद्देवाअवर्तिंपाप्मानंमृत्युमपजघ्निरे ॥ तेनाभिनीयैवरात्रेःप्राचरन् ॥ रात्रियाएवतद्देवाअवर्तिंपाप्मानं
मृत्युमपजघ्निरे ॥ ६ ॥ तस्मादभिनीयैवाहःपशुमालभेत ॥ अह्नएवतद्यजमानोवर्तिंपाप्मानंभ्रातृव्या
नपनुदते ॥ तेनाभिनीयैवरात्रे प्रचरेत् ॥ रात्रियाएवतद्यजमानोवर्तिंपाप्मानंभ्रातृव्यानपनुदते ॥ सए
षउपवसथीयेहंद्विदेवत्यःपशुरालभ्यते ॥ द्वयंवाअस्मिन्लोकेयजमानः ॥ अस्थिचमाᳩसंच ॥ अ
स्थिचैवतनमाᳩसंचयजमानःसᳩस्कुरुते ॥ तावाएताःपंचदेवताः ॥ अग्नीषोमावग्निर्मित्रावरुणौ ॥ ७ ॥
पंचपचीवैयजमानः ॥ त्वङ्माᳩसᳩस्नावास्थिमज्जा ॥ एतमेवतत्पंचधाविहितमात्मानंवरुणपाशान्मुं
चति ॥ भेषजतायैनिर्वरुणत्वाय ॥ तᳩसप्तभिश्छंदोभिःप्रातरह्वयन् ॥ तस्मात्सप्तचतुरुत्तराणिछंदां

ऽसिप्रातरनुवाकेनूच्यंते ॥ तमेतयोपसमेत्योपासीदन् ॥ उपास्मैगायतानरइति ॥ तस्मादेतयाबहिष्पव मानउपसद्यः ॥८॥ ऐच्छन्ननयऽस्तिष्ठंतेनूच्यानूच्यंस्रुबेणाघारमाघार्यरात्रियाएवतद्देवाअवर्त्तिपाप्मानंमृत्यु मपजघ्निरेमित्रावरुणौनवच ॥९॥ देवायजमानोदेवादेवायजमानोयजमानःप्राचरन्प्रचेरेदालभंतालभेताम् त्युमपजघ्निरेभ्रातृव्यान् ॥ ससमुद्रउत्तरतःप्राज्वलद्भूम्यंतेन ॥ एषवावससमुद्रः॥ यच्चात्वालः ॥ एषउवेवस भूम्यंतः ॥ यद्वेद्यंतः॥ तदेतत्रिंशलंत्रिपूरुषं ॥ तस्मात्तंत्रिवितस्तंखनंति ॥ ससुवर्णरजताभ्यांकुशीभ्यांपरि गृहीतआसीत् ॥ तंयदस्याअध्यजनयन् ॥ तस्मादादित्यः ॥१॥ अथयत्सुवर्णरजताभ्यांकुशीभ्यांपरिगृही तआसीत् ॥ सास्यकौशिकता ॥ तंत्रिवृताभिप्रास्तुवत ॥ तंत्रिवृतादंदत॥तंत्रिवृताहरन् ॥ यावंतीत्रिवृतोमा त्रा ॥ तंपंचदशेनाभिप्रास्तुवत ॥तंपंचदशेनादंदत॥तंपंचदशेनाहरन् ॥ यावंतीपंचदशस्यमात्रा॥२ ॥तऽस प्तदशेनाभिप्रास्तुवत ॥तऽसप्तदशेनादंदत॥तऽसप्तदशेनाहरन् ॥ यावंतीसप्तदशस्यमात्रा ॥ तस्यसप्तदशे नह्रियमाणस्यतेजोहरोपतत् ॥ तमेकविꣳशेनाभिप्रास्तुवत ॥ तमेकविꣳशेनादंदत ॥ तमेकविꣳशेनाहर न् ॥यावंत्येकविꣳशस्यमात्रा ॥ तेयत्रिवृतास्तुवते ॥३॥ त्रिवृतैवतद्यजमानमादंदते ॥ तंत्रिवृतैवहरंति ॥ यावंतीत्रिवृतोमात्रा ॥ अग्निर्वैत्रिवृत् ॥ यावद्वाअग्नेर्दहतोधूमउदेत्यानुव्येति ॥ तावंतीत्रिवृतोमात्रा ॥

अग्नेरेवैनंतत् ॥ मात्राꣳसायुज्यꣳसलोकतांगमयंति ॥ अथयत्पंचदशेनस्तुवते ॥ पंचदशेनैवतद्यजमा
नमाददते ॥ ४ ॥ तंपंचदशेनैवहरंति ॥ यावंतोपंचदशस्यमात्रां ॥ चंद्रमावैपंचदशः ॥ एषहिपंच
दश्यामपक्षीयते ॥ पंचदश्यामापूर्यते ॥ चंद्रमसएवैनंतत् ॥ मात्राꣳसायुज्यꣳसलोकतांगमयंति ॥ अ
थयत्सप्तदशेनस्तुवते ॥ सप्तदशेनैवतद्यजमानमाददते ॥ तꣳसप्तदशेनैवहरंति ॥५॥ यावंतसिप्तदशस्य
मात्रां ॥ प्रजापतिर्वैसप्तदशः ॥ प्रजापतेरेवैनंतत् ॥ मात्राꣳसायुज्यꣳसलोकतांगमयंति ॥ अथयदे
कविꣳशेनस्तुवते ॥ एकविꣳशेनैवतद्यजमानमाददते ॥ तमेकविꣳशेनैवहरंति ॥ यावंत्येकविꣳशस्य
मात्रां ॥ असौवाआदित्यएकविꣳशः ॥ आदित्यस्यैवैनंतत् ॥ ६ ॥ मात्राꣳसायुज्यꣳसलोकतांगम
यंति ॥ तेकुश्यौ ॥ व्यघ्नन् ॥ तेअहोरात्रेअभवतां ॥ अहरेवसुवर्णाभवत् ॥ रजतारात्रिः ॥ सयदा
दित्यउदेति ॥ एतामेवतत्सुवर्णांकुशीमनुसमेति ॥ अथयदस्तमेति ॥ एतामेवतद्रजतांकुशीमनुसंवि
शति ॥ प्रह्लादोहवैकायाधवः ॥ विरोचनꣳस्वंपुत्रमुदास्यत् ॥ सप्रदरोभवत् ॥ तस्मात्प्रदरादुदकंना
चामेत् ॥ ७ ॥ आदित्यःपंचदशस्यमात्रास्तुवतेपंचदशेनैवतद्यजमानमाददतेसप्तदशेनैवहरंत्यादित्य
स्यैवैनंतद्विंशतिचत्वारिच ॥ १० ॥ येवैचत्वारस्तोमाः ॥ कृतंतत् ॥ अथयेपंच ॥ कलिःसः ॥ त

स्माच्चतुंष्टोमः ॥ तच्चतुंष्टोमस्यचतुष्टोमत्वं ॥ तदांहुः ॥ कतमानितानिज्योतींꣳषि ॥ यएतस्यस्तोमा
इतिं ॥ त्रिवृत्पंचदशःसंप्तदशएंकविꣳशः ॥ १ ॥ एतानिवावतानिज्योतींꣳषि ॥ यएतस्यस्तोमाः ॥
सोंब्रवीत् ॥ सप्तदशेनंह्वियमांणोव्यंलेशिषि ॥ भिषज्यंतमेतिं ॥ तमश्विनौधानाभिंरभिषज्यतां ॥
पूषाकंरंभेणं ॥ भारंतीपरिवापेणं ॥ मित्रावरुंणौपयस्यंया ॥ तदांहुः ॥२॥ यदश्विभ्यांधानाः ॥ पूष्णः
कंरंभः ॥ भारंत्यैपरिवापः ॥ मित्रावरुंणयोःपयस्यार्थं ॥ कस्मांदेतेषांꣳहविषामिंद्रमेवयंजंतीतिं ॥ एता
ह्येनंदेवताइतिंब्रूयात् ॥ एतैर्हविर्भिरभिंषज्यꣳस्तस्मादितिं ॥ तंवसंवोष्टाकंपालेनप्रातःसवनेंभिषज्यन् ॥
रुद्राएकांदशकपालेनमाध्यंदिनेसवंने ॥ विश्वेंदेवाद्वादंशकपालेनतृतीयसवने ॥ ३ ॥ सयदष्टाकंपा
लान्प्रातःसवनेकुर्यात् ॥ एकांदशकपालान्माध्यंदिनेसवंने ॥ द्वादंशकपालाꣳस्तृतीयसवने ॥ विलों
मतद्यज्ञस्यंक्रियेत ॥ एकांदशकपालानेवप्रांतःसवनेकुंर्यात् ॥ एकांदशकपालान्माध्यंदिनेसवंने ॥ ए
कांदशकपालाꣳस्तृतीयसवने ॥ यज्ञस्यंसलोमत्वायं ॥ तदांहुः ॥ यद्वसूनांप्रातःसवनं ॥ रुद्राणांमा
ध्यंदिनꣳसवंनं ॥ विश्वेंषांदेवानांतृतीयसवनं ॥ अथकस्मांदेतेषांꣳहविषाभिंद्रमेवयंजंतीतिं ॥ एताह्ये
नंदेवताइतिंब्रूयात् ॥ एतैर्हविर्भिरभिंषज्यꣳस्तस्मादितिं ॥ ४ ॥ एकविꣳशआंहुस्तृतीयसवनेप्रांतः
सवनेप्रांतःसवनंपंचंच ॥ ११ ॥ तस्यावांचोवपादादंबिभयुः ॥ तमेतेषुसप्तसुच्छंदंःस्वश्रयन् ॥

यदश्रयन् ॥ तच्छ्रायंतीयस्यश्रायंतीयत्वं ॥ यदवारयन् ॥ तद्वारवंतीयस्यवारवंतीयत्वं ॥ तस्यावाच
एवावपादादविभयुः ॥ तस्माएतानिसप्तचतुरुत्तराणिच्छंदाꣳस्युपादधुः ॥ तेषामतित्रीण्यरिच्यंत ॥ नत्री
ण्युदभवन् ॥ १ ॥ सबृहतीमेवास्पृशत् ॥ द्वाभ्यामक्षराभ्यां ॥ अहोरात्राभ्यामेव ॥ तदाहुः ॥
कतमासादेवाक्षराबृहती ॥ यस्यांतत्प्रत्यातिष्ठत् ॥ द्वादशपौर्णमास्यः ॥ द्वादशाष्टकाः ॥ द्वादशामावा
स्याः ॥ एषावावसादेवाक्षराबृहती ॥ २ ॥ यस्यांतत्प्रत्यतिष्ठदिति ॥ यानिचछंदाꣳस्यत्यरिच्यंत ॥
यानिचनोदभवन् ॥ तानिनिर्वीर्याणिहीनान्यमन्यत ॥ साब्रवीद्बृहती ॥ मामेवभूत्वा ॥ मामुप
सꣳश्रयतेति ॥ चतुर्भिरक्षरैरनुष्टुप्बृहतीन्नोदभवत् ॥ चतुर्भिरक्षरैःपंक्तिर्बृहतीमत्यरिच्यत ॥ त
स्यामेतानिचत्वार्यक्षराण्यपच्छिद्यादधात् ॥ ३ ॥ तेबृहतीएवभूत्वा ॥ बृहतीमुपसमश्रयतां ॥ अष्टा
भिरक्षरैरुष्णिग्बृहतीन्नोदभवत् ॥ अष्टाभिरक्षरैस्त्रिष्टुप्बृहतीमत्यरिच्यत ॥ तस्यामेतान्यष्टावक्षराण्यप
च्छिद्यादधात् ॥ तेबृहतीएवभूत्वा ॥ बृहतीमुपसमश्रयतां ॥ द्वादशभिरक्षरैर्गायत्रीबृहतीन्नोदभवत् ॥
द्वादशभिरक्षरैर्जगतीबृहतीमत्यरिच्यत ॥ तस्यामेतानिद्वादशाक्षराण्यपच्छिद्यादधात् ॥ ४ ॥ तेबृहतीएव
भूत्वा ॥ बृहतीमुपसमश्रयतां ॥ सोब्रवीत्प्रजापतिः ॥ छंदाꣳसिरथोमेभवत ॥ युष्माभिरहमेतमध्वान

मनुसंचराणीति ॥ तस्यगायत्रीचजगतीचपक्षावभवतां ॥ उष्णिक्चत्रिष्टुप्चप्रष्टचौ ॥ अनुष्टुप्चपं
क्तिश्चधुर्यौ ॥ बृहत्येवोद्धिरभवत् ॥ सएतंछंदोरथमास्थाय ॥ एतमध्वानमनुसमचरत् ॥ एतꣳहवैछं
दोरथमास्थाय ॥ एतमध्वानमनुसंचरति ॥ येनैषएतत्संचरति ॥ यएवंविद्वान्त्सोमेनयजते ॥ यउचै
नमेवंवेद ॥ ५ ॥ अभवन्वावसादेवाक्षराबृहत्यंदधाद्वादशाक्षराण्यपच्छिद्यादधादास्थायषट्च ॥ १२
अग्ने कृत्तिकायत्पुण्यंदेवस्यसवितुर्ब्रह्मवादिनः कत्यृतमेवदेवावाआयुषइंद्रोदधीचोदेवासुराःसप्रजापतिरि
द्रꣳससमुद्रायेवैचत्वारस्तस्यावाचोद्वादश ॥ १२ ॥ अग्नेःकृत्तिकादेवगृहाऋतमेववैश्वदेवेनतेतदंतंतप
चदशेनैवतेबृहतीएवाद्विषष्टिः ॥ ६२ ॥ हरिः ओम् ॥ अनुमत्यैपुरोडाशमष्टाकपालंनिर्वपति ॥ ये
प्रत्यंचःशम्यायाअवशीयंते ॥ तंनैर्ऋतमेककपालं ॥ इयवाअनुमतिः ॥ इयंनिर्ऋतिः ॥ नैर्ऋतेनपूर्वे
णप्रचरति ॥ पाप्मानमेवनिर्ऋतिंपूर्वांनिरवदयते ॥ एककपालोभवति ॥ एकधैवनिर्ऋतिंनिरवदयते ॥
यदहुत्वागार्हपत्यईयुः ॥ १ ॥ रुद्रोभूत्वाग्निरनूत्थाय ॥ अध्वर्युंचयजमानंचहन्यात् ॥ वीहिस्वा
हाहुतिंजुषाणइत्याह ॥ आहुत्यैवैनꣳशमयति ॥ नार्तिमार्च्छत्यध्वर्युर्नयजमानः ॥ एकोल्मुकेनयंति ॥
तद्धिनिर्ऋत्यैभागधेयं ॥ इमांदिशंयंति ॥ एषावैनिर्ऋत्यैदिक् ॥ स्वायामेवदिशिनिर्ऋतिंनिरवदयते ॥

॥ एषतेनिर्ऋतेभागइत्याह ॥ निर्दिशत्येवैनां ॥ भूतेहविष्मत्यसीत्याह ॥ भूतिमेवोपावर्त्तते ॥ मुंचे
ममꣳहंसइत्याह ॥ अꣳहंसएवैनंमुंचति ॥ अंगुष्ठाभ्यांजुहोति ॥ ३ ॥ अंततएवनिर्ऋतिंनिरवदयते
कृष्णंवासःकृष्णतूषंदक्षिणा ॥ एतद्वैनिर्ऋत्यैरूपं ॥ रूपेणैवनिर्ऋतिंनिरवदयते ॥ अप्रतीक्षमायंति ॥
निर्ऋत्याअंतर्हित्यै ॥ स्वाहानमोयइदंचकारेतिपुनरेत्यगार्हपत्येजुहोति ॥ आहुत्यैवनंमस्यंतोगार्हपत्यमु
पावर्त्तते ॥ आनुमतेनप्रचरंति ॥ इयंवाअनुमतिः ॥ ४ ॥ इयमेवास्मैराज्यमनुमन्यते ॥ धेनुर्दक्षि
णा ॥ इमामेवधेनुंकुरुते ॥ आदित्यंचरुंनिर्वपति ॥ उभयीष्वेवप्रजास्वभिषिच्यते ॥ दैवीषुचमानु
षीषुच ॥ वरोदक्षिणा ॥ वरोहिराज्यꣳसमृद्ध्यै ॥ आग्नावैष्णवमेकादशकपालंनिर्वपति ॥ अग्निःसर्वा
देवताः ॥ ५ ॥ विष्णुर्यज्ञः ॥ देवताश्चैवयज्ञंचावरुंधे ॥ वामनोवहीदक्षिणा ॥ यद्वही ॥ तेनाग्नेयः
॥ यद्वामनः ॥ तेनवैष्णवःसमृद्ध्यै ॥ अग्नीषोमीयमेकादशकपालंनिर्वपति ॥ अग्नीषोमाभ्यांवाइंद्रोवृ
त्रमहन्निति ॥ यदग्नीषोमीयमेकादशकपालंनिर्वपति ॥ ६ ॥ वार्त्रघ्नमेवविजित्यै ॥ हिरण्यंदक्षिणासमृ
द्ध्यै ॥ इंद्रोवृत्रꣳहत्वा ॥ देवताभिश्चेंद्रियेणचव्यार्ध्यत ॥ सएतमैंद्राग्नमेकादशकपालमपश्यत् ॥ तन्नि
रवपत् ॥ तेनवैसदेवताश्चेंद्रियंचावारुंध ॥ यदैंद्राग्नमेकादशकपालंनिर्वपति ॥ देवताश्चैवतेनेंद्रियंचय

जमानोवरुंधे ॥ ऋषभोवहीदक्षिणा ॥ ७ ॥ यद्वही ॥ तेनाग्नेयः ॥ यदृषभः ॥ तेनैंद्रःसमृध्यै ॥ आग्नेयमष्टाकपालंनिर्वपति ॥ ऐंद्रंदधि ॥ यदाग्नेयोभवति॥अग्निर्वैयज्ञमुखं ॥ यज्ञमुखमेवर्द्धिंपुरस्ताद्धत्ते ॥ यदैंद्रंदधि ॥ ८ ॥ इंद्रियमेवावरुंधे ॥ ऋषभोवहीदक्षिणा ॥ यद्वही ॥ तेनाग्नेयः ॥ यदृषभः ॥ तेनैंद्रःसमृध्यै ॥ यावतीर्वैप्रजाओषधीनामहुतानामाश्नन् ॥ ताःपराभवन् ॥ आग्रयणंभवतिहुताद्याय ॥ यजमानस्यापराभावाय ॥ ९ ॥ देवावाओषधीष्वाजिमयुः ॥ ताइंद्राग्नीउदजयतां ॥ तावेतमैंद्राग्नंद्वादशकपालंनिरवृणातां ॥ यदैंद्राग्नोभवत्युज्जित्यै ॥ द्वादशकपालोभवति ॥ द्वादशमासाःसंवत्सरः ॥ संवत्सरेणैवास्माअन्नमवरुंधे ॥ वैश्वदेवश्चरुर्भवति ॥ वैश्वदेवंवाअन्नं ॥ अन्नमेवास्मैस्वदयति ॥ ॥ १० ॥ प्रथमजोवत्सोदक्षिणासमृध्यै ॥ सौम्यꣳश्यामाकंचरुंनिर्वपति ॥ सोमोवाअकृष्टपच्यस्यराजा ॥ अकृष्टपच्यमेवास्मैस्वदयति ॥ वासोदक्षिणा ॥ सौम्यꣳहिदेवतयावासःसमृध्यै ॥ सरस्वत्यैचरुंनिर्वपति ॥ सरस्वतेचरुं ॥ मिथुनमेवावरुंधे ॥ मिथुनौगावौदक्षिणासमृध्यै ॥ एतिवाएषयज्ञमुखादृध्याः ॥ योग्नेर्देवतायाएति ॥ अष्टावेतानिहवीꣳषिभवंति ॥ अष्टाक्षरागायत्री ॥ गायत्रोग्निः ॥ तेनैवयज्ञमुखादृध्याअग्नेर्देवतायैनैति ॥ ११ ॥ इषुर्निरवदयतेगुष्टाभ्यांजुहोत्यनुमतिर्देवतानिर्वपति वहीदक्षिणायदैंद्रंदध्यपराभावायस्वदयतिगावौदक्षिणासमृध्यैषट्च ॥ १ ॥ वैश्वदेवेनवैप्रजापतिःप्र

जाअसृजत ॥ ताःसृष्टानप्राजायंत ॥ सोऽग्निरकामयत ॥ अहमिमाःप्रजनयेयमिति ॥ सप्रजापतये शुचमदधात् ॥ सोऽशोचत्प्रजामिच्छमानः ॥ तस्माद्यंचप्रजाभुनक्तियंचन ॥ तावुभौशोचतःप्रजामिच्छमानौ ॥ तास्वग्निमप्यसजत् ॥ ताअग्निरध्यैत् ॥ १ ॥ सोमोरेतोदधात् ॥ सवितापाजनयत् ॥ सरस्वतीवाचमदधात् ॥ पूषापोषयत् ॥ तेवाएतेत्रिःसंवत्सरस्यप्रयुज्यंते ॥ येदेवाःपुष्टिपतयः ॥ संवत्सरोवैप्रजापतिः ॥ सवत्सरेणैवास्मैप्रजाःप्राजनयत् ॥ ताःप्रजाजातामरुतोघ्नन् ॥ अस्मानपिनप्रायुक्षतेति ॥ २ ॥ सएतंप्रजापतिर्मारुतꣳसप्तकपालमपश्यत् ॥ तन्निरवपत् ॥ ततोवैप्रजाभ्योकल्पत ॥ यन्मारुतोनिरुप्यते ॥ यज्ञस्यक्लृप्त्यै ॥ प्रजानामघाताय ॥ सप्तकपालोभवति ॥ सप्तगणावैमरुतः ॥ गणशएवास्मैविशंकल्पयति ॥ सप्रजापतिरशोचत् ॥ ३ ॥ याःपूर्वाःप्रजाअसृक्षि ॥ मरुतस्ताअवधिषुः ॥ कथमपराःसृजेयेति ॥ तस्यशुष्मआंडभूतंनिरवर्तत ॥ तद्व्युदहरत् ॥ तदपोषयत् ॥ तत्प्राजायत ॥ आंडस्यवाएतद्रूपं ॥ यदामिक्षा ॥ यद्व्युद्धरंति ॥ ४ ॥ प्रजाएवतद्यजमानःपोषयति ॥ वैश्वदेव्यामिक्षाभवति ॥ वैश्वदेव्योवैप्रजाः ॥ प्रजाएवास्मैप्रजनयति ॥ वाजिनमानयति ॥ प्रजास्वेवप्रजातासुरेतोदधाति ॥ द्यावापृथिव्यएककपालोभवति ॥ प्रजाएवप्रजाताद्यावापृथिवीभ्यामुभयतःप

रिगृह्णाति ॥ देवासुराःसंयत्ताआसन् ।। सोग्निरब्रवीत् ॥ ५ ॥ मामग्रेयजत ॥ मयामुखेनासुरांजेष्य
थेति ॥ मांद्वितीयमितिसोमोब्रवीत् ॥ मयाराज्ञाजेष्यथेति ।। मांतृतीयमितिसविता ।। मयाप्रसूता
जेष्यथेति ॥ मांचतुर्थीमितिसरस्वती ॥ इंद्रियंवोहंधास्यामीति ॥ मांपंचममितिपूषा ॥ मयाप्रतिष्ठया
जेष्यथेति ॥ ६ ॥ तेग्निनामुखेनासुरानजयन् ।। सोमेनराज्ञा ॥ सवित्राप्रसूताः ।। सरस्वतींद्रियमं
दधात् ॥ पूषाप्रतिष्ठासीत् ॥ ततोवैदेवाव्यजयंत ।। यदेतानिहवींषिनिरुप्यंतेविजित्यै ।। नोत्तरवेदिमु
पवपति ।। पशवोवाउत्तरवेदिः ।। अजाताइवह्येतर्हिपशवः ॥ ७ ॥ ऐदित्यंशोचग्युद्धरंत्यब्रवीत्प्रति
ष्ठयाजेष्यथेत्येतर्हिपशवः ॥ २ ॥ त्रिवृद्बर्हिर्भवति ॥ मातापितापुत्रः ।। तदेवतन्मिथुनं ।। उल्बंग
र्भोजरायु ।। तदेवतन्मिथुनं ॥ त्रेधाबर्हिःसंनद्धंभवति ॥ त्रयइमेलोकाः ॥ एष्वेवलोकेषुप्रतितिष्ठ
ति ।। एकधापुनःसंनद्धंभवति ॥ एकइवह्ययंलोकः ॥ १ ॥ अस्मिन्नेवतेनलोकेप्रतितिष्ठति ॥ प्रसुवोभ
वंति ॥ प्रथमजामेवपुष्टिमवरुंधे ।। प्रथमजोवत्सोदक्षिणासमृध्यै ॥ पृषदाज्यंगृह्णाति ॥ पशवोवैपृ
षदाज्यं ।। पशूनेवावरुंधे ॥ पंचगृहीतंभवति ॥ पांक्ताहिपशवः ।। बहुरूपंभवति ॥ २ ॥ बहुरू

पाहिपशवःसमृध्यै ॥ अग्निंमंथंति ॥ अग्निमुखावैप्रजापतिःप्रजाअसृजत ॥ यदग्निंमंथंति ॥ अग्नि
मुखाएवतत्प्रजायजमानःसृजते ॥ नवप्रयाजाइज्यंते ॥ नवानूयाजाः ॥ अष्टौहवींषि ॥ द्वावाघा
रौ ॥ द्वावाज्यभागौ ॥ ३ ॥ त्रिंशत्संपद्यंते ॥ त्रिंशदक्षराविराट् ॥ अन्नंविराट् ॥ विराजैवान्नाद्य
मवरुंधे ॥ यजमानोवाएककपालः ॥ तेजआज्यं ॥ यदेककपालआज्यमानयति ॥ यजमानमेवतेजसा
समर्द्धयति ॥ यजमानोवाएककपालः ॥ पशवआज्यं ॥ ४ ॥ यदेककपालआज्यमानयति ॥ यजमानमेव
पशुभिःसमर्धयति ॥ यदल्पमानयेत् ॥ अल्पाएनंपशवोभुंजंतउपतिष्ठेरन् ॥ यद्बह्वानयेत् ॥ बहवए
नंपशवोभुंजंतउपतिष्ठेरन् ॥ बह्वानीयाविःपृष्ठंकुर्यात् ॥ बहवएवैनंपशवोभुंजंतउपतिष्ठंते ॥ यजमा
नोवाएककपालः ॥ यदेककपालःस्यावद्येत् ॥ ५ ॥ यजमानस्यावद्येत् ॥ उद्वामाद्येद्यजमानः ॥ प्र
वामीयेत ॥ सकृदेवहोतव्यः ॥ सकृदिवहिसुवर्गोलोकः ॥ हुत्वाभिजुहोति ॥ यजमानमेवसुवर्गं
लोकंगमयित्वा ॥ तेजसासमर्द्धयति ॥ यजमानोवाएककपालः ॥ सुवर्गोलोकआहवनीयः ॥ ६ ॥
यदेककपालमाहवनीयेजुहोति ॥ यजमानमेवसुवर्गंलोकंगमयति ॥ यद्धस्तेनजुहुयात् ॥ सुवर्गा
ल्लोकाद्यजमानमवविध्येत् ॥ स्रुचाजुहोति ॥ सुवर्गस्यलोकस्यसमष्ट्यै ॥ यत्प्राङ्पद्येत ॥ देवलोक

मभिजयेत् ॥ यद्दक्षिणापितृलोकं ॥ यत्प्रत्यक् ॥ ७ ॥ रक्षांꣳसियज्ञꣳहन्युः ॥ यदुदङ् ॥ मनुष्य
लोकमभिजयेत् ॥ प्रतिष्ठितोहोतव्यः ॥ एककपालंवैप्रतितिष्ठंतंद्यावापृथिवीअनुप्रतितिष्ठतः ॥ द्यावा
पृथिवीऋतवः ॥ ऋतून्यज्ञः ॥ यज्ञंयजमानः ॥ यजमानंप्रजाः ॥ तस्मात्प्रतिष्ठितोहोतव्यः ॥ ८ ॥
वाजिनोयजति ॥ अग्निर्वायुःसूर्यः ॥ तेवैवाजिनः ॥ तानेवतद्यजति ॥ अथोखल्वाहुः ॥ छंदाꣳसि
वैवाजिनइति ॥ तान्येवतद्यजति ॥ ऋक्सामेवाइंद्रस्यहरीसोमपानौ ॥ तयोःपरिधयआधानं ॥ वा
जिनंभागधेयं ॥ ९ ॥ यदप्रहृत्यपरिधींजुहुयात् ॥ अंतराधानाभ्यांघासंप्रयच्छेत् ॥ प्रहृत्यपरिधींजु
होति ॥ निराधानाभ्यामेवघासंप्रयच्छति ॥ बर्हिषिविषिचन्वाजिनमानयति ॥ प्रजावैबर्हिः ॥ रेतो
वाजिनं ॥ प्रजास्वेवरेतोदधाति ॥ समुपहूयभक्षयंति ॥ एतत्सोमपीथाह्येते ॥ अथोआत्मन्नेवरेतो
दधते ॥ यजमानउत्तमोभक्षयति ॥ पशवोवैवाजिनं ॥ यजमानएवपशून्प्रतिष्ठापयंति ॥ १० ॥
लोकोबहुरूपंभवत्याज्यभागौपशवआज्यमवद्येदाहवनीयःप्रत्यक्तस्मात्प्रतिष्ठितोहोतव्योभागधेयमेतेच
त्वारिच ॥ ३ ॥ प्रजापतिःसविताभूत्वाप्रजाअसृजत ॥ ताएनमत्यमन्यंत ॥ ताअस्मादपा
क्रामन् ॥ तावरुणोभूत्वाप्रजावरुणेनाग्राहयत् ॥ ताःप्रजावरुणगृहीताः ॥ प्रजापतिंपुनरुपाधावन्नाथ

मिच्छमाना: ॥ सएतान्प्रजापतिर्वरुणप्रघासानपश्यत् ॥ तान्निरवपत् ॥ तैर्वैसप्रजावरुणपाशादमुंच
त् ॥ यद्वरुणप्रघासानिरुप्यंते ॥ १ ॥ प्रजानामवरुणग्राहाय ॥ तासांदक्षिणोबाहुर्न्यक्रआसीत् ॥
सव्यःप्रसृतः ॥ सएतांद्वितीयांदक्षिणतोवेदिमुदहन् ॥ ततोवैसप्रजानांदक्षिणंबाहुंप्रासारयत् ॥ यद्वि
तीयांदक्षिणतोवेदिमुद्धंति ॥ प्रजानामेवतद्यजमानोदक्षिणंबाहुंप्रसारयति ॥ तस्माच्चातुर्मास्ययाज्यमु
ष्मिन्लोकउभयाबाहुः ॥ यज्ञाभिजितꣳह्यस्य ॥ पृथमात्राद्वेदीअसंभिन्नेभवतः ॥ २ ॥ तस्मात्पृथमा
त्रंव्यꣳसौ ॥ उत्तरस्यांवेद्यामुत्तरवेदिमुपवपति ॥ पशवोवाउत्तरवेदिः ॥ पशूनेवावरुंधे ॥ अथोयज्ञप
रुषोनंतरित्यै ॥ एतद्ब्राह्मणान्येवपंचहवीꣳषि ॥ अथैषऐंद्राग्नोभवति ॥ प्राणापानौवाएतौदेवानां ॥
यदिंद्राग्नी ॥ यदैंद्राग्नोभवति ॥ ३ ॥ प्राणापानावेवावरुंधे ॥ ओजोबलंवाएतौदेवानां ॥ यदिंद्राग्नी ॥
यदैंद्राग्नोभवति ॥ ओजोबलमेवावरुंधे ॥ मारुत्यामिक्षाभवति ॥ वारुण्यामिक्षा ॥ मेषीचमेषश्चभ
वतः ॥ मिथुनाएवप्रजावरुणपाशान्मुंचति ॥ लोमशौभवतोमेध्यत्वाय ॥ ४ ॥ शमीपर्णान्युपवप
ति ॥ घासमेवाभ्यामपियच्छति ॥ प्रजापतिमन्नाद्यंनोपानमत् ॥ सएतेनशतेध्मेनहविषान्नाद्यमवारुं
ध ॥ यत्परःशतानिशमीपर्णानिभवंति ॥ अन्नाद्यस्यावरुध्यै ॥ सौम्यानिवैकरीराणि ॥ सौम्याखलुवा
आहुतिर्दिवोवृष्टिंच्यावयति ॥ यत्करीराणिभवंति ॥ सौम्ययैवाहुत्यादिवोवृष्टिमवरुंधे ॥ कायएकक
८

पालोभवति ॥ प्रजानांकृत्वाय ॥ प्रतिपूरुषंकरंभपात्राणिभवंति ॥ जाताएवप्रजावरुणपाशान्मुंचति ॥
एकमतिरिक्तं ॥ जनिष्यमाणाएवप्रजावरुणपाशान्मुंचति ॥५॥ निरुप्यंतेभवतोभवंतिमेध्यत्वायंधेषट्
चं ॥ ४ ॥ उत्तरस्यांवेद्यामन्यानिहवीꣳषिसादयति ॥ दक्षिणायांमारुतीं ॥ अपधुरमेवैनायुनक्ति ॥
अथोओजएवासामवंहरति ॥ तस्माद्ब्रह्मणश्चक्षत्राच्चविशोन्यतोपक्रमिणीः॥ मारुत्यापूर्वयाप्रचरति ॥ अनृं
तमेवावयजते ॥ वारुण्योत्तरया ॥ अंततएववरुणमवयजते ॥ यदेवाध्वर्युःकरोति ॥ १ ॥ तत्प्रतिप्र
स्थाताकरोति ॥ तस्माद्यच्छ्रेयान्करोति ॥ तत्पापीयान्करोति ॥ पत्नींवाचयति ॥ मेध्यामेवैनांकरो
ति ॥ अथोतपएवैनामुपनयति ॥ यज्जारꣳसंतंनप्रब्रूयात् ॥ प्रियंज्ञातिꣳरुंध्यात् ॥ असौमेजारइतिनि
र्दिशेत् ॥ निर्दिश्यैवैनंवरुणपाशेनग्राहयति ॥ २ ॥ प्रघास्यान्हवामहइतिपत्नीमुदानयति ॥ अ
क्तैवैनां ॥ यत्पत्नीपुरोनुवाक्यामनुब्रूयात् ॥ निर्वीर्योयजमानःस्यात् ॥ यजमानोन्वाह ॥ आत्म
न्नेववीर्यंधत्ते ॥ उभौयाज्याꣳसवीर्यत्वाय ॥ यद्ग्रामेयदरण्यइत्याह ॥ यथोदितमेववरुणमवयजते ॥
यजमानदेवत्योवाआहवनीयः ॥ ३ भ्रातृव्यदेवत्योदक्षिणः ॥ यदाहवनीयेजुहुयात् ॥ यजमानंवरुण
पाशेनग्राहयेत् ॥ दक्षिणेग्नौजुहोति ॥ भ्रातृव्यमेववरुणपाशेनग्राहयति ॥ शूर्पेणजुहोति ॥ अन्यमेववरुण

मवयजते ॥ शीर्षन्नधिनिधायजुहोति ॥ शीर्षतएववरुणमवयजते ॥ प्रत्यङ्तिष्ठञ्जुहोति ४ प्रत्यङ्ङेववरुणपा
शान्निर्मुच्यते ॥ अक्रन्कर्मकर्मकृतइत्याह ॥ देवानृणंनिरवदाय ॥ अनृणागृहानुपप्रैतीतिवावैतदाह ॥ व
रुणगृहीतंवाएतद्यज्ञस्य ॥ यद्यजुषागृहीतःस्यातिरिच्यते ॥ तुषाश्चनिष्कासश्च ॥ तुषैश्चनिष्कासेनचा
वभृथमवैति ॥ वरुणगृहीतेनैववरुणमवयजते ॥ अपोवभृथमवैति ५ अप्सुवैवरुणः ॥ साक्षादेववरुण
मवयजते ॥ प्रतियुतोवरुणस्यपाशइत्याह ॥ वरुणपाशादेवनिर्मुच्यते ॥ अप्रतीक्षमायन्ति ॥ वरुणस्यां
तर्हित्यै ॥ एधोस्येधिषीमहीत्याह ॥ समिधैवाग्निंनमस्यन्तउपायन्ति ॥ तेजोसितेजोमयिधेहीत्याह ॥
तेजएवात्मन्धत्ते ॥ ६ ॥ करोतिग्राहयत्याहवनीयस्तिष्ठञ्जुहोत्यपोवभृथमवैतिधत्ते ॥ ५ ॥ देवासुराः
संयत्ताआसन् ॥ सोग्निरब्रवीत् ॥ ममेयमनीकवतीतनूः ॥ तांप्रीणीत ॥ अथासुरानभिभविष्यथेति ॥
तेदेवाअग्नयेनीकवतेपुरोडाशमष्टाकपालंनिरवपन् ॥ सोग्निरनीकवान्त्स्वेनभागधेयेनप्रीतः ॥ चतुर्धानीं
कान्यजनयत ॥ ततोदेवाअभवन् ॥ परासुराः ॥ १ ॥ यदग्नयेनीकवतेपुरोडाशमष्टाकपालंनिर्वप
ति ॥ अग्निमेवानीकवन्तꣳस्वेनभागधेयेनप्रीणाति ॥ सोग्निरनीकवान्त्स्वेनभागधेयेनप्रीतः ॥ चतुर्धानीं
कानिजनयते ॥ असौवाआदित्योग्निरनीकवान् ॥ तस्यरश्मयोनीकानि ॥ साकꣳसूर्येणोद्यतानिर्वपति ॥

साक्षादेवास्मा अनीकानि जनयति ॥ तेऽसुराः पराजिता यन्तः ॥ द्यावापृथिवी उपाश्रयन् ॥ २ ॥ ते देवा मरुद्भ्यः सांतपनेभ्यश्चरुं निरवपन् ॥ तान्द्यावापृथिवीभ्यामेवोभयतः समतपन् ॥ यन्मरुद्भ्यः सांतपनेभ्यश्चरुं निर्वपति ॥ द्यावापृथिवीभ्यामेव तदुभयतो यजमानो भ्रातृव्यान्त्संतपति ॥ मध्यंदिने निर्वपति ॥ तर्हि हि तेक्ष्णिष्ठं तपति ॥ चरुर्भवति ॥ सर्वत एवैनान्त्संतपति ॥ ते देवाः श्वो विजयिनः सन्तः ॥ सर्वासां दुग्धे गृहमेधीयं चरुं निरवपन् ॥ ३ ॥ आशिता एवाद्योपवसाम ॥ कस्य वाहेदं ॥ कस्य वा श्वो भावितेति ॥ स शृतोऽभवत् ॥ तस्याहुतस्य नाश्नन् ॥ नहि देवा अहुतस्याश्नन्ति ॥ तेऽब्रुवन् ॥ कस्मा इमꣳ होष्याम इति ॥ मरुद्भ्यो गृहमेधिभ्य इत्यब्रुवन् ॥ तं मरुद्भ्यो गृहमेधिभ्योऽजुहवुः ॥ ४ ॥ ततो देवा अभवन् ॥ पराऽसुराः ॥ यस्यैवं विदुषो मरुद्भ्यो गृहमेधिभ्यो गृहे जुह्वति ॥ भवत्यात्मना ॥ पराऽस्य भ्रातृव्यो भवति ॥ यद्वै यज्ञस्य पाकत्रा क्रियते ॥ पशव्यं तत् ॥ पाकत्रा वा एतत्क्रियते ॥ यन्नेध्मा बर्हिर्भवति ॥ न सामिधेनीरन्वाह ॥ ५ ॥ न प्रयाजा इज्यन्ते ॥ नानूयाजाः ॥ य एवं वेद ॥ पशुमान्भवति ॥ आज्यभागौ यजति ॥ यज्ञस्यैव चक्षुषी नान्तरेति ॥ मरुतो गृहमेधिनो यजति ॥ भागधेयेनैवैनान्त्समर्धयति ॥ अग्निꣳ स्विष्टकृतं यजति प्रतिष्ठित्यै ॥ इडान्तो भवति ॥ पशवो वा इडा ॥ पशुष्वेवोपरिष्टात्प्रतितिष्ठति ॥ ६ ॥ असुरा अश्नन्गृहमेधीयं चरुं निरवपन्न जुहवुरन्वाहेडान्तो भवति द्वे च ॥ ६ ॥ यत्पत्नी गृहमेधीयस्याश्नीया

त् ॥ गृहमेध्येवस्यात् ॥ विर्त्वस्ययज्ञऋध्येत ॥ यन्नाश्नीयात् ॥ अगृहमेधीस्यात् ॥ नास्ययज्ञोव्यृध्ये
त ॥ प्रतिवेशंपचेयुः ॥ तस्याश्नीयात् ॥ गृहमेध्येवभवति ॥ नास्ययज्ञोव्यृध्यते ॥ १ ॥ तेदेवागृह
मेधीयेनेष्ट्वा ॥ आशिताअभवन् ॥ आंजताभ्यंजत ॥ अनुवत्सानवासयन् ॥ तेभ्योसुराःक्षुधंप्राहिण्व
न् ॥ सादेवेषुलोकमवित्वा ॥ असुरान्पुनरगच्छत् ॥ गृहमेधीयेनेष्ट्वा ॥ आशिताभवंति ॥ आंजते
भ्यंजते ॥ २ ॥ अनुवत्सान्वासयंति ॥ भ्रातृव्यायैवतद्यजमानःक्षुधंप्रहिणोति ॥ तेदेवागृहमेधी
येनेष्ट्वा ॥ इंद्रायनिष्कासन्यदधुः ॥ अस्मानेवश्वइंद्रोनिहितभागउपावर्त्तितेति ॥ तानिंद्रोनिहितभाग
उपावर्त्तत ॥ गृहमेधीयेनेष्ट्वा ॥ इंद्रायनिष्कासन्निदध्यात् ॥ इंद्रएवैनंनिहितभागउपावर्त्तते ॥ गार्ह
पत्येजुहोति ॥ ३ ॥ भागधेयेनैवैनꣳसमर्धयति ॥ ऋषभमाह्वयति ॥ वषट्कारएवास्यसः ॥ अथो
इंद्रियमेवतद्वीर्यंयजमानोभ्रातृव्यस्यवृंक्ते ॥ इंद्रोवृत्रꣳहत्वा ॥ परांपरावतमगच्छत् ॥ अपाराध
मितिमन्यमनः ॥ सोब्रवीत् ॥ कइदंवेदिष्यतीति ॥ तेब्रुवन्मरुतोवरंवृणामहै ॥ ४ ॥ अथवयंवेदाम ॥
अस्मभ्यमेवप्रथमꣳहविर्निरुप्याताइति ॥ तएनमध्यक्रीडन् ॥ तत्क्रीडिनांक्रीडित्वं ॥ यन्मरुद्भ्यःक्रीडि
भ्यःप्रथमꣳहविर्निरुप्यतेविजित्यै ॥ साकꣳसूर्येणोद्यतानिर्वपति ॥ एतस्मिन्वैलोकइंद्रोवृत्रमहन्त्समृ

ध्यै ॥ एतद्ब्राह्मणान्येवपंचहवींषि ॥ एतद्ब्राह्मणऐंद्राग्नः ॥ अथैषऐंद्रश्चरुर्भवति ॥ ५ ॥ उद्धारंवाए
तमिंद्रउदहरत ॥ वृत्रंहत्वा ॥ अन्यासुदेवतास्वधि ॥ यदेषऐंद्रश्चरुर्भवति ॥ उद्धारमेवतंयजमान
उद्धरते ॥ अन्यासुप्रजास्वधि ॥ वैश्वकर्मणएककपालोभवति ॥ विश्वान्येवतेनकर्माणियजमानोवरुं
धे ॥ ६ ॥ ऋध्यतेभ्यंजतेजुहोतिवृणामहैभवत्यष्टौचं ॥ ७ ॥ वैश्वदेवेनवैप्रजापतिःप्रजाअसृजत ॥
तावरुणप्रघासैर्वरुणपाशादमुंचत् ॥ साकमेधैःप्रत्यस्थापयत् ॥ त्र्यंबकैरुद्रंनिरवादयत ॥ पितृयज्ञेनं
सुवर्गलोकमगमयत् ॥ यद्वैश्वदेवेनयजते ॥ प्रजाएवतद्यजमानःसृजते ॥ तावरुणप्रघासैर्वरुणपाशा
न्मुंचति ॥ साकमेधैःप्रतिष्ठापयति ॥ त्र्यंबकैरुद्रंनिरवदयते ॥ १ ॥ पितृयज्ञेनसुवर्गलोकंगमयति ॥
दक्षिणतःप्राचीनावीतीनिर्वपति ॥ दक्षिणावृद्धिपितृणां ॥ अनादृत्यतत् ॥ उत्तरतएवोपवीयनिर्वपेत् ॥
उभयेहिदेवाश्चपितरश्चेज्यंते ॥ अथोयदेवदक्षिणार्धेधिश्रयति ॥ तेनदक्षिणावृत् ॥ सोमायपितृमतेपु
रोडाशंषट्कपालंनिर्वपति ॥ संवत्सरोवैसोमःपितृमान् ॥ २ ॥ संवत्सरमेवप्रीणाति ॥ पितृभ्योब
र्हिषद्भ्योधानाः ॥ मासावैपितरोबर्हिषदः ॥ मासानेवप्रीणाति ॥ यस्मिन्वाऋतौपुरुषःप्रमीयते ॥ सो
स्यामुष्मिंल्लोकेभवति ॥ बहुरूपाधानाभवंति ॥ अहोरात्राणामभिजित्यै ॥ पितृभ्योग्निष्वात्तेभ्योमं

थं ॥ अर्धमासावैपितरोग्निष्वात्ताः ॥ ३ ॥ अर्धमासानेवप्रीणाति ॥ अभिवान्यायैदुग्धेभवति ॥ सा
हिपितृदेवत्यंदुहे ॥ यत्पूर्णं ॥ तन्मनुष्याणां ॥ उभयंद्वोदेवानां ॥ अर्धःपितृणां ॥ अर्धउपमंथति ॥
अर्द्धोहिपितृणां ॥ एकयोपमंथति ॥ ४ ॥ एकाहिपितृणां ॥ दक्षिणोपमंथति ॥ दक्षिणावृद्धिपितृ
णां ॥ अनारभ्योपमंथति ॥ तद्धिपितॄन्गच्छति ॥ इमांदिशवेदिमुद्धंति ॥ उभयेहिदेवाश्चपितरश्चे
ज्यंते ॥ चतुस्रक्तिर्भवति ॥ सर्वाह्यनुदिशःपितरः ॥ अखाताभवति ॥ ५ ॥ खाताहिदेवानां ॥ म
ध्यतोग्निराधीयते ॥ अंततोहिदेवानामाधीयते ॥ वर्षीयानिध्मइध्माद्भवतिव्यावृत्त्यै ॥ परिश्रयति ॥
अंतर्हितोहिपितृलोकोमनुष्यलोकात् ॥ यत्परुषिदिनं ॥ तद्देवानां ॥ यदंतरा ॥ तन्मनुष्याणां ॥ ६ ॥
यत्समूलं ॥ तत्पितृणां ॥ समूलंबर्हिर्भवतिव्यावृत्त्यै ॥ दक्षिणास्तृणाति ॥ दक्षिणावृद्धिपितृणां ॥ त्रिः
पर्येति ॥ तृतीयेवाइतोलोकेपितरः ॥ तानेवप्रीणाति ॥ त्रिःपुनःपर्येति ॥ षट्संपद्यंते ॥ ७ ॥ षड्वा
ऋतवः ॥ ऋतूनेवप्रीणाति ॥ यत्प्रस्तरंयजुषागृह्णीयात् ॥ प्रमायुकोयजमानःस्यात् ॥ यन्नगृह्णीयात् ॥
अनायतनःस्यात् ॥ तूष्णीमेवन्यस्येत् ॥ नप्रमायुकोभवति ॥ नानायतनः ॥ यत्त्रीन्परिधीन्परिदध्यात् ॥

॥ ८ ॥ मृत्युनायंजमानंपरिंगृह्णीयात् ॥ यन्नपरिंदध्यात् ॥ रक्षांꣳसियज्ञꣳहंन्युः ॥ द्वौपंरिधीपरिंदधाति ॥ रक्षंसामपंहत्यै ॥ अथोंमृत्योरेवयजंमानमुत्सृंजति ॥ यत्रीणिंत्रीणिहवींꣳष्युंदाहरेंयुः॥ त्रयंस्त्रयएषाꣳसाकंप्रमींयेरन् ॥ एकैंकमनूचीनांन्युदाहंरंति ॥ एकैंकएवैषांमन्वंचःप्रमींयते ॥ कशिपुंकशिपव्यांय ॥ उपबर्हंणमुपबर्हण्यांय ॥ आंजंनमांजन्यांय ॥ अभ्यंजंनमभ्यंजन्यांय ॥ यथाभागमेवैनांन्प्रीणाति ॥ ९ ॥ निरवंदयतेपितृमानंग्निष्वात्ताएकयापंमंथत्यस्वांताभवतिमनुष्यांणांपद्यंतेपरिदध्यान्मींयतेपंचंच ॥ ८ ॥ अग्नयेंदेवेभ्यंःपितृभ्यंःसामिध्यमांनायानुंब्रूहीत्यांह ॥ उभयेहिदेवाश्चंपितरंश्चेज्यंतें ॥ एकामन्वांह ॥ एकाहिपिंतृणां ॥ त्रिरन्वांह ॥ त्रिर्हिदेवानां ॥ आघारावाघांरयति ॥ यज्ञपरुषोरनंतरित्यै ॥ नार्षेयंवृंणीते ॥ नहोतांरं ॥ १ ॥ यदांर्षेयंवृंणीत ॥ यद्धोतांरं ॥ प्रमायुंकोयजंमानःस्यात् ॥ प्रमायुंकोहोतां ॥ तस्मान्नवृंणीते ॥ यजंमानस्यहोतुंर्गोपीथायं ॥ अपंबर्हिषःप्रयाजान्यंजति ॥ प्रजावैबर्हिः ॥ प्रजाएवमृत्योरुत्सृंजति ॥ आज्यंभागौयजति ॥ २ ॥ यज्ञस्यैवचक्षुंषीनांतरेंति ॥ प्राचीनावीतीसोमंयजति ॥ पितृदेवत्यांहि ॥ एषाहुंतिः ॥ पंचकृत्वोवंद्यति ॥ पंचह्येंतादेवताः ॥ द्वेपुंरोनुवाक्यें ॥ याज्यांदेवतावंषट्कारः ॥ ताएवप्रीणाति ॥ संतंतमवंद्यति ॥ ३ ॥

ऋतूनाꣳसंतत्यै ॥ प्रैवैभ्यःपूर्वयापुरोनुवाक्ययाह ॥ प्रणयतिद्वितीयया ॥ गमयतियाज्यया ॥ तृतो
येवाइतोलोकेपितरः ॥ अह्नएवैनान्पूर्वयापुरोनुवाक्ययात्यानयति ॥ रात्रियैद्वितीयया ॥ एवै
नान्याज्यययागमयति ॥ दक्षिणतोवदाय ॥ उदङतिक्रामतिव्यावृत्त्यै ॥ ४ ॥ आस्वधेत्याश्रा
वयति ॥ अस्तुस्वधेतिप्रत्याश्रावयति ॥ स्वधानमइतिवषट्करोति ॥ स्वधाकारोहिपितृणां ॥ सोम
मग्रेयजति ॥ सोमप्रयाजाहिपितरः ॥ सोमंपितृमंतंयजति ॥ संवत्सरोवैसोमःपितृमान् ॥ संवत्सरमेव
तद्यजति ॥ पितृन्बर्हिषदोयजति ॥ ५ ॥ येवैयज्वानः ॥ तेपितरोबर्हिषदः ॥ तानेवतद्यजति ॥ पितृनग्नि
ष्वात्तान्यजति ॥ येवाअयज्वानोगृहमेधिनः ॥ तेपितरोग्निष्वात्ताः ॥ तानेवतद्यजति ॥ अग्निंकव्यवाहनंय
जति ॥ यएवपितृणामग्निः ॥ तमेवतद्यजति ॥ ६ ॥ अथोयथाग्निꣳस्विष्टकृतंयजति ॥ तादृगेवतत् ॥
एतत्तेततयेचत्वामन्वितितिसृषुस्रक्तीषुनिदधाति ॥ तस्मादातृतीयात्पुरुषान्नामनगृह्णंति ॥ एतावंतोहीज्यं
ते ॥ अत्रपितरोयथाभागंमंदध्वमित्याह ॥ ह्रीकाहिपितरः ॥ उदंचोनिष्क्रामंति ॥ एषावैमनुष्याणां
दिक् ॥ स्वामेवतद्दिशमनुनिष्क्रामंति ॥ ७ ॥ आहवनीयमुपतिष्ठंते ॥ न्येवास्मैतध्नुवते ॥ यत्सत्याह
वनीये ॥ अथान्यत्रचरंति ॥ आतमितोरुपतिष्ठंते ॥ अग्निमेवोपद्रष्टारंकृत्वा ॥ पितृन्निरवदयंते ॥ अं

तंवाएतेप्राणानांगच्छंति ॥ यआतमितोरुपतिष्ठंते ॥ सुसंदृशंत्वावयमित्याह ॥ ८ ॥ प्राणोवैसुसंदृ
क् ॥ प्राणमेवात्मन्दंधते ॥ योजान्विंद्रतेहरीइत्याह ॥ प्राणमेवपुनरयुक्त ॥ अक्षंनमीमदंतहीतिगार्ह
पत्यमुपतिष्ठंते ॥ अक्षंनमींमदंताथत्वोपतिष्ठामहइतिवावैतदाह ॥ अमीमदंतपितरःसोम्याइत्यभिप्रप
द्यंते ॥ अमीदंतपितरोथत्वाभिप्रपद्यामहइतिवावैतदाह ॥ अपःपरिषिंचति ॥ मार्जयंत्येवैनान् ॥ ९ ॥
अथोतर्पयंत्येव ॥ तृप्यंतिप्रजयापशुभिः ॥ यएवंवेद ॥ अपबर्हिषावनूयाजौयजति ॥ प्रजावैबर्हिः ॥
प्रजाएवमृत्योरुत्सृजति ॥ चतुरःप्रयाजान्यजति ॥ द्वावनूयाजौ ॥ षट्संपद्यते ॥ षड्वाऋतवः ॥ १० ॥
ऋतूनेवप्रीणाति ॥ नपत्न्यन्वास्ते ॥ नसंयाजयंति ॥ यत्पत्न्यन्वासीत ॥ यत्संयाजयेयुः ॥ प्रमायु
काःस्यात् ॥ तस्मान्नान्वास्ते ॥ नसंयाजयंति॥ पत्नियैगोपीथाय ॥ ११ ॥ होतारमाज्यंभागौयज
तिसंततमवद्यतिव्यावृत्त्यैबर्हिषदोयजतितमेवतद्यजत्यनुनिष्क्रामंत्याहैनानृतवोनवच ९ प्रतिपूरुषमेकंपा
लान्निर्वपति ॥ जाताएवप्रजारुद्रान्निरवदयते ॥ एकमतिरिक्तं ॥ जनिष्यमाणाएवप्रजारुद्रान्निरवदयते ॥
एकंकपालाभवंति ॥ एकधैवरुद्रंनिरवदयते ॥ नाभिघारयति ॥ यदभिघारयेत् ॥ अंतरवचारिणं
रुद्रंकुर्यात् ॥ एकोल्मुकेनयंति ॥ १ ॥ तद्धिरुद्रस्यभागधेयं ॥ इमांदिशंयंति ॥ एषावैरुद्रस्यदिक् ॥
स्वायामेवदिशिरुद्रंनिरवदयते ॥ रुद्रोवाअपशुकायाआहुत्यैनातिष्ठत ॥ असौतेपशुरितिनिर्दिशेद्यंद्विष्या

त् ॥ यमेवद्वेष्टि ॥ तमस्मैपशुंनिर्दिशति ॥ यदिनाद्विष्यात् ॥ आखुस्तेपशुरितिब्रूयात् ॥ २ ॥ नग्राम्यान्पशू
न्हिनस्ति ॥ नारण्यान् ॥ चतुष्पथेजुहोति ॥ एषवाअग्नीनांपड्वीशोनाम ॥ अग्निवत्येवजुहोति ॥ मध्य
मेनपर्णेनजुहोति ॥ स्रुध्येषा ॥ अथोखलु ॥ अंतमेनैवहोतव्यं ॥ अंततएवरुद्रंनिरवदयते ॥ ३ ॥ एषते

रुद्रभागःसहस्वस्राम्बिकयेत्याह ॥ शरद्वाअस्यांबिकास्वसा ॥ तयावाएषहिनस्ति ॥ यᳪ हिनस्ति ॥
तयैवैनᳪ सहशमयति ॥ भेषजंगवइत्याह ॥ यावंतएवग्राम्याःपशवः ॥ तेभ्योभेषजंकरोति ॥ अवाम्
बरुद्रमदिमहीत्याह ॥ आशिषमेवैतामाशास्ते ॥ ४ ॥ त्र्यंबकंयजामहइत्याह ॥ मृत्योर्मुक्षीयमामृ

तादितिवावैतदाह ॥ उत्किरंति ॥ भगस्यलीप्संते ॥ मूतेकृत्वासंजंति ॥ यथाजनंयतेवसंकरोति ॥
तादृगेवतत् ॥ एषतेरुद्रभागइत्याहनिरवत्यै ॥ अप्रतीक्षमायंति ॥ अपःपरिषिंचति ॥ रुद्रस्यांतर्हि
त्यै ॥ प्रवाएतेस्माल्लोकाच्च्यवंते ॥ येत्र्यंबकैश्चरंति ॥ आदित्यंचरुंपुनरेत्यनिर्वपति ॥ इयंवाअदितिः ॥
अस्यामेवप्रतितिष्ठंति ॥ ५ ॥ यंद्विष्यात्तस्यनामगृह्णीयान्निरवदयतेशास्तेसिंचतिषट्च ॥ १० ॥ अनुमत्यैवैश्वदे

वेनताःसृष्टास्त्रिवृत्प्रजापतिःसवितोत्तरस्यांदेवासुराःसोग्निर्यत्पत्नीर्वैश्वदेवेनतावरुणप्रघासैरग्नयेदेवेभ्यःपि
तृभ्यःप्रतिपूरुषंदश ॥ १० ॥ अनुमत्यैप्रथमजोवत्सोबहुरूपाहिपशवस्तस्मात्पृथमात्रंयदग्नयेनीकवतउ
द्धारंवाअग्नयेदेवेभ्यःप्रतिपूरुषंपंचसप्ततिः ॥ ७५ ॥ ॥ हरिः ॐ ॥ ॥ एतद्ब्राह्मणान्येवपंचहवी

ꣳषिं ॥ अथैंद्रायशुनासीरायपुरोडाशंद्वादशकपालंनिर्वपति ॥ संवत्सरोवाइंद्राशुनासीरः ॥ संव
त्सरेणैवास्माअन्नमवरुंधे ॥ वायव्यंपयोभवति ॥ वायुर्वैवृष्टचैप्रदापयिता ॥ सएवास्मैवृ
ष्टिंप्रदापयति ॥ सौर्यएककपालोभवति ॥ सूर्येणवाअमुष्मिंल्लोकेवृष्टिर्धृता ॥ सएवास्मैवृष्टिंनियच्छ
ति ॥ १ ॥ द्वादशगवꣳसीरंदक्षिणासमृध्यै ॥ देवासुरा संयत्ताआसन् ॥ तेदेवाअग्निमब्रुवन् ॥
त्वयावीरेणासुरानभिभवामेति ॥ सोब्रवीत् ॥ त्रेधाहमात्मानंविकरिष्यइति ॥ सत्रेधात्मानंव्यकुरुत ॥
अग्निंतृतीयं ॥ रुद्रंतृतीयं ॥ वरुणंतृतीयं ॥ २ ॥ सोब्रवीत् ॥ कइदंतुरीयमिति ॥ अहमितींद्रोब्रवी
त् ॥ संतुसृजावहाइति ॥ तौसमसृजेतां ॥ सइंद्रस्तुरीयमभवत् ॥ यदिंद्रस्तुरीयमभवत् ॥ तदिंद्रतु
रीयस्येंद्रतुरीयत्वं ॥ ततोवैदेवाव्यजयंत ॥ यदिंद्रतुरीयंनिरुप्यतेविजित्यै ॥ ३ ॥ वहिनीधेनुर्दक्षि
णा ॥ यद्वहिनी ॥ तेनाग्नेयी ॥ यद्गौः ॥ तेनरौद्री ॥ यद्धेनुः ॥ तेनैंद्री ॥ यत्स्त्रीसतीदांता ॥ तेन
वारुणीसमृध्यै ॥ प्रजापतिर्यज्ञमसृजत ॥ ४ ॥ तꣳसृष्टꣳरक्षाꣳस्यजिघाꣳसन् ॥ सएताःप्रजापति
रात्मनोदेवतानिरमिमीत ॥ ताभिर्वैसदिग्भ्योरक्षाꣳसिप्राणुदत ॥ यत्पंचावत्तीयंजुहोति ॥ दिग्भ्यएव
तद्यजमानोरक्षाꣳसिप्रणुदते ॥ समूढꣳरक्षःसंदग्धꣳरक्षइत्याह ॥ रक्षाꣳस्येवसंदहति ॥ अग्नयेरक्षोघ्नेस्वाहे

त्याह ॥ देवताभ्यएवविजिग्यानाभ्योभागधेयंकरोति ॥ प्रष्टिवाहीरथोदक्षिणासमृध्यै ॥ ५ ॥ इंद्रोवृ
त्रꣳहत्वा ॥ असुरान्पराभाव्य ॥ नमुचिमासुरंनालभत ॥ तꣳशच्यागृह्णात् ॥ तौसमलभेतां ॥ सो
स्मादभिशुनतरोभवत् ॥ सोब्रवीत् ॥ संधाꣳसंदधावहै ॥ अथत्वावंस्रक्ष्यामि ॥ नमाशुष्केणना
र्द्रेणहनः ॥ ६ ॥ नदिवाननक्तमिति ॥ सएतमपांफेनमसिंचत् ॥ नवाएषशुष्कोनार्द्रोव्युष्टा
सीत् ॥ अनुदितःसूर्यः ॥ नवाएतद्दिवाननक्तं ॥ तस्यैतस्मिन्लोके ॥ अपांफेनेनशिरउदवर्तय
त् ॥ तदेनमन्ववर्त्तत ॥ मित्रद्रुगिति ॥ ७ ॥ सएतानपामार्गानजनयत् ॥ तानजुहोत् ॥
तैर्वैसरक्षाꣳस्यपाहत ॥ यदपामार्गहोमोभवति ॥ रक्षसामपहत्यै ॥ एकोल्मुकेनयंति ॥ तद्धिरक्ष
सांभागधेयं ॥ इमांदिशंयंति ॥ एषावैरक्षसांदिक् ॥ स्वायामेवदिशिरक्षाꣳसिहंति ॥ ८ ॥ स्वकृ
तइरिणेजुहोतिप्रदरेवा ॥ एतद्वैरक्षसामायतनं ॥ स्वएवायतनेरक्षाꣳसिहंति ॥ पर्णमयेनस्रुवेण
जुहोति ॥ ब्रह्मवैपर्णः ॥ ब्रह्मणैवरक्षाꣳसिहंति ॥ देवस्यत्वासवितुःप्रसवइत्याह ॥ सवितृ
प्रसूतएवरक्षाꣳसिहंति ॥ हतꣳरक्षोवधिष्मरक्षइत्याह ॥ रक्षसाꣳस्तृत्यै ॥ यद्वस्तेतद्दक्षि
णानिरवत्यै ॥ अप्रतीक्षमायंति ॥ रक्षसामंतर्हित्यै ॥ ९ ॥ यच्छतिवरुणंतृतीयंविजित्याअसृजतसमृ

ध्यैहनोमित्रंद्रुगितिहंतिस्तृत्यैत्रीणिंच ॥१ ॥ धात्रेपुंरोडाशंद्वादंशकपालंनिर्वंपति ॥ संवत्सरोवैधाता ॥
संवत्सरेणैवास्मैंप्रजाःप्रजंनयति ॥ अन्वेवास्माअनुंमतिर्मन्यते ॥ रातेराका ॥ प्रसिंनीवालीजंनयाति ॥
प्रजास्वेवप्रजांतासुह्वांवाचंदधाति ॥ मिथुनौगावौदक्षिंणासमृंध्यै ॥ आग्नावैष्णवमेकांदशकपालंनिर्वं
पति ॥ ऐंद्रावैष्णवमेकांदशकपालं ॥ १ ॥ वैष्णवंत्रिंकपालं ॥ वीर्यंवाअग्निः ॥ वीर्यंमिंद्रः ॥ वीर्यं
विष्णुः ॥ प्रजाएवप्रजांतावीर्यंप्रतिंष्ठापयति ॥ तस्मांत्प्रजावीर्यावतोः ॥ वामनऋंषभोवहीदक्षिंणा ॥
यद्वही ॥ तेनांग्नेयः ॥ यदृंषभः ॥ २ ॥ तेनैंद्रः ॥ यद्वांमनः ॥ तेनंवैष्णवःसमृंध्यै ॥ अग्नीषोमीय
मेकांदशकपालंनिर्वंपति ॥ इंद्रासोमीयमेकांदशकपालं ॥ सौम्यंचरुं ॥ सोमोवैरेतोधाः ॥ अग्निःप्र
जानांप्रजनयिता ॥ वृद्धानामिंद्रःप्रदापयिता ॥ सोमएवास्मैरेतोदधाति ॥ ३ ॥ अग्निःप्रजांप्रजंनय
ति ॥ वृद्धामिंद्रःप्रयंच्छति ॥ बभ्रुर्दक्षिंणासमृंध्यै ॥ सोमापौष्णंचरुंनिर्वंपति ॥ ऐंद्रापौष्णंचरुं ॥ सो
मोवैरेतोधाः ॥ पूषापशूनांप्रजनयिता ॥ वृद्धानामिंद्रःप्रदापयिता ॥ सोमएवास्मैरेतोदधाति ॥ पूषाप
शून्प्रजंनयति ॥ ४ ॥ वृद्धानिंद्रःप्रयंच्छति ॥ पौष्णश्चरुर्भवति ॥ इयंवैपूषा ॥ अस्यामेवप्रतितिष्ठति॥
श्यामोदक्षिंणासमृंध्यै ॥ बहुवैपुरुंषोमेध्यमुपंगच्छति ॥ वैश्वानरंद्वादंशकपालंनिर्वंपति ॥ संवत्सरो

वाअग्निर्वैश्वानरः ॥ संवत्सरेणैवैनंस्वदयति ॥ हिरण्यंदक्षिणा ॥ ५ ॥ पवित्रंवैहिरण्यं ॥ पुनात्ये
वैनं ॥ बहुवैराजन्योनृतंकरोति ॥ उपजाम्यैहरते ॥ जिनातिब्राह्मणं ॥ वदत्यनृतं ॥ अनृतेखलुवै
क्रियमाणेवरुणोगृह्णाति ॥ वारुणंयवमयंचरुंनिर्वपति ॥ वरुणपाशादेवैनंमुंचति ॥ अश्वोदक्षिणा ॥
वारुणोहिदेवतयाश्वःसमृध्यै ॥ ६ ॥ ऐंद्रावैष्णवमेकादशकपालंयद्दषभोदधातिपूषापशून्प्रजनयतिहिरं
ण्यंदक्षिणादक्षिणैकंच ॥ २ ॥ रत्निनामेतानिहवींषिभवंति ॥ एतेवैराष्ट्रस्यप्रदातारः ॥ एतेपादातारः॥
यएवराष्ट्रस्यप्रदातारः ॥ येपादातारः ॥ तएवास्मैराष्ट्रंप्रयच्छंति ॥ राष्ट्रमेवभवति ॥ यत्समाहृत्यनिर्व
पेत् ॥ अरत्निनस्युः ॥ यथायथंनिर्वपतिरत्नित्वाय ॥ १ ॥ यत्सद्योनिर्वपेत् ॥ यावतीमेकेनहविषा
शिषमवरुंधे ॥ तावतीमवरुंधीत ॥ अन्वहंनिर्वपति ॥ भूयसीमेवाशिषमवरुंधे ॥ भूयसोयज्ञक्रतूनुपै
ति ॥ बार्हस्पत्यंचरुंनिर्वपतिब्रह्मणोगृहे ॥ मुखतएवास्मैब्रह्मसंश्यति ॥ अथोब्रह्मन्नेवक्षत्रमन्वारंभ
यति ॥ शितिपृष्ठोदक्षिणासमृध्यै ॥ २ ॥ ऐंद्रमेकादशकपालंराजन्यस्यगृहे ॥ इंद्रियमेवावरुंधे ॥
ऋषभोदक्षिणासमृध्यै ॥ आदित्यंचरुंमहिष्यैगृहे ॥ इयंवाअदितिः ॥ अस्यामेवप्रतितिष्ठति ॥ धेनुर्द
क्षिणासमृध्यै ॥ भगायचरुंवावातायैगृहे ॥ भगमेवास्मिन्दधाति ॥ विचित्तगर्भापष्ठौहीदक्षिणासमृ

ध्यै ॥ ३ ॥ नैर्ऋतंचरुंपरिवृक्त्यैगृहेकृष्णानांव्रीहीणांनखनिर्भिन्नं ॥ पाप्मानमेवनिर्ऋतिंनिरवदयते ॥
कृष्णाकूटादक्षिणासमृध्यै ॥ आग्नेयमष्टाकपालꣳसेनान्योगृहे ॥ सेनामेवास्यसꣳश्यति ॥ हिरण्यं
दक्षिणासमृध्यै ॥ वारुणंदशकपालꣳसूतस्यगृहे ॥ वरुणसवमेवावरुंधे ॥ महानिरष्टोदक्षिणासमृ
ध्यै ॥ मारुतꣳसप्तकपालंग्रामण्योगृहे ॥ ४ ॥ अन्नंवैमरुतः ॥ अन्नमेवावरुंधे ॥ पृश्निर्दक्षिणासमृ
ध्यै ॥ सावित्रंद्वादशकपालंक्षत्तुर्गृहेप्रसूत्यै ॥ उपध्वस्तोदक्षिणासमृध्यै ॥ आश्विनंद्विकपालꣳसंग्रही
तुर्गृहे ॥ अश्विनौवैदेवानांभिषजौ ॥ ताभ्यामेवास्मैभेषजंकरोति ॥ सवात्यौदक्षिणासमृध्यै ॥ पौष्णं
चरुंभागदुघस्यगृहे ॥ ५ अन्नंवैपूषा ॥ अन्नमेवावरुंधे ॥ श्यामोदक्षिणासमृध्यै ॥ रौद्रंगावीधुकंच
रुमक्षावापस्यगृहे ॥ अंततएवरुद्रंनिरवदयते ॥ शबलउद्वारोदक्षिणासमृध्यै ॥ द्वादशैतानिहवीꣳषिभ
वंति ॥ द्वादशमासाःसंवत्सरः ॥ संवत्सरेणैवास्मैराष्ट्रमवरुंधे ॥ राष्ट्रमेवभवति ॥ ६ ॥ यंनप्रतिनिर्व
पेत् ॥ रत्निनआशिषोवरुंधीरन् ॥ प्रतिनिर्वपति ॥ इंद्रायसुत्राम्णेपुरोडाशमेकादशकपालं ॥ इंद्रायाꣳ
होमुचे ॥ आशिषएवावरुंधे ॥ अयंनोराजावृत्रहाराजाभूत्वावृत्रंवध्यादित्याह ॥ आशिषमेवैतामाशास्ते ॥

मैत्राबार्हस्पत्यंभवति ॥ श्वेतायैश्वेतवत्सायैदुग्धे ॥ ७ ॥ बार्हस्पत्येमैत्रमपिदधाति ॥ ब्रह्मंचैवास्मैक्ष
त्रंचसमीचीदधाति ॥ अथोब्रह्मंन्नेवक्षत्रंप्रतिष्ठापयति ॥ बार्हस्पत्येनपूर्वेणप्रचरति ॥ मुखतएवास्मै
ब्रह्मसꣳश्यति ॥ अथोब्रह्मंन्नेवक्षत्रमन्वारंभयति ॥ स्वयंकृतावेदिर्भवति ॥ स्वयंदिनंबर्हिः ॥ स्वयंकृ
तइध्मः ॥ अनभिजितस्याभिजित्यै ॥ तस्माद्राज्ञामरण्यमभिजितं ॥ सैवश्वेताःश्वेतवत्सादक्षिणासमृ
ध्यै ॥ ८ ॥ रत्नित्वायसमृध्यैपष्ठौहीदक्षिणासमृध्यैग्रामण्योगृहेभागदुघस्यगृहेभवतिदुग्धोभिजि
त्यैद्वेच ॥ २ ॥ देवसुवामेतानिहवीꣳषिभवंति ॥ एतावंतोवेदैवानाꣳसवाः ॥ तएवास्मैसवान्प्रयच्छं
ति ॥ तएनꣳसुवंते ॥ अग्निरेवैनंगृहपतीनाꣳसुवते ॥ सोमोवनस्पतीनां ॥ रुद्रःपशूनां ॥ बृहस्प
तिर्वाचां ॥ इंद्रोज्येष्ठानां ॥ मित्रःसत्यानां ॥ १ ॥ वरुणोधर्मपतीनां ॥ एतदेवसर्वंभवति ॥ स
वितात्वांप्रसवानाꣳसुवतामितिहस्तंगृह्णाति प्रसूत्यै ॥ येदेवादेवसुवःस्थेत्याह ॥ यथायजुरेवैतत् ॥
महतेक्षत्रायमहतआधिपत्यायमहतेजानराज्यायेत्याह ॥ आशिषमेवैतामाशास्ते ॥ एषवोभरताराजासो
मोस्माकंब्राह्मणानाꣳराजेत्याह ॥ तस्मात्सोमराजानोब्राह्मणाः ॥ प्रतित्यंनामराज्यमधायीत्याह ॥ २ ॥ राज्य
मेवास्मिन्प्रतिदधाति ॥ स्वांतनुवंवरुणोअशिश्रेदित्याह ॥ वरुणसवमेवावरुंधे ॥ शुचेर्मित्रस्यव्रत्याअभू

मेत्याह ॥ शुचिमेवैनंव्रत्यंकरोति ॥ अमन्महिमहृतक्रतस्यनामेत्याह ॥ मनुतएवैनं ॥ सर्वेव्रातावरु
णस्याभूवन्नित्याह ॥ सर्वंव्रातमेवैनंकरोति ॥ विमित्रएवैरराँतिमतारीदित्याह ॥ ३ ॥ अरातिमेवैनंता
रयति ॥ असूषुदंतयज्ञियाक्रतेनेत्याह ॥ स्वदयत्येवैनं ॥ व्युत्रितोजरिमाणंनआनडित्याह ॥ आयुरेवा
स्मिन्दधाति ॥ द्वाभ्यांविमृष्टे ॥ द्विपाद्यजमानःप्रतिष्ठित्यै ॥ अग्नीषोमीयस्यचैकादशकपालस्यदेवसु
वांचहविषामग्नयेस्विष्टकृतेसमवद्यति ॥ देवताभिरेवैनमुभयतःपरिगृह्णाति ॥ विष्णुक्रमान्क्रमते ॥
विष्णुरेवभूत्वेमाल्लोकानभिजयति ॥ ४ ॥ सत्यानामधायीत्याहातारीदित्याहक्रमतएकंच ॥ ४ ॥
अर्थेतस्थेतिजुहोति ॥ आहुत्यैवैनानिष्क्रीयगृह्णाति ॥ अथोहविष्कृतानामेवाभिघृतानांगृह्णाति ॥ वहं
तीनांगृह्णाति ॥ एतावाअपाꣳराष्ट्रं ॥ राष्ट्रमेवास्मैगृह्णाति ॥ अथोश्रियमेवैनमभिवहंति ॥ अपांपति
रसीत्याह ॥ मिथुनमेवाकः ॥ वृषास्यूर्मिरित्याह ॥ १ ॥ ऊर्मिमंतमेवैनंकरोति ॥ वृषसेनोसीत्या
ह ॥ सेनामेवास्यसꣳश्यंति ॥ व्रजक्षितस्थेत्याह ॥ एतावाअपांविशः ॥ विशमेवास्मैपर्यूहति ॥ म
रुतामोजःस्थेत्याह ॥ अन्नंवैमरुतः ॥ अन्नमेवावरुंधे ॥ सूर्यवर्चसःस्थेत्याह ॥ २ ॥ राष्ट्रमेववर्चस्वं
कः ॥ सूर्यत्वचसःस्थेत्याह ॥ सत्यंवाएतत् ॥ यद्वर्षति ॥ अनृतंयदातपतिवर्षति ॥ सत्यानृतेएवावं

रुंधे ॥ नैनꣳसत्यानृतेउदितेहिꣳस्तः ॥ यएवंवेद ॥ मांदाःस्थेत्याह ॥ राष्ट्रमेवब्रह्मवर्चस्यंकः ॥ ३ ॥ वाशाःस्थेत्याह ॥ राष्ट्रमेववश्यंकः ॥ शक्करीःस्थेत्याह ॥ पशवोवैशक्करीः ॥ पशूनेवावरुंधे ॥ विश्वभृतःस्थेत्याह ॥ राष्ट्रमेवपयस्व्यंकः ॥ जनभृतःस्थेत्याह ॥ राष्ट्रमेवेंद्रियाव्यंकः ॥ अग्नेस्तेजस्याःस्थेत्याह ॥ ४ ॥ राष्ट्रमेवतेजस्व्यंकः ॥ अपामोषधीनाꣳरसःस्थेत्याह ॥ राष्ट्रमेवमधव्यंमकः ॥ सारस्वतंग्रहंगृह्णाति ॥ एषावाअपांपृष्ठं ॥ यत्सरस्वती ॥ पृष्ठमेवैनꣳसमानानांकरोति ॥ षोडशभिर्गृह्णाति ॥ षोडशकलोवैपुरुषः ॥ यावानेवपुरुषः ॥ तस्मिन्वीर्यंदधाति ॥ षोडशभिर्जुहोतिषोडशभिर्गृह्णाति ॥ द्वात्रिꣳशत्संपद्यंते ॥ द्वात्रिꣳशदक्षरानुष्टुक् ॥ वागनुष्टुप्सर्वाणिच्छंदाꣳसि ॥ वाचैवैनꣳसर्वेभिश्छंदोभिरभिषिंचति ॥ ५ ॥ ऊर्मिरित्याहसूर्यवर्चसःस्थेत्याहब्रह्मवर्चस्यंकस्तेजस्याःस्थेत्याहैवपुरुषःषट्र्चं ॥ ५ ॥ देवीरापःसंमधुमतीर्मधुमतीभिःसृज्यध्वमित्याह ॥ ब्रह्मणैवैनाःसꣳसृजति ॥ अनाधृष्टाःसीदतेत्याह ॥ ब्रह्मणैवैनाःसादयति ॥ अंतराहोतुश्चधिष्णियंब्राह्मणाच्छꣳसिनंश्चसादयति ॥ आग्नेयोवैहोता ॥ ऐंद्रोब्राह्मणाच्छꣳसी ॥ तेजसाचैवेंद्रियेणचोभयतोराष्ट्रंपरिगृह्णाति ॥ हिरण्येनोत्पुनाति ॥ आहुत्यैहिपवित्राभ्यामुत्पुनंतिव्यावृत्त्यै ॥ १ ॥ शतमानंभवति ॥ शतायुःपुरुषःशतेंद्रियः ॥ आयु

ष्येवेंद्रियेप्रतितिष्ठति ॥ अनिभृष्टमसीत्याह ॥ अनिभृष्टँह्येतत् ॥ वाचोबंधुरित्याह ॥ वाचोह्येषबं
धुः ॥ तपोजाइत्याह ॥ तपोजाह्येतत् ॥ सोमस्यदात्रमसीत्याह॥ सोमस्यह्येतद्दात्रं॥ शुक्रावःशुक्रेणो
त्पुनामीत्याह ॥शुक्राह्यापः॥ शुक्रँहिरण्यं ॥ चंद्राश्चंद्रेणेत्याह ॥ चंद्राह्यापः॥ चंद्रँहिरण्यं ॥ अमृता
अमृतेनेत्याह ॥ अमृताह्यापः॥ अमृतँहिरण्यं ॥ ३ ॥ स्वाहाराजसूयायेत्याह ॥ राजसूयायह्येनाउत्पु
नाति ॥ सधमादोद्युम्निनीरूर्जएताइतिवारुण्यचागृह्णाति ॥ वरुणसवमेवावरुंधे ॥ एकयागृह्णा
ति ॥ एकधैवयजमानेवीर्यंदधाति ॥ क्षत्रस्योल्बमसिक्षत्रस्ययोनिरसीतिताप्यंचोष्णीषंचप्रयच्छ
तिसयोनित्वाय ॥ एकंशतेनदर्भपुंजीलैःपवयति ॥ शतायुर्वैपुरुषःशतवीर्यः ॥ आत्मैकंशतः ॥ ४ ॥
यावानेवपुरुषः ॥ तस्मिन्वीर्यंदधाति ॥ दध्याशयति ॥ इंद्रियमेवावरुंधे ॥ उदुंबरमाशयति ॥ अन्ना
द्यस्यावरुध्यै ॥ शष्पाण्याशयति ॥ सुराबलिमेवैनंकरोति ॥ आविदएताभवंति ॥ आविदमेवैनंगम
यंति ॥ ५ ॥ अग्निरेवैनंगार्हपत्येनावति ॥ इंद्रइंद्रियेण ॥ पूषापशुभिः ॥ मित्रावरुणौप्राणापानाभ्यां ॥
इंद्रोवृत्रायवज्रमुदयच्छत् ॥ सदिवमालिखत् ॥ सोर्यम्णःपंथाअभवत् ॥ सआविन्नद्यावापृथिवीधृतव्रं

तेइतिद्यावापृथिवीउपाधावत् ॥ सआभ्यामेवप्रसूतइंद्रोवृत्रायवज्रंप्राहरत् ॥ आविन्नेद्यावापृथिवीधृतव्र
तेइतियदाह ॥ ६ ॥ आभ्यामेवप्रसूतोयजमानोवज्रंभ्रातृव्यायप्रहरति ॥ आविन्नादेव्यदितिर्विश्वरू
पीत्याह ॥ इयंवैदेव्यदितिर्विश्वरूपा ॥ अस्यामेवप्रतितिष्ठति ॥ आविन्नोयमसावामुष्यायणोस्यांवि
श्यस्मिन्राष्ट्रइत्याह ॥ विशैवैनꣳराष्ट्रेणसमर्धयति ॥ महतेक्षत्रायमहतआधिपत्यायमहतेजानराज्याये
त्याह ॥ आशिषमेवैतामाशास्ते ॥ एषवोभरताराजासोमोस्माकंब्राह्मणानाꣳराजेत्याह ॥ तस्मात्सोमरा
जानोब्राह्मणाः ॥ ७ ॥ इंद्रस्यवज्रोसिवार्त्रघ्नइतिधनुःप्रयच्छतिविजित्यै ॥ शत्रुबाधनास्थतोपून् ॥
शत्रूनेवास्यबाधंते ॥ पातमाप्रत्यंचंपातमातिर्यंचमन्वंचमापातेत्याह ॥ तिस्रोवैशरव्याः ॥ प्रतीचीति
रश्च्यनूची ॥ ताभ्यएवैनंपाति ॥ दिग्भ्योमापातेत्याह ॥ दिग्भ्यएवैनंपाति ॥ विश्वाभ्योमानाष्ट्राभ्यः
पातेत्याह ॥ अपरिमितादेवैनंपाति ॥ हिरण्यवर्णावुषसांविरोकइतित्रिष्टुभावाहूउद्गृह्णाति ॥ इंद्रियंवैवी
र्यंत्रिष्टुक् ॥ इंद्रियमेववीर्यमुपरिष्टादात्मन्धत्ते ॥ ८ ॥ व्यावृत्त्यैदात्रमसीत्याहामृतꣳहिरण्यमेकशतोगम
यंत्याहब्राह्मणानाष्ट्राभ्यःपातेत्याहचत्वारिंच ॥ ६ ॥ दिशोव्यास्थापयति ॥ दिशामभिजित्यै ॥ यदनु
प्रक्रामेत् ॥ अभिदिशोजयेत् ॥ उत्तुमाद्येत् ॥ मनसानुप्रक्रामति ॥ अभिदिशोजयति ॥ नोन्माद्य
ति ॥ समिधमातिष्ठेत्याह ॥ तेजएवावरुंधे ॥ १ ॥ उग्रामातिष्ठेत्याह ॥ इंद्रियमेवावरुंधे ॥ विराजमा

कृ०य० तिष्ठेत्याह ॥ अन्नाद्यमेवावरुंधे ॥ उदीचीमातिष्ठेत्याह ॥ पशूनेवावरुंधे ॥ ऊर्ध्वामातिष्ठेत्याह ॥ सुवर्ग मेवलोकमभिजयति ॥ अनूज्जिहीते ॥ सुवर्गस्यलोकस्यसमष्ट्यै ॥ २ ॥ मारुतएषभवति ॥ अन्नं वैमरुतः ॥ अन्नमेवावरुंधे ॥ एकविंशतिकपालोभवतिप्रतिष्ठित्यै ॥ योरण्येनुवाक्योगणः ॥ तंमध्यत उपदधाति ॥ ग्राम्यैरेवपशुभिरारण्यान्पशून्परिगृह्णाति ॥ तस्माद्ग्राम्यैःपशुभिरारण्याःपशवःपरिगृही ताः ॥ पृथिर्वैन्यः ॥ अभ्यषिच्यत ॥ ३ ॥ सराष्ट्रंनाभवत् ॥ सएतानिपार्थान्यपश्यत् ॥ तान्यजुहो त् ॥ तैर्वैसराष्ट्रमभवत् ॥ यत्पार्थानिजुहोति ॥ राष्ट्रमेवभवति ॥ बार्हस्पत्यंपूर्वेषा मुत्तमंभवति ॥ ऐंद्रमुत्तरेषांप्रथमं ॥ ब्रह्मचैवास्मैक्षत्रंचसमीचीदधाति ॥ अथोब्रह्मन्नेवक्षत्रंप्रतिष्ठापयति ॥ ४ ॥ षट्पुरस्तादभिषेकस्यजुहोति ॥ षडुपरिष्टात् ॥ द्वादशसंपद्यंते ॥ द्वादशमासाःसंवत्सरः ॥ संवत्सरःखलुवैदेवानांपूः ॥ देवानामेवपुरंमध्यतोव्यवसर्पति ॥ तस्यनकुतश्चनोपाव्याधोभवति ॥ भू तानामवेष्टीर्जुहोति ॥ अत्रात्रवैमृत्युर्जायते ॥ यत्रयत्रैवमृत्युर्जायते ॥ ततएवैनमवयजते ॥ तस्मा द्राजसूयेनेजानःसर्वमायुरेति ॥ सर्वेह्यस्यमृत्यवोवेष्टाः ॥ तस्माद्राजसूयेनेजानोनाभिचरितवै ॥ प्र त्यगेनमभिचारस्तृणुते ॥ ५ ॥ रुंधेसमष्ट्याअसिच्यतस्थापयतिजायंतेपंचच ॥ ७ ॥ सोमस्य तै०ब्रा०

॥५२॥ ॥५२॥

त्विषिरसितवेवमेत्विषिर्भूयादितिशार्दूलचर्मोपस्तृणाति ॥ यैवसोमेत्विषिः ॥ याशार्दूले ॥ तामेवा
वरुंधे ॥ मृत्योर्वाएषवर्णः ॥ यच्छार्दूलः ॥ अमृतꣳहिरण्यं ॥ अमृतमासिमृत्योर्मापाहीतिहिरण्यमु
पास्यति ॥ अमृतमेवमृत्योरंतर्धत्ते ॥ शतमानंभवति ॥ १ ॥ शतायुःपुरुषःशतेंद्रियः ॥ आयुष्ये
वेंद्रियेप्रतितिष्ठति ॥ दिद्योन्मापाहीत्युपरिष्टादधिनिदधाति ॥ उभयतएवास्मैशर्मदधाति ॥ अवेष्टादं
दशूकाइतिक्लीबꣳसीसेनविध्यति ॥ दंदशूकानेवावयजते ॥ तस्मात्क्लीबंदंदशूकादꣳशुकाः ॥ नि
रस्तंनमुचेःशिरइतिलोहितायसंनिरस्यति ॥ पाप्मानमेवनमुचिंनिरवदयते ॥ प्राणाआत्मनःपूर्वे
भिषिच्याइत्याहुः ॥ २ ॥ सोमोराजावरुणः ॥ देवाधर्मसुवश्चये ॥ तेतेवाचꣳसुवंतांतेतेप्रा
णꣳसुवंतामित्याह ॥ प्राणानेवात्मनःपूर्वानभिषिंचति ॥ यद्ब्रूयात् ॥ अग्नेस्त्वातेजसाभिषिंचामी
ति ॥ तेजस्व्येवस्यात् ॥ दुश्चर्मातुभवेत् ॥ सोमस्यत्वाद्युम्नेनाभिषिंचामीत्याह ॥ सौम्योवैदेवत
यापुरुषः ॥ ३ ॥ स्वयैवैनंदेवतयाभिषिंचति ॥ अग्नेस्तेजसेत्याह ॥ तेजएवास्मिन्दधाति ॥ सूर्य
स्यवर्चसेत्याह ॥ वर्चएवास्मिन्दधाति ॥ इंद्रस्येंद्रियेणेत्याह ॥ इंद्रियमेवास्मिन्दधाति ॥ मित्रावरु
णयोर्वीर्येणेत्याह ॥ वीर्यमेवास्मिन्दधाति ॥ मरुतामोजसेत्याह ४ ओजएवास्मिन्दधाति ॥ क्षत्राणां

क्षत्रपतिरसीत्यांह ॥ क्षत्राणांमेवैनंक्षत्रपंतिंकरोति ॥ अतिदिवस्पाहीत्यांह ॥ अत्यन्यान्पाहीतिवावैत
दांह ॥ समावंवृत्रन्नधरागुदींचीरित्यांह ॥ राष्ट्रमेवास्मिंन्ध्रुवमंकः ॥ उच्छेषंणेनजुहोति ॥ उच्छेषंण
भागोवैरुद्रः ॥ भागधेयेनैवरुद्रंनिरवंदयते ॥ ५ ॥ उदंङ्परेत्याग्नीध्रेजुहोति ॥ एषावैरुद्रस्यदिक् ॥
स्वायांमेवदिशिरुद्रंनिरवंदयते ॥ रुद्रयत्तेक्रयीपरंनामेत्यांह ॥ यद्वाअंस्यक्रयीपरन्नामं ॥ तेनवाएषहिं
नस्ति ॥ यश्हिनस्तिं ॥ तेनैवैनं्सहशंमयति ॥ तस्मैंहुतमंसियमेष्टमसीत्यांह ॥ यमादेवास्यंमृत्युम
वंयजते ॥ ६ प्रजांपतेनत्वदेतान्यन्यइतितस्यैंगृहेजुंहुयात् ॥ यांकामयेंतराष्ट्रमंस्यैप्रजाःस्यादितिं ॥ रा
ष्ट्रमेवास्यैंप्रजाभंवति ॥ पर्णमयेंनाध्वर्युरभिषिंचति ॥ ब्रह्मवर्चसमेवास्मिन्त्विषिंदधाति ॥ औदुंबरेणरा
जन्यंः ॥ ऊर्जंमेवास्मिंन्नन्नाद्यंदधाति ॥ आश्वंत्थेनवैश्यंः ॥ विशंमेवास्मिन्पुष्टिंदधाति ॥ नय्यंग्रोधेन
जन्यंः ॥ मित्राण्येवास्मैंकल्पयति ॥ अथोप्रतिंष्ठित्यै ७ भवत्याहुःपुरुंषओजसेत्यांहनिरवंदयतेयजनेज
न्योद्वेचं ॥ ८ ॥ इंद्रस्यवज्रोंसिवार्त्रघ्नइतिरथंमुपावंहरातिविजिंत्यै ॥ मित्रावरुंणयोस्त्वाप्रशास्त्रोःप्रशिषा
युनज्मीत्यांह ॥ ब्रह्मंणैवैनंदेवताभ्यांयुनक्ति ॥ प्रष्टिवाहिंनंयुनक्ति ॥ प्रष्टिवाहीवैदेवरथः ॥ देवरथमे
वास्मैंयुनक्ति ॥ त्रयोश्वांभवंति ॥ रथंश्चतुर्थः ॥ द्वौसंव्येष्ठसारथी ॥ षट्संपद्यंते ॥ १ ॥ षड्वाऋतवंः॥

ऋतुभिरेवैनंयुनक्ति ॥ विष्णुक्रमान्क्रंमते ॥ विष्णुरेवभूत्वेमाल्लोँकानभिजंयति ॥ यःक्षत्रियःप्रतिहितः॥
सोन्वारंभते ॥ राष्ट्रमेवभंवति ॥ त्रिष्टुभान्वारंभते ॥ इंद्रियंवैत्रिष्टुक् ॥ इंद्रियमेवयजंमानेदधाति ॥
॥ २ ॥ मरुतांप्रसवेजेषमित्यांह ॥ मरुद्भिरेवप्रसूतउन्नंयति ॥ आप्तंमनइत्यांह ॥ यदेवमनसैप्सोत्
तदांपत् ॥ राजन्यंजिनाति ॥ अनांक्रांतएवाक्रंमते ॥ विवाएषइंद्रियेणंवीर्येणंध्यते ॥ योरांजन्यंजि
नाति ॥ समहमिंद्रियेणंवीर्येणेत्यांह ॥ ३ ॥ इंद्रियमेववीर्यमात्मन्धंत्ते ॥ पशूनांमन्युरंसितवेवमेमन्यु
र्भूयादितिवाराहीउपानहावुपंमुंचते ॥ पशूनांवाएषमन्युः ॥ यद्वराहः ॥ तेनैवपंशूनांमन्युमात्मन्धंत्ते ॥
अभिवाइयंसुषुवाणंकांमयते ॥ तस्यैश्वरेंद्रियवीर्यमादांतोः ॥ वाराहीउपानहावुपंमुंचते ॥ अस्याए
वांतर्धत्ते ॥ इंद्रियस्यवीर्यस्यानांत्यै ॥ ४ ॥ नमोमात्रेपृथिव्याइत्याहाहिंसायै ॥ इयंदस्यायुरस्यायु
र्मेधेहीत्यांह ॥ आयुरेवात्मन्धंत्ते ॥ ऊर्गस्यूर्जंमेधेहीत्यांह ॥ ऊर्जमेवात्मन्धंत्ते ॥ युङ्ङसिवर्चोसिवर्चोम
यिधेहीत्यांह ॥ वर्चएवात्मन्धंत्ते ॥ एकधाब्रह्मणउपंहरति ॥ एकधैवयजंमानआयुरूर्जंवर्चोदधाति ॥
रथविमोचनीयांजुहोतिप्रतिष्ठित्यै ॥५॥ त्रयोश्वांभवंति ॥ रथंश्चतुर्थः ॥ तस्मांच्चतुर्जुहोति ॥ यदुभौसहाव

तिष्ठेतां ॥ समानंलोकमियातां ॥ सहसꣳग्रहीत्रारथवाहनेरथमादधाति ॥ संवर्गादेवैनंलोकादंतर्दधाति ॥ ह
ꣳसःशुचिषदित्यादधाति ॥ ब्रह्मणैवैनमुपावहरति ॥ ब्रह्मणादधाति ॥ अतिच्छंदसादधाति ॥ अतिच्छं
दावैसर्वाणिच्छंदाꣳसि ॥ सर्वेभिरेवैनंच्छंदोभिरादधाति ॥ वर्ष्मवाएषाछंदसां ॥ यदतिच्छंदाः ॥
यदतिच्छंदसादधाति ॥ वर्ष्मैवैनꣳसमानानांकरोति ॥ ६ ॥ पद्यंतेदधातिवीर्येणेत्याहानात्यैप्रतिष्ठि
त्यैब्रह्मणादधातिसप्तचं ॥ ९ ॥ मित्रोसिवरुणोसीत्याह ॥ मैत्रंवाअहः ॥ वारुणीरात्रिः ॥ अहोरा
त्राभ्यामेवैनमुपावहरति ॥ मित्रोसिवरुणोसीत्याह ॥ मैत्रोवैदक्षिणः ॥ वारुणःसव्यः ॥ वैश्वदेव्या
मिक्षां ॥ स्वमेवैनौभागधेयमुपावहरति ॥ समहंविश्वैर्देवैरित्याह ॥ १ ॥ वैश्वदेव्योवैप्रजाः ॥ ताए
वाद्याःकुरुत ॥ क्षत्रस्यनाभिरसिक्षत्रस्ययोनिरसीत्यधीवासमास्तृणातिसयोनित्वाय ॥ स्योनामासीदसु
षदामासीदेत्याह ॥ यथायजुरेवैतत् ॥ मात्वाहिꣳसीन्मामाहिꣳसीदित्याहाहिꣳसायै ॥ निषसादधृत
व्रतोवरुणःपस्त्यास्वासाम्राज्यायसुक्रतुरित्याह ॥ साम्राज्यमेवैनꣳसुक्रतुंकरोति ॥ ब्रह्मां३त्वꣳराजन्ब्रह्मा
सिसवितासिसत्यसवइत्याह ॥ सवितारमेवैनꣳसत्यसवंकरोति ॥ २ ॥ ब्रह्मां३त्वꣳराजन्ब्रह्मासीन्द्रो

सिसत्यौजाइत्याह ॥ इंद्रमेवैनं सत्यौजसंकरोति ॥ ब्रह्मां३त्वं राजन्ब्रह्मासिमित्रोसिसुशेवइत्याह ॥
मित्रमेवैनं सुशेवंकरोति ॥ ब्रह्मां३त्वं राजन्ब्रह्मासिवरुणोसिसत्यधर्मेत्याह ॥ वरुणमेवैनं सत्यध
र्माणंकरोति ॥ सवितासिसत्यसवइत्याह ॥ गायत्रीमेवैतेनाभिव्याहरति ॥ इंद्रोसिसत्यौजाइत्या
ह ॥ त्रिष्टुभमेवैतेनाभिव्याहरति ॥ ३ ॥ मित्रोसिसुशेवइत्याह ॥ जगतीमेवैतेनाभिव्याहर
ति ॥ सत्यमेतादेवताः ॥ सत्यमेतानिच्छंदांसि ॥ सत्यमेवावरुंधे ॥ वरुणोसिसत्यधर्मेत्याह ॥ अ
नुष्टुभमेवैतेनाभिव्याहरति ॥ सत्यानृतेवाअनुष्टुप् ॥ सत्यानृतेवरुणः ॥ सत्यानृतेएवावरुंधे ॥ ४ ॥ नै
नंसत्यानृतेउदितेहिंस्तः ॥ यएवंवेद ॥ इंद्रस्यवज्रोसिवार्त्रघ्नइतिस्फ्यंप्रयच्छति ॥ वज्रोवैस्फ्यः ॥
वज्रेणैवास्माअवरपरंरंधयति ॥ एवंहितच्छ्रेयः ॥ यदस्माएतेरध्येयुः ॥ दिशोभ्ययंराजाभूदितिपं
चाक्षान्प्रयच्छति ॥ एतेवैसर्वेयाः ॥ अपराजायिनमेवैनंकरोति ॥ ५ ॥ ओदनमुद्बवते ॥ परमेष्ठीवाए
षः ॥ यदोदनः ॥ परमामेवैनंश्रियंगमयति ॥ सुश्लोकां३ सुमंगलां३ सत्यराजा३नित्याह ॥ आ
शिषमेवैतामाशास्ते ॥ शौनःशेपमाख्यापयते ॥ वरुणपाशादेवैनंमुंचति ॥ परःशतंभवति ॥ शतायुः

पुरुषःशतेंद्रियः ॥ आयुष्येवेंद्रियेप्रतितिष्ठति ॥ मारुतस्यचैकविꣳशतिकपालस्यवैश्वदेव्यैचामिक्षाया
अग्नयेस्विष्टकृतेसमवद्यति ॥ देवताभिरेवैनमुभयतःपरिगृह्णीत ॥ अपांनप्त्रेस्वाहोर्जोनप्त्रेस्वाहाग्नयेगृहप
तयेस्वाहेतितिस्रआहुतीर्जुहोति ॥ त्रयइमेलोकाः ॥ एष्वेवलोकेषुप्रतितिष्ठति ६ देवैरित्याहसत्यसंवं
करोतित्रिष्टुभमेवैतेनाभिव्याहरतिसत्यानृतेएवावरुंधेकरोतिशतेंद्रियःषट्च ॥ १० ॥ एतद्ब्राह्मणानिधात्रेर
त्निनांदेवसुवामर्थतोदेवीर्दिशःसोमस्येंद्रस्यमित्रोसिवरुणोसिदश ॥ १०॥ एतद्ब्राह्मणानिवैष्णवंत्रिकापा
लमन्नंवैपूषावाशादिशउदंङ्परेत्यब्रह्मा ३ त्वꣳराजंचतुःषष्टिः ॥ ६४ ॥ ॥ हरिःॐ ॥ ॥ वरुण
सुषुवाणस्यदशधेंद्रियंवीर्यंपरापतत् ॥ तत्सꣳसृद्भिरनुसमसर्पत् ॥ तत्सꣳसृपांꣳसꣳसृत्वं ॥ अग्निना
देवेनप्रथमेहन्ननुप्रायुंक्त ॥ सरस्वत्यावाचाद्वितीये ॥ सवित्राप्रसवेनतृतीये ॥ पूष्णापशुभिश्चतुर्थे ॥
बृहस्पतिनाब्रह्मणापंचमे ॥ इंद्रेणदेवेनषष्ठे ॥ वरुणेनस्वयादेवतयासप्तमे ॥ सोमेनराज्ञाष्टमे ॥ त्वष्ट्रा
रूपेणनवमे ॥ विष्णुनायज्ञेनाप्नोत् ॥ यत्सꣳसृपोभवंति ॥ इंद्रियमेवतद्वीर्यंयजमानआप्नोति ॥ पूर्वा
पूर्वावेदिर्भवति ॥ इंद्रियस्यवीर्यस्यावरुध्यै ॥ पुरस्तादुपसदांꣳसौम्येनप्रचरति ॥ सोमोवैरेतोधाः ॥

रेतएवतद्दधाति ॥ अंतरात्वाष्ट्रेण ॥ रेतएवहितंत्वष्टारूपाणिविकरोति ॥ उपरिष्टाद्वैष्णवेन ॥ यज्ञोवै
विष्णुः ॥ यज्ञएवांततःप्रतितिष्ठति ॥ २ ॥ सप्तमेदधातिपंचच ॥ १ ॥ जामिवाएतत्कुर्वंति ॥ य
त्सद्योदीक्षयंतिसद्यःसोमंक्रीणंति ॥ पुंडरिस्रजांप्रयच्छत्यजामित्वाय ॥ अंगिरस सुवर्गलोकंयंतः ॥ अ
प्सुदीक्षातपसीप्रावेशयत् ॥ तत्पुंडरीकमभवत् ॥ यत्पुंडरिस्रजांप्रयच्छंति ॥ साक्षादेवदीक्षातपसीअवरुं
धे ॥ दशभिर्वत्सतरैःसोमंक्रीणाति ॥ दशाक्षराविराट् ॥ १ ॥ अन्नंविराट् ॥ विराजैवान्नाद्यमवरुंधे ॥
मुष्कराभवंतिसेंद्रत्वाय ॥ दशपेयोभवति ॥ अन्नाद्यस्यावरुध्यै ॥ शतंब्राह्मणाःपिबंति ॥ शतायुःपुरु
षःशतेंद्रियः ॥ आयुष्येवेंद्रियेप्रतितिष्ठति ॥ सप्तदशꣳस्तोत्रंभवति ॥ सप्तदशःप्रजापतिः ॥ २ ॥ प्र
जापतेराप्त्यै ॥ प्राकाशावध्वर्यवेददाति ॥ प्रकाशमेवैनंगमयति ॥ स्रजमुद्गात्रे ॥ व्येवास्मैवासयति ॥
रुक्मꣳहोत्रे ॥ आदित्यमेवास्माउन्नयति ॥ अश्वंप्रस्तोतृप्रतिहर्तृभ्यां ॥ प्राजापत्योवाअश्वः ॥ प्रजापतेराप्त्यै
॥ ३ ॥ द्वादशपष्ठौहीर्ब्रह्मणे ॥ आयुरेवावरुंधे ॥ वशांमैत्रावरुणाय ॥ राष्ट्रमेववश्यंकः ॥ ऋषभंब्राह्मणाच्छ
ꣳसिने ॥ राष्ट्रमेवेंद्रियाव्यंकः ॥ वाससीनेष्टापोतृभ्यां ॥ पवित्रेएवास्यैते ॥ स्थूरियवाचितमच्छावाकाय ॥

अंततएववरुणमवंयजते ॥ ४ ॥ अनड्वाहंमग्नीधें ॥ वन्हिर्वाअंनड्वान् ॥ वह्निरग्नीत् ॥ वन्हिंनैववान्हिं
यज्ञस्यावंरुंधे ॥ इंद्रस्यसुषुवाणस्यंत्रेधेंद्रियंवीर्यंपरांपतत् ॥ भृगुस्तृतीयमभवत् ॥ श्रायंतीयंतृतीयं ॥ स
रंस्वतीतृतीयं ॥ भार्गवोहोताभवति ॥ श्रायंतीयंब्रह्मसामंभंवति ॥ वारवंतीयमग्निष्टोमसामं ॥ सार
स्वतीरपोगृह्णाति ॥ इंद्रियस्यंवीर्यस्यावंरुध्यै ॥ श्रायंतीयंब्रह्मसामंभंवति ॥ इंद्रियमेवास्मिन्वीर्यंश्श्र
यति ॥ वारवंतीयंमग्निष्टोमसामं ॥ इंद्रियमेवास्मिंन्वीर्यंवारयति ॥ ५ ॥ विराट्प्रजापतिरश्वंःप्रजाप
तेराप्त्यैयंजतेब्रह्मसामंभंवतिसप्तचं ॥ २ ॥ ईश्वरोवाएषदिशोनून्मंदितोः ॥ यंदिशोनुंव्यास्थापयंति ॥
दिशामवेष्टयोभवंति ॥ दिक्ष्वेवप्रतितिष्ठत्यनुंन्मादाय ॥ पंचंदेवतायजाति ॥ पंचदिशंः ॥ दिक्ष्वेवप्रति
तिष्ठति ॥ हविषोंहविषइष्ट्वाबार्हस्पत्यमभिघांरयाति ॥ यजमानदेवत्योवैबृहस्पतिंः ॥ यजंमानमेवतें
जंसासमंर्धयति ॥ १ ॥ आदित्यांमल्हांगर्भिणीमालंभते ॥ मारुतींपृश्निंपष्ठौहीं ॥ विशंचैवास्मैराष्ट्रं
चंसमीचींदधाति ॥ आदित्ययापूर्वयाप्रचंराति ॥ मारुत्योत्तंरया ॥ राष्ट्रएवविशमनुंबध्नाति ॥
उच्चैरांदित्यायाआश्रांवयति ॥ उपांश्शुमांरुत्यै ॥ तस्मांद्राष्ट्रंविशमतिंवदति ॥ गर्भिण्यांदित्याभंव

ति ॥ २ ॥ इंद्रियंवैगर्भः ॥ राष्ट्रमेवेंद्रियाण्यकः ॥ अगर्भामारुती ॥ विड्वैमरुतः ॥ विशमेवनिरिंद्रि
यामकः ॥ देवासुराःसंयत्ताआसन् ॥ तेदेवाअश्विनोःपूषन्वाचःसत्यꣳसंनिधाय ॥ अनृतेनासुरानभ्य
भवन् ॥ तेश्विभ्यांपूष्णेपुरोडाशंद्वादशकपालंनिरवपन् ॥ ततोवैतेवाचःसत्यमवारुंधत ॥ ३ ॥ यदश्विभ्यां
पूष्णेपुरोडाशंद्वादशकपालंनिर्वपति ॥ अनृतेनैवभ्रातृव्यानभिभूय ॥ वाचःसत्यमवरुंधे ॥ सरस्वतेसत्यवाचे
चरुं ॥ पूर्वमेवोदितं ॥ उत्तरेणाभिगृणाति ॥ सवित्रेसत्यप्रसवायपुरोडाशंद्वादशकपालंप्रसूत्यै ॥ दूता
न्प्रहिणोति ॥ आविदएताभवंति ॥ आविदमेवैनंगमयंति ॥ अथोदूतेभ्यएवनाच्छिद्यते ॥ तिसृधन्वꣳशु
ष्कदृतिर्दक्षिणासमृध्यै ॥ ४ ॥ अर्धयतिभवत्यरुंधतगमयंतिद्वेच ॥ ३ ॥ आग्नेयमष्टाकपालंनिर्वप
ति ॥ तस्माच्छिशिरेकुरुपंचालाःप्रांचोयांति ॥ सौम्यंचरुं ॥ तस्माद्वसंतंव्यवसायादयंति ॥ सावि
त्रंद्वादशकपालं ॥ तस्मात्पुरस्तात्यवानाꣳसवित्राविरुंधते ॥ बार्हस्पत्यंचरुं ॥ सवित्रैववित्रुध्य ॥ ब्रह्म
णायवानादधते ॥ त्वाष्ट्रमष्टाकपालं ॥ १ ॥ रूपाण्येवतेनकुर्वते ॥ वैश्वानरंद्वादशकपालं ॥ तस्मा
ज्जघन्येनैदाघेप्रत्यंचःकुरुपंचालायांति ॥ सारस्वतंचरुंनिर्वपति ॥ तस्मात्प्रावृषिसर्वावाचोवदंति ॥

पौष्णेनव्यवस्यंति ॥ मैत्रेणकृषंते ॥ वारुणेनविधृताआसते ॥ क्षैत्रपत्येनपाचयंते ॥ आदित्येनादधते
॥ २ मासिमास्येतानिहवींषिनिरुप्याणीत्याहुः ॥ तेनैवर्तून्प्रयुंक्तइति ॥ अथोखल्वाहुः ॥ कःसंव
त्सरंजीविष्यतीति ॥ षडेवपूर्वेद्युर्निरुप्याणि ॥ षडुत्तरेद्युः ॥ तेनैवर्तून्प्रयुंक्ते ॥ दक्षिणोरथवाहनवाहः
पूर्वेषांदक्षिणा ॥ उत्तरउत्तरेषां ॥ संवत्सरस्यैवांतौयुनक्ति ॥ सुवर्गस्यलोकस्यसमष्ट्यै ॥ ३ ॥ त्वा
ष्ट्रमष्टाकपालंदधतेयुनक्त्येकंच ॥ ४ ॥ इंद्रस्यसुषुवाणस्यदशधेंद्रियंवीर्यंपरापतत् ॥ सयत्प्रथमंनिरष्ठी
वत् ॥ तत्कुवलमभवत् ॥ यद्द्वितीयं ॥ तद्बदरं ॥ यत्तृतीयं ॥ तत्कर्कंधु ॥ यन्नस्तः ॥ ससिंहः ॥ यदक्ष्योः
॥ १ ॥ सशार्दूलः ॥ यत्कर्णयोः ॥ सवृकः ॥ यऊर्ध्वः ॥ ससोमः ॥ यावाची ॥ सासुरा ॥ त्रयाःस
क्तवोभवंति ॥ इंद्रियस्यावरुध्यै ॥ त्रयाणिलोमानि ॥ २ ॥ त्विषिमेवावरुंधे ॥ त्रयोग्रहाः ॥ वीर्यमेवावरुं
धे ॥ नाम्नांदशमी ॥ नववैपुरुषेप्राणाः ॥ नाभिर्दशमी ॥ प्राणाइंद्रियंवीर्यं ॥ प्राणानेवेंद्रियंवीर्यंय
जमानआत्मन्धत्ते ॥ सीसेनक्लीबाच्छष्पाणिक्रीणाति ॥ नवाएतदयोनहिरण्यं ॥ ३ ॥ यत्सीसं ॥ न
स्त्रीनपुमान् ॥ यत्क्लीबः ॥ नसोमोनसुरा ॥ यत्सौत्रामणीसमृध्यै ॥ स्वाद्वींत्वास्वादुनेत्याह ॥ सो

मंमेवैनांकरोति ॥ सोमोंस्यश्विभ्यांपच्यस्वसरंस्वत्यैपच्यस्वेंद्रांयसुत्राम्णेपच्यस्वेत्यांह ॥ एताभ्योह्येंषादे
वताभ्यःपच्यंते ॥ तिस्रःसꣳसृष्टावसति ॥ ४ ॥ तिस्रोहिरात्रीःक्रीतःसोमोवसंति ॥ पुनातुतेपरिस्रुत
मितियजुंषापुनातिव्यावृंत्त्यै ॥ पवित्रेंणपुनाति ॥ पवित्रेंणहिसोमंपुनंति ॥ वारेंणशश्वंतातनेत्यांह ॥
वारेंणहिसोमंपुनंति ॥ वायुःपूतःपवित्रेंणेतिनैतयांपुनीयात् ॥ व्यृंद्धाह्येषा ॥ अतिपवितःस्यैतयांपुनो
यात् ॥ कुविदंगेत्यनिंरुक्तयाप्राजापत्ययांगृह्णाति ॥ ५ ॥ अनिंरुक्तःप्रजापंतिः ॥ प्रजापतेराप्त्यै ॥
एकंयर्चागृंह्णाति ॥ एकधैवयजमानेवीर्यंदधाति ॥ आश्विनंधूम्रमालंभते ॥ अश्विनौवैदेवानांभिष
जौ ॥ ताभ्यांमेवास्मैभेषजंकरोति ॥ सारस्वतंमेषं ॥ वाग्वैसरंस्वती ॥ वाचैवैनंभिषज्यति ॥ ऐंद्र
मृंषभꣳसैंद्रत्वायं ॥ ६ ॥ अक्ष्योर्लोमांनिहिरंण्यंवसतिगृह्णातिभिषज्यत्येकंच ॥ ५ ॥ यत्त्रिषुयूपे
ष्वालभेंत ॥ बहिर्धास्मांदिंद्रियंवीर्यंदध्यात् ॥ भ्रातृंव्यमस्मैजनयेत् ॥ एकयूपआलंभते ॥ एकधैवा
स्मिंन्निंद्रियंवीर्यंदधाति ॥ नास्मैभ्रातृंव्यंजनयति ॥ नैतेषांपशूनांपुंरोडाशांभवंति ॥ ग्रहंपुरोडाशा
ह्येंते ॥ युवꣳसुराममश्विनेतिंसर्वदेवत्येंयाज्यानुवाक्येंभवतः ॥ सर्वाएवदेवताःप्रीणाति ॥ १ ॥ ब्रा

ह्मणंपरिक्रीणीयादुच्छेषणस्यपातारं ॥ ब्राह्मणोह्याहुत्याउुच्छेषणस्यपाता ॥ यदिंब्राह्मणंनविंदेत् ॥ वल्मीकवपायामवंनयेत् ॥ सैवततःप्रायंश्चित्तिः ॥ यद्वैसौत्रामण्यैव्यृद्धं ॥ तदंस्यैसमृंद्धं ॥ नानादेव त्यांःपशवंश्चपुरोडाशांश्चभवंतिसमृंध्यै ॥ ऐंद्रःपंशूनामुंत्तमोभंवति ॥ ऐंद्रःपुंरोडाशांनांप्रथमः ॥ ॥ २ ॥ इंद्रियेएवास्मैंसमीचींदधाति ॥ पुरस्तांदनूयाजानांपुरोडाशैःप्रचंरति ॥ पशवोवैपुंरोडा शांः ॥ पशूनेवावंरुंधे ॥ ऐंद्रमेकांदशकपाल्ंनिर्वंपति ॥ इंद्रियमेवावंरुंधे ॥ सावित्रंद्वादंशकपालंप्रसू त्यै ॥ वारुणंदशंकपालं ॥ अनतएववरुंणमवंयजते ॥ वडंवादक्षिंणा ॥ ३ ॥ उतवाएषाश्वंंस्सूते ॥ ऊताश्वंतरं ॥ उतसोमंउतसुरां ॥ यत्सौंत्रामणीसमृंध्यै ॥ बार्हस्पत्यंपशुंचंतुर्थमंतिपावितस्यालंभते ॥ ब्रह्मवैदेवानांबृहस्पतिंः ॥ ब्रह्मंणैवयज्ञस्यव्यृंद्धमापिंवपति ॥ पुरोडाशंवानेषपशुर्भंवति ॥ नह्येंतस्ययहं गृह्णंतिं ॥ सोमंप्रतीकाःपितरस्तृणुतेतिंशतातृष्णायांंस्समवंनयति ॥ ४ ॥ शतायुःपुरुंषःशतेंद्रियः ॥ आयुंष्येवेंद्रियेप्रतिंतिष्ठति ॥ दक्षिंणेग्नौजुंहोति ॥ पापवस्यसस्यव्यावृंत्त्यै ॥ हिरंण्यमंतराधांरयति ॥ पू तामेवैनांजुहोति ॥ शतमांनंभवति ॥ शतायुःपुरुंष शतेंद्रियः ॥ आयुंष्येवेंद्रियेप्रतिंतिष्ठति ॥ यत्रैवशं

तातूष्णींधारयंति ॥ ५ ॥ तंनिदधातिप्रतिष्ठित्यै ॥ पितॄन्वाएतस्येंद्रियंवीर्यंगच्छति ॥ यꣳसोमोतिपवं
ते ॥ पितॄणांयाज्यानुवाक्याभिरुपतिष्ठते ॥ यदेवास्यपितॄनिंद्रियंवीर्यंगच्छति ॥ तदेवावरुंधे ॥ तिसृ
भिरुपतिष्ठते ॥ तृतीयेवाइतोलोकेपितरः ॥ तानेवप्रीणाति ॥ अथोत्रीणिवैयज्ञस्येंद्रियाणि ॥ अध्वर्यु
र्होताब्रह्मा ॥ तउपतिष्ठते ॥ यान्येवयज्ञस्येंद्रियाणि ॥ तैरेवास्मैभेषजंकरोति ॥ ६ ॥ प्रीणातिप्रथमो
दक्षिणासमवनयतिधारयंतींद्रियाणिचत्वारिच ॥ ६ ॥ अग्निष्टोममग्रआहरति ॥ यज्ञमुखंवाअग्निष्टो
मः ॥ यज्ञमुखमेवारभ्यसवमाक्रमते ॥ अथैषोभिषेचनीयश्चतुस्त्रिꣳशपवमानोभवति ॥ त्रयस्त्रिꣳश
द्वैदेवताः ॥ ताएवाप्नोति ॥ प्रजापतिश्चतुस्त्रिꣳशः ॥ तमेवाप्नोति ॥ सꣳशरएषस्तोमानामयथापू
र्वं ॥ यद्विषमास्तोमाः ॥ १ ॥ एतावान्वैयज्ञः ॥ यावान्पवमानाः ॥ अंतःश्लेषणंत्वाअन्यत् ॥ यत्स
माःपवमानाः ॥ तेनासꣳशरः ॥ तेनयथापूर्वं ॥ आत्मनैवाग्निष्टोमेनर्ध्नोति ॥ आत्मनापुण्योभव
ति ॥ प्रजावाउक्थानि ॥ पशवउक्थानि ॥ यदुक्थ्योभवत्यनुसंतत्यै ॥ २ ॥ स्तोमाःपशवउक्था
न्येकंच ॥ ७ ॥ उपत्वाजामयोगिरइतिप्रतिपद्भवति ॥ वाग्वैवायुः ॥ वाचएवैषोभिषेकः ॥

कृ०य०

॥५१॥

सर्वांसामेवप्रजानां॒स्सूयते ॥ सर्वांएनंप्रजाराजेतिवदंति ॥ एतमुत्यंदशक्षिपइत्याह ॥ आदि
त्यावैप्रजाः ॥ प्रजानांमेवैतेनंसूयते ॥ यंतिवाएतेयंज्ञमुखात् ॥ येसंभार्यांअक्रंन् ॥ १ ॥ यदाह
पवंस्ववाचोअंग्रियइति ॥ तेनैवयंज्ञमुखान्नयंति ॥ अनुष्टुक्प्रंथमाभंवति ॥ अनुष्टुगुंत्तमा ॥ वाग्वाअं
नुष्टुक् ॥ वाचैवप्रयंति ॥ वाचोयंति ॥ उद्वंतीर्भवंति ॥ उद्वद्वाअंनुष्टुभोंरूपं ॥ आनुंष्टुभोराजन्यः
॥ २ ॥ तस्मादुद्वंतोर्भवंति ॥ सौर्यंनुष्टुगुंत्तमाभंवति ॥ सुवर्गस्यंलोकस्यसंतंत्यै ॥ योवैसवादेति ॥ नै
नं॒सवउपंनमति॥ यःसामंभ्यएति ॥ पापींयान्त्सुषुवाणोभंवति ॥ एतानिखलुवैसामांनि ॥ यत्पृष्ठानि॥
यत्पृष्ठानिभवंति ॥ ३ ॥ तैरेवसवान्नैति ॥ यानिंदेवराजाना॒सामांनि ॥ तैरमुष्मिंन्लोकऋंध्नोति ॥
यानिमंनुष्यराजाना॒सामांनि ॥ तैरस्मिन्लोकऋंध्नोति॥ उभयोरेवलोकयोंर्ऋध्नोति ॥ देवलोकेचंमनुष्य
लोकेचं ॥ एकवि॒शोंभिषेचनोयंस्योत्तमोभंवति ॥ एकवि॒शःकेंशवपनीयंस्यप्रथमः ॥ सप्तदशोदंश
पेयः ॥ ४ ॥ विड्वाएंकवि॒शः ॥ राष्ट्र॒संप्तदशः ॥ विशंएवैतन्मंध्यतोंभिषिंच्यते ॥ तस्माद्वाएषवि
शांप्रियः ॥ विशोहिमंध्यतोंभिषिच्यते ॥ यद्वाएंनमदोदिशानुंव्यास्थापयंति ॥ तत्सुंवर्गलोकमभ्यारो

तै०ब्रा०

॥५१॥

हति ॥ यदिमंलोकंनप्रत्यवरोहेत् ॥ अतिजनंवेयात् ॥ उद्वामाद्येत् ॥ यदेषप्रतीचीनःस्तोमोभवति ॥
इममेवतेनलोकंप्रत्यवरोहति ॥ अथोअस्मिन्नेवलोकेप्रतितिष्ठत्यनुन्मादाय ॥ ५ ॥ अक्रन्राजन्योभ
वतिदशपेयोमाद्येत्रीणिच ॥ ८ ॥ इयंवैरजता ॥ असौहरिणी ॥ यद्रुक्मौभवतः ॥ आभ्यामेवैनं
मुभयतःपरिगृह्णाति ॥ वरुणस्यवाअभिषिच्यमानस्यापः ॥ इंद्रियंवीर्यंनिरघ्नन् ॥ तत्सुवर्णंहिरं
ण्यमभवत् ॥ यद्रुक्ममंतर्दधाति ॥ इंद्रियस्यवीर्यस्यानिर्घाताय ॥ शतमानोभवतिशतक्षरः ॥ १ ॥
शतायुःपुरुषःशतेंद्रियः ॥ आयुष्येवेंद्रियेप्रतितिष्ठति ॥ आयुर्वैहिरण्यं ॥ आयुष्याएवैनमभ्यतिक्षरंति ॥
तेजोवैहिरण्यं ॥ तेजस्याएवैनमभ्यातिक्षरंति ॥ वर्चोवैहिरण्यं ॥ वर्चस्याएवैनमभ्यातिक्षरंति ॥ २ ॥
शतक्षरोष्टौच ॥ ३ ॥ अप्रतिष्ठितोवाएषइत्याहुः ॥ योराजसूयेनयजतइति ॥ यदावाएषए
तेनद्विरात्रेणयजते ॥ अथप्रतिष्ठा ॥ अथसंवत्सरमाप्नोति ॥ यावंतोसंवत्सरस्याहोरात्राणि ॥
तावंतीरेतस्यस्तोत्रीयाः ॥ अहोरात्रेष्वेवप्रतितिष्ठति ॥ अग्निष्टोमःपूर्वमहर्भवति ॥ अति
रात्रउत्तरं ॥ १ ॥ नानैवाहोरात्रयोःप्रतितिष्ठति ॥ पौर्णमास्यांपूर्वमहर्भवति ॥ व्यष्टकायामुत्तरं ॥

नानैवार्धमासयोःप्रतितिष्ठति ॥ अमावास्यायांपूर्वमहर्भवति ॥ उद्दृष्टउत्तरं ॥ नानैवमासयोःप्रतितिष्ठ
ति ॥ अथोखलु ॥ येएवसमानपक्षेपुण्याहेस्यातां ॥ तयोःकार्यंप्रतिष्ठित्यै ॥ २ ॥ अपशव्योद्विरा
त्रइत्याहुः ॥ द्वेह्येतेच्छंदसी ॥ गायत्रंचत्रैष्टुभंच ॥ जगतीमंतर्यंति ॥ नतेनजगतीकृतेत्याहुः ॥ यदे
नांतृतीयसवनेकुर्वंतीति ॥ यदावाएषाहीनःस्याद्भजंते ॥ माह्वस्यंवासवनं ॥ अथैवजगतीकृता ॥
अथपशव्यः ॥ व्युष्टिर्वाएषद्विरात्रः ॥ यएवंविद्वान्द्विरात्रेणयजंते ॥ व्येवास्माउच्छति ॥ अथोतम
एवापहते ॥ अग्निष्टोममंततआहरति ॥ अग्निःसर्वादेवताः ॥ देवतास्वेवप्रतितिष्ठति ॥ ३ ॥ उत्त
रंप्रतिष्ठित्यैपशव्यं समृद्धं ॥ १० ॥ वरुणस्यजामीश्वरआग्नेयभिंद्रस्ययत्रिर्ध्वंग्निष्टोममुपस्वेयंवैरंजताप्रतिष्ठि
तोदश ॥ १० ॥ वरुणस्ययदाश्विभ्यांयत्रिषुतस्मादुद्वंतोःसप्तत्रिंशशश ॥ ३७ ॥ ॥ हरिःॐ ॥ ॥

श्रीगणेशायनमः ॥ ॥ हरिःॐम् ॥ अंगिरसोवैसत्रमासत ॥ तेषांपृश्निर्घर्मधुगासीत् ॥ सर्जीषेणा
जीवत् ॥ तेब्रुवन् ॥ कस्मैनुसत्रमास्महे ॥ येस्याओषधीर्नजनयामइति ॥ तेदिवोवृष्टिमसृजंत ॥ या
वंतस्तोकाअवापद्यंत ॥ तावंतीरोषधयोजायंत ॥ ताजाताःपितरोविषेणालिंपन् ॥ १ ॥ तासांजग्ध्वा
रुप्यंत्यैत् ॥ तेब्रुवन् ॥ कइदमित्थमकरिति ॥ वयंभागधेयमिच्छमानाइतिपितरोब्रुवन् ॥ किंवोभाग
धेयमिति ॥ अग्निहोत्रएवनोप्यस्त्वित्यब्रुवन् ॥ तेभ्यएतद्भागधेयंप्रायच्छन् ॥ यद्धुत्वानिमार्ष्टि ॥ ततोवै
तओषधीरस्वदयन् ॥ यएवंवेद ॥ २ ॥ स्वदंतेस्माओषधयः ॥ तेवत्समुपावासृजन् ॥ इदंनोहव्यंप्रदा
पयेति ॥ सोब्रवीद्वरंवृणै ॥ दशमारात्रीर्जातंनदोहन् ॥ आसंगवंमात्रासहचराणीति ॥ तस्माद्वत्संजातं
दशरात्रीर्नदुहंति ॥ आसंगवंमात्रासहचरति ॥ वारेवृतꣳह्यस्य ॥ तस्माद्वत्सꣳसꣳसृष्टधयꣳरुद्रोघातु
कः ॥ अतिहिसंधांधयंति ॥ ३ ॥ अलिंपन्वेदघातुकएकंच ॥ १ ॥ प्रजापतिरग्निमसृजत ॥ तंप्र
जाअन्वसृज्यंत ॥ तमभागउपास्त ॥ सोस्यप्रजाभिरपाक्रामत् ॥ तमवरुरुत्समानोन्वैत् ॥ तमवरुधं
नाशक्नोत् ॥ सतपोतप्यत ॥ सोग्निरुपारमताताविवैस्यप्रजापतिरिति ॥ सरराटादुदमृष्ट ॥ १ ॥ तद्घृतम
भवत् ॥ तस्माद्यस्यदक्षिणतःकेशाउन्मृष्टाः ॥ तांज्येष्ठलक्ष्मीप्राजापत्येत्याहुः ॥ यद्रराटादुदमृष्ट ॥
तस्माद्रराटेकेशानसंति ॥ तदग्नौप्रागृह्णात् ॥ तद्व्यचिकित्सत् ॥ जुहवानी ३ माहौषा ३ मिति ॥ त

द्विचिकित्सायैजन्म ॥ यएवंविद्वान्विचिकित्संति ॥ २ ॥ वसीयएवचेतयत ॥ तंवागभ्यंवद
ज्जुहुधीतिं ॥ सोंब्रवीत् ॥ कस्त्वमसोतिं ॥ स्वैवतेवागित्यंब्रवीत् ॥ सोंजुहोत्स्वाहेतिं ॥ तत्स्वांहा
कारस्यजन्मं ॥ यएवꣳस्वांहाकारस्यजन्मवेद ॥ करोतिंस्वाहाकारेणंवीर्यं॥ यस्यैवंविदुषःस्वाहाकारेण
जुह्वंति ॥ ३ ॥ भोगांयैवास्यंहुतंभंवति ॥ तस्याआहुंत्यैपुरुंषमसृजत ॥ द्वितीयंमजुहोत् ॥ सोश्वंम
सृजत ॥ तृतीयंमजुहोत् ॥ सगामंसृजत॥ चतुर्थमंजुहोत् ॥ सोविंमसृजत ॥ पंचममंजुहोत्॥ सोंजामं
सृजत ॥ ४ ॥ सोंग्निरंविभेत् ॥ आहुंतीभिर्वैमांप्नोतीतिं ॥ सप्रजापंतिंपुनःप्राविंशत् ॥ तंप्राजापंतिरब्र
वीत् ॥ जायस्वेतिं ॥ सोंब्रवीत् ॥ किंभांगधेयंमभिजंनिष्यइतिं ॥ तुभ्यंमेवेदꣳहूंयाताइत्यंब्रवीत् ॥
सएतद्भागधेयंमभ्यंजायत ॥ यदंग्निहोत्रं ॥ ५ ॥ तस्मांदग्निहोत्रमुच्यते ॥ तद्धूयमांनमादित्योंब्रवीत् ॥
माहौंषीः ॥ उभयोर्वैनांवेतादेतिं ॥ सोंग्निरंब्रवीत् ॥ कथंनौहोष्यंतोतिं ॥ सायमेवतुभ्यंजुहवंन् ॥
प्रातर्मह्यमित्यंब्रवीत् ॥ तस्मांदग्नयेसायꣳहूंयते ॥ सूर्यायप्रातः ॥ ६ ॥ आग्नेयीवैरात्रिः ॥ ऐंद्रमहः ॥
यदनुंदितेसूर्यैप्रातर्जुहुयात् ॥ उभयंमेवाग्नेयꣳस्यात् ॥ उदितेसूर्यैप्रातर्जुहोति ॥ तथाग्नयेसायꣳहूंयते ॥
सूर्यायप्रातः ॥ रात्रिंवाअनुंप्रजाःप्रजायंते ॥ अह्नाप्रतितिष्ठंति ॥ यत्सायंजुहोतिं ॥ ७ ॥ प्रैवतेनंजा

कृ॰य॰

॥ २ ॥

यते ॥ उदितेसूर्येप्रातर्जुहोति ॥ प्रत्येवतेनतिष्ठति ॥ प्रजापतिरकामयतप्रजायेयेति ॥ सएतदग्निहोत्रं मिथुनमपश्यत् ॥ तदुदितेसूर्येजुहोत् ॥ यजुषान्यत् ॥ तूष्णीमन्यत् ॥ ततोवैसप्राजायत ॥ यस्यैवं विदुषउदितेसूर्येग्निहोत्रंजुह्वति ॥ ८ ॥ प्रैवजायते ॥ अथोयथादिवाप्रजानन्नेति ॥ तादृगेवतत् ॥ अथोखल्वाहुः ॥ यस्यवैद्वौपुण्यौगृहेवसतः ॥ यस्तयोरन्यꣳराधयत्यन्यंन ॥ उभौवावसतावृच्छतो ति ॥ अग्निंवावादित्यःसायंप्रविशति ॥ तस्मादग्निर्दूरान्नक्तंददृशे ॥ उभेहितेजसीसंपद्येते ॥ ९ ॥ उद्यंतंवावादित्यमग्निरनुसमारोहति ॥ तस्माद्धूमएवाग्नेर्दिवाददृशे ॥ यदग्नयेसायंजुहुयात् ॥ आसूर्या यवृश्च्येत ॥ यत्सूर्यायप्रातर्जुहुयात् ॥ आग्नयेवृश्च्येत ॥ देवताभ्यःसमदंदध्यात् ॥ अग्निर्ज्योतिर्ज्योतिः सूर्यःस्वाहेत्येवसायꣳहोतव्यं ॥ सूर्योज्योतिर्ज्योतिरग्निःस्वाहेतिप्रातः ॥ तथोभाभ्याꣳसायꣳहूयते ॥ १० ॥ उभाभ्यांप्रातः ॥ नदेवताभ्यःसमदंदधाति ॥ अग्निर्ज्योतिरित्याह ॥ अग्निर्वैरेतोधाः ॥ प्रजाज्योतिरित्या ह ॥ प्रजाएवास्मैप्रजनयति ॥ सूर्योज्योतिरित्याह ॥ प्रजास्वेवप्रजातासुरेतोदधाति ॥ ज्योतिरग्निः स्वाहेत्याह ॥ प्रजाएवप्रजाताअस्यांप्रतिष्ठापयति ॥ ११ ॥ तूष्णीमुत्तरामाहुतिंजुहोति ॥ मिथुनत्वायप्र जात्यै ॥ यदुदितेसूर्येप्रातर्जुहुयात् ॥ यथातिथयेप्रद्रुतायशून्यायांवसथायांहार्यꣳहरंति ॥ तादृगेवत

तै॰ब्रा॰

॥ २ ॥

त् ॥ क्वाहततस्तद्भवतीत्याहुः ॥ यत्सनवेद ॥ यस्मैतद्धरंतीति ॥ तस्माद्यदौषसंजुहोति ॥ तदेवसं
प्रति ॥ अथोयथाप्रार्थमौषसंपरिवेवेष्टि ॥ तादृगेवतत् ॥ १२ ॥ अमृष्टविचिकित्संतिजुह्वत्यजामंसृज
ताग्निहोत्रꣳसूर्यंयप्रातर्जुहोतिजुह्वतिसंपद्येतेहूयतेस्थापयतिसंप्रतिद्वेचं ॥ २ ॥ रुद्रोवाएषः ॥ यदग्निः ॥
पत्नीस्थाली ॥ यन्मध्येग्नेरधिश्रयेत् ॥ रुद्रायपत्नीमपिदध्यात् ॥ प्रमायुकास्यात् ॥ उदीचींगारांनिरू
ह्याधिश्रयति ॥ पत्नियैगोपीथाय॥व्यंतान्करोति ॥ तथापत्न्यप्रमायुकाभवति॥ १ ॥घर्मोवाएषोशांतः ॥
अहरहःप्रवृज्यते ॥ यदग्निहोत्रं ॥ प्रतिषिंचेत्पशुकामस्य ॥ शांतमिवहिपशव्यं ॥ नप्रतिषिचेद्ब्रह्मवर्च
सकामस्य ॥ समिद्धमिवहिब्रह्मवर्चसं ॥ अथोखलु ॥ प्रतिषिच्यमेव ॥ यत्प्रतिषिंचति ॥ २ ॥ त
त्पशव्यं ॥ यज्जुहोति ॥ तद्ब्रह्मवर्चसि ॥ उभयमेवाकः ॥ प्रच्युतंवाएतदस्माल्लोकात् ॥ अ
गतंदेवलोकं ॥ यच्छ्रृतꣳहविरनभिघारितं ॥ अभिद्योतयति ॥ अभ्येवैनद्धारयति ॥ अथोदेवत्रैवैनद्ग
मयति ॥ ३ ॥ पर्यग्निकरोति ॥ रक्षसामपहत्यै ॥ त्रिःपर्यग्निकरोति ॥ त्र्यावृद्धियज्ञः ॥ अथोमेध्य
त्वाय ॥ यत्प्राचीनमुद्वासयेत् ॥ यजमानꣳशुचार्पयेत् ॥ यद्दक्षिणा ॥ पितृदेवत्यꣳस्यात् ॥ यत्प्रत्यक्
॥४॥ पत्नीꣳशुचार्पयेत् ॥ उदीचीनमुद्वासयति ॥ एषावैदेवमनुष्याणाꣳशांतादिक् ॥ तामेवैनदनूद्वास

यतिशांत्यै ॥ वर्त्मंकरोति ॥ यज्ञस्यसंतंत्यै ॥ निष्टंपति ॥ उपैवतत्स्तृंणाति ॥ चतुरुन्नंयति ॥ चतुंष्पादःपश
वंः ॥ ५ ॥ पशूनवावंरुंधे ॥ सर्वांन्पूर्णानुन्नंयति ॥ सर्वेंहिपुण्यांराद्धाः ॥ अनूचउन्नंयति ॥ प्रजायां
अनूचीनत्वायं ॥ अनूच्येवास्यंप्रजाधुंकाभवति ॥ संमृंशतिव्यावृंत्यै ॥ नाहोंष्यन्नुपंसादयेत् ॥ यदहों
ष्यन्नुपसादयेंत् ॥ यथान्यस्मांउपनिधायं ॥ ६ ॥ अन्यस्मैंप्रयच्छंति ॥ तादृगेवतत् ॥ आस्मैंवृश्च्येत ॥
यदेवगार्हंपत्येधिश्रयंति ॥ तेनगार्हंपत्यंप्रीणाति ॥ अग्निरंबिभेत् ॥ आहुंतयोमात्येष्यंतीतिं ॥ सएताꣳ
समिधंमपश्यत् ॥ तामाधंत्त ॥ ततोवाअग्नावाहुंतयोध्रियंत ॥ ७ ॥ यदेनꣳसमयच्छत् ॥ तत्समिधः
समित्वं ॥ समिधमादंधाति ॥ समेवैनंयच्छति ॥ आहुंतीनांधृत्यैं ॥ अथोअग्निहोत्रमेवेध्मवंत्करोति ॥ आ
हुंतीनांप्रतिंष्ठित्यै ॥ ब्रह्मवादिनोंवदंति ॥ यदेकांꣳसमिधंमाधायद्वेआहुंतीजुहोतिं ॥ अथकस्यांꣳसमि
धिंद्वितीयामाहुंतिंजुहोतीतिं ॥ ८ ॥ यद्वेसमिधांवादध्यात् ॥ भ्रातृंव्यमस्मैजनयेत् ॥ एकांꣳसमिधंमा
धायं ॥ यजुंषान्यामाहुंतिंजुहोति ॥ उभेएवसमिद्धंतीआहुंतीजुहोति ॥ नास्मैभ्रातृंव्यंजनयति ॥ आ
दींप्तायांजुहोति ॥ समिंद्धमिवहिब्रंह्मवर्चसं ॥ अथोयथातिंथिंज्योतिंष्कृत्वापंरिवेवेंष्टि ॥ तादृगेवतत् ॥
चतुरुन्नयति ॥ द्विर्जुंहोति ॥ तस्मांद्विपाच्चतुंष्पादमत्ति ॥ अथोंद्विपद्येवचतुंष्पदःप्रतिंष्ठापयति ॥ ९ ॥
भवतिप्रतिषिंचतिंगमयतिप्रत्यक्पशवंउपनिधायांध्रियंतेतितच्चत्वारिंच ॥ ३ ॥ ॥ उत्तरावंतींवैदेवा

आहुतिमजुहवुः ॥ अवाचीमसुराः ॥ ततोदेवाअभवन् ॥ परासुराः॥ यंकामयेतवसीयान्त्स्यादिति॥
कनीयस्तस्यपूर्वꣳहुत्वा ॥ उत्तरंभूयोजुहुयात् ॥ एषावाउत्तरावत्याहुतिः॥ तांदेवाअजुहवुः ॥ ततस्तेभ
वन् ॥ १ यस्यैवंजुह्वति ॥ भवत्येव ॥ यंकामयेतपापीयान्त्स्यादिति ॥ भूयस्तस्यपूर्वꣳहुत्वा ॥ उत्तरं
कनीयोजुहुयात् ॥ एषावाअवाच्याहुतिः ॥ तामसुराअजुहवुः ॥ ततस्तेपराभवन् ॥ यस्यैवंजुह्वति ॥
परैवभवति ॥२॥ हुत्वोपसादयत्यजामित्वाय ॥ अथोव्यावृत्यै ॥ गार्हपत्यंप्रतीक्षते ॥ अननुध्यायिनमे
वैनंकरोति ॥ अग्निहोत्रस्यवैस्थाणुरस्ति ॥ तंयऋच्छेत् ॥ यज्ञस्थाणुमृच्छेत् ॥ एषवाअग्निहोत्रस्यस्था
णुः ॥ यत्पूर्वाहुतिः ॥ तांयदुत्तरयाभिजुहुयात् ॥ ३ ॥ यज्ञस्थाणुमृच्छेत् ॥ अतिहायपूर्वामाहुतिंजु
होति ॥ यज्ञस्थाणुमेवपरिवृणक्ति ॥ अथोभ्रातृव्यमेवाप्स्वातिक्रामति ॥ अवाचीनꣳसायमुपमार्ष्टि ॥
रेतएवतद्दधाति ॥ ऊर्ध्वंप्रातः ॥ प्रजनयत्येवतत् ॥ ब्रह्मवादिनोवदंति ॥ चतुरुन्नयति ॥ ४ ॥ द्विर्जु
होति ॥ अथक्वद्वेआहुतीभवतइति ॥ अग्नौवैश्वानरइतिब्रूयात् ॥ एषवाअग्निर्वैश्वानरः ॥ यद्ब्राह्मणः
॥ हुत्वाद्विःप्राश्नाति ॥ अग्नावेववैश्वानरेद्वेआहुतीजुहोति ॥ द्विर्जुहोति ॥ द्विर्निमार्ष्टि ॥ द्विःप्राश्ना
ति ॥ ५ ॥ षड्संपद्यंते ॥ षड्वाऋतवः ॥ ऋतूनेवप्रीणाति ॥ ब्रह्मवादिनोवदंति ॥ किंदेवत्यमग्निहो

त्रमितिं ॥ वैश्वदेवमितिंब्रूयात् ॥ यद्यजुंषाजुहोतिं ॥ तदैंद्राग्नं ॥ यत्तूष्णीं ॥ तत्प्राजापत्यं ॥ ६ ॥
यदग्निमार्ष्टि ॥ तदोषधीनां ॥ यद्द्वितीयं ॥ तत्पितॄणां ॥ यत्प्राश्नांति ॥ तद्गर्भाणां ॥ तस्माद्गर्भाअनंश्नं
तोवर्धंते ॥ यदाचामंति ॥ तन्मंनुष्याणां ॥ उदंङ्पर्यावृत्याचांमति ॥ ७ ॥ आत्मनोंगोपीथायं ॥
निर्णेनेक्तिशुध्यै ॥ निष्टपतिस्वगाकृत्यै ॥ उद्दिशति ॥ सप्तर्षीनेवप्रीणाति ॥ दक्षिणापर्यावर्त्तते ॥ स्व
मेववीर्यमनुपर्यावर्त्तते ॥ तस्माद्दक्षिणोर्धआत्मनोंवीर्यांवत्तरः ॥ अथोंआदित्यस्यैवावृतमनुपर्यावर्त्तते ॥
हुत्वोपसमिंधे ॥ ८ ॥ ब्रह्मवर्चसस्यसमिंध्यै ॥ नबर्हिरनुप्रहरेत् ॥ असंꣳस्थितोवाएषयज्ञः ॥ यदं
ग्निहोत्रं ॥ यदनुप्रहरेत् ॥ यज्ञंविच्छिंद्यात् ॥ तस्मान्नानुप्रहृत्यं ॥ यज्ञस्यसंतत्यै ॥ अपोनिनंयति ॥
अवभृथस्यैवरूपमकः ॥ ९ ॥ अभवन्भवतिजुहुयान्नंयातमार्ष्टिद्विःप्राश्नांतिप्राजापत्यमाचांमतींधेकः ॥
॥ ४ ॥ ॥ ब्रह्मवादिनोंवदंति ॥ अग्निहोत्रप्रांयणायज्ञाः ॥ किंप्रांयणमग्निहोत्रमितिं ॥ वत्सोवाअंग्नि
होत्रस्यप्रायणं ॥ अग्निहोत्रंयज्ञानां ॥ तस्यंपृथिवीसदंः ॥ अंतरिक्षमाग्नीध्रं ॥ द्यौर्हविर्द्धानं ॥ दिव्या
आपःप्रोक्षंणयः ॥ ओषंधयोबर्हिः ॥ १ ॥ वनस्पतंयइध्मः ॥ दिशंःपरिधयंः ॥ आदित्योयूपः ॥ य
जमानपशुः ॥ समुद्रोंवभृथः ॥ संवत्सरःस्वंगाकारः ॥ तस्मादाहिंताग्नेःसर्वमेवबर्हिष्यंदत्तंभंवति ॥

यत्सायंजुहोति ।। रात्रिमेवतेनदक्षिण्यंकुरुते ॥ यत्प्रातः ॥ २ ॥ अहरेवतेनदक्षिण्यंकुरुते ॥ यत्ततोददा
ति ॥ सादक्षिणा ।। यावंतोवैदेवाअहुतमादन् ॥ तेपराभवन् ॥ तएतदग्निहोत्रꣳसर्वस्यैवसमवदायाजुहवुः
॥ तस्मादाहुः ।। अग्निहोत्रंवैदेवागृहाणांनिष्कृतिमपश्यन्निति ॥ यत्सायंजुहोति ॥ रात्रियाएवतद्धुतायाय
॥ ३ ॥ यजमानस्यापराभावाय ॥ यत्प्रातः ।। अह्नएवतद्धुतायाय ॥ यजमानस्यापराभावाय ॥ यत्ततो
श्नाति ॥ हुतमेवतत् ॥ द्वयोः पयसाजुहुयात्पशुकामस्य ॥ एतद्वाअग्निहोत्रंमिथुनं ॥ यएवंवेद ॥
प्रप्रजयापशुभिर्मिथुनैर्जायते ॥ ४ ॥ इमामेवपूर्वयादुहे ॥ अमूमुत्तरया ॥ अधिश्रित्योत्तरमानयति
॥ योनावेवतद्रेतःसिंचतिप्रजनने ॥ आज्येनजुहुयात्तेजस्कामस्य ॥ तेजोवाआज्यं ॥ तेजस्व्येव
भवति ॥ पयसापशुकामस्य ॥ एतद्वैपशूनाꣳरूपं ॥ रूपेणैवास्मैपशूनवरुंधे ॥ ५ ॥ पशुमानेवभ
वति ॥ दध्नेंद्रियकामस्य ।। इंद्रियैवदधि ॥ इंद्रियाव्येवभवति ॥ यवाग्वाग्रामकामस्यौषधावैमनुष्याः ॥
भागधेयेनैवास्मैसजातानवरुंधे ॥ ग्राम्येवभवति ॥ अयज्ञोवाएषः ॥ योसामा ॥ ६ ॥ चतुरुन्नय
ति ॥ चतुरक्षरꣳरथंतरं ॥ रथंतरस्यैषवर्णः ।। उपरीवहरति ॥ अंतरिक्षंवामदेव्यं ॥ वामदेवास्यैषव
र्णः ॥ द्विर्जुहोति ॥ द्व्यक्षरंबृहत् ॥ बृहतएषवर्णः ॥ अग्निहोत्रमेवतत्सामन्वत्करोति ॥ ७ ॥ योवा

 



अग्निहोत्रस्योपसदोवेद ॥ उपैनमुपसदोनमंति ॥ विंदतउपसत्तारं ॥ उन्नीयोपसादयति ॥ पृथिवी
मेवप्रीणाति ॥ होष्यन्नुपसादयति ॥ अंतरिक्षमेवप्रीणाति ॥ हुत्वोपसादयति ॥ दिवमेवप्रीणाति ॥
एतावाअग्निहोत्रस्योपसदः ॥ ८ ॥ यएवंवेद ॥ उपैनमुपसदोनमंति ॥ विंदतउपसत्तारं ॥ योवा
अग्निहोत्रस्याश्रावितंप्रत्याश्रावितꣳहोतारंब्रह्माणंवषट्कारंवेद ॥ तस्यत्वेवहुतं ॥ प्राणोवाअग्निहोत्र
स्याश्रावितं ॥ अपानःप्रत्याश्रावितं ॥ मनोहोता ॥ चक्षुर्ब्रह्मा ॥ निमेषोवषट्कारः ॥ ९ ॥ यएवंवे
द ॥ तस्यत्वेवहुत ॥ सायंयावानश्चवैदेवाःप्रातर्यावाणश्चाग्निहोत्रिणोगृहमागच्छंति ॥ तान्यन्नतर्पयेत्
॥ प्रजयास्यपशुभिर्वितिष्ठेरन् ॥ यत्तर्पयेत् ॥ तृप्ताएनंप्रजयापशुभिस्तर्पयेयुः ॥ सजूर्देवैःसायंयाव
भिरितिसायꣳसंमृशति ॥ सजूर्देवैःप्रातर्यावभिरितिप्रातः ॥ येचैवदेवाःसायंयावानोयेचप्रातर्यावाणः
॥ १० ॥ तानेवोभयाꣳस्तर्पयति ॥ तएनंतृप्ताःप्रजयापशुभिस्तर्पयंति ॥ अरुणोहस्माहौपवेशिः ॥
अग्निहोत्रएवाहꣳसायंप्रातर्वज्रंभ्रातृव्येभ्यःप्रहरामि ॥ तस्मान्मत्पापीयाꣳसोभ्रातृव्याइति ॥ चतुरुन्नय
ति ॥ द्विर्जुहोति ॥ समित्सप्तमी ॥ सप्तपदाशक्वरी ॥ शाक्वरोवज्रः ॥ अग्निहोत्रएवतत्सायंप्रातर्वज्रं
यजमानोभ्रातृव्यायप्रहरति ॥ भवत्यात्मना ॥ परास्यभ्रातृव्योभवति ॥ ११ ॥ बर्हिःप्रातर्हुतायांयजा

यतेरुंधेसामाकरोत्येतावाअग्निहोत्रस्योपसदोवषट्कारश्चप्रातर्यावाणोवज्रस्त्रोणिच ॥ ५ ॥ ॥ प्रजाप
तिरकामयतात्मन्वन्मेजायेतेति ॥ सोजुहोत् ॥ तस्यात्मन्वदजायत ॥ अग्निर्वायुरादित्यः ॥ तेब्रुवन् ॥
प्रजापतिरहौषीदात्मन्वन्मेजायेतेति ॥ तस्यवयमजनिष्महि ॥ जायतांनआत्मन्वदितितेजुहवुः ॥ प्रा
णानांमग्निः ॥ तनुवैवायुः ॥ १ ॥ चक्षुषआदित्यः ॥ तेषांहुतादजायतगौरेव ॥ तस्यैपयसि
व्यायच्छंत ॥ ममहुतादजनिममेति ॥ तेप्रजापतिंप्रश्नमायन् ॥ सआदित्योग्निमब्रवीत् ॥ यतरोनौ
जयात् ॥ तन्नौसहासदिति ॥ कस्यैकोहौषीदितिप्रजापतिरब्रवीत्कस्यैकइति ॥ प्राणानामहमित्यग्निः
॥ २ ॥ तनुवाअहमितिवायुः ॥ चक्षुषोहमित्यादित्यः ॥ यएवप्राणानामहौषीत् ॥ तस्यहुतादज
नीति ॥ अग्नेर्हुतादजनीति ॥ तदग्निहोत्रस्याग्निहोत्रत्वं ॥ गौर्वाअग्निहोत्रं ॥ यएवंवेदगौरग्निहोत्र
मिति ॥ प्राणापानाभ्यामेवाग्निंसमर्द्धयति ॥ अव्यर्द्धुकःप्राणापानाभ्यांभवति ॥ ३ ॥ यएवं
वेद ॥ तौवायुरब्रवीत् ॥ अनुमाभजतमिति ॥ यदेवगार्हपत्येधिश्रित्याहवनीयमभ्युद्रवान् ॥ ते
नत्वाप्रीणानित्यब्रूतां ॥ तस्माद्यद्गार्हपत्येधिश्रित्याहवनीयमभ्युद्रवंति ॥ वायुमेवतेनप्रीणाति ॥ प्रजा
पतिर्देवताःसृजमानः ॥ अग्निमेवदेवतानांप्रथमममसृजत ॥ सोन्यदालंभ्यमवित्त्वा ॥ ४ ॥ प्रजापति

मभिपर्यावर्त्तत ॥ समृत्योरबिभेत् ॥ सोमुमादित्यमात्मनोनिरमिमीत ॥ तꣳहुत्वापराङ्पर्यावर्त्तत ॥ ततोवैसमृत्युमपाजयत् ॥ अपमृत्युंजयति ॥ यएवंवेद ॥ तस्माद्यस्यैवंविदुषः ॥ उतैकाहमुतद्व्यहंन जुह्वति ॥ हुतमेवास्यंभवति ॥असौह्यादित्योग्निहोत्रं ॥५॥ तनुवैवायुरग्निर्भवत्यविंत्वाभवत्येकंच॥६॥ रौद्रंगवि ॥ वायव्यमुपसृष्टं ॥ आश्विनंदुह्यमानं ॥ सौम्यंदुग्धं ॥ वारुणमधिश्रितं ॥ वैश्वदेवाबिंदवः ॥ पौष्णमुदंतं ॥ सारस्वतंविष्यंदमानं ॥ मैत्रꣳशरः ॥ धातुरुद्वासितं ॥ बृहस्पतेरुन्नीतं ॥ सवितुःप्रक्रांतं ॥ द्यावापृथिव्यꣳह्रियमाणं ॥ ऐंद्राग्नमुपसन्नं ॥ अग्नेःपूर्वाहुतिः ॥ प्रजापतेरुत्तरा ॥ ऐंद्रꣳहुतं ॥ १ ॥ ॥ उद्वासितꣳसप्तच ॥ ७ ॥ ॥ दक्षिणतउपसृजाति ॥ पितृलोकमेवतेनंजयति ॥ प्राचीमावर्त्तयति ॥ देवलोकमेवतेनंजयति ॥ उदीचीमावृत्यंदोग्धि ॥ मनुष्यलोकमेवतेनंजयति ॥ पूर्वौदुह्याज्ज्येष्ठस्यज्यैष्ठिनेयस्य ॥ योवागतश्रीःस्यात् ॥ अपरौदुह्यात्कनिष्ठस्यकानिष्ठिनेयस्य ॥ योवाबुभूषेत् ॥ १ ॥ नसंमृशति ॥ पापवस्यसस्यव्यावृत्त्यै ॥ वायव्यंवाएतदुपसृष्टं ॥ आश्विनंदुह्यमानं ॥ मैत्रंदुग्धं ॥ अर्यम्णउद्वास्यमानं ॥ त्वाष्ट्रमुन्नीयमानं ॥ बृहस्पतेरुन्नीतं ॥ सवितुःप्रक्रांतं ॥

द्यावापृथिव्यंह्रियमाणं ॥२॥ ऐंद्राग्नमुपसादितं ॥ सर्वाभ्योवाएषदेवताभ्योजुहोति॥ योग्निहोत्रंजुहोति
यथाखलुवैधेनुंतीर्थेतर्पयति ॥ एवमग्निहोत्रीयजमानंतर्पयति ॥ तृप्यतिप्रजयापशुभिः ॥ प्रसुवर्गंलो
कंजानाति ॥ पश्यतिपुत्रं ॥ पश्यतिपौत्रं ॥ प्रप्रजयापशुभिर्मिथुनैर्जायते ॥ यस्यैवंविदुषोग्निहोत्रंजुह्वति ॥
यउचैनदेवंवेद ॥ ३ ॥ बुभूषोर्ह्रियमाणंजायतेद्वेच ॥ ८ ॥ ॥ त्रयोवैप्रैयमेधाआसन् ॥ तेषांत्रिरेकोग्निहो
त्रमजुहोत् ॥ द्विरेकः ॥ सकृदेकः ॥ तेषांयस्त्रिरजुहोत् ॥ सऋचाजुहोत् ॥ योद्विः ॥ सयजुषा ॥
यःसकृत् ॥ सतूष्णीं ॥ १ ॥ यश्चयजुषाजुहोद्यश्चतूष्णीं ॥ तावुभावार्ध्नुतां ॥ तस्माद्यजुषाहुतिःपूर्वा
होतव्या ॥ तूष्णीमुत्तरा ॥ उभेएवर्द्धीअवरुंधे ॥ अग्निर्ज्योतिर्ज्योतिरग्निःस्वाहेतिसायंजुहोति ॥ रेत
एवतद्दधाति ॥ सूर्योज्योतिर्ज्योतिःसूर्यःस्वाहेतिप्रातः ॥ रेतएवहितंप्रजनयति ॥ रेतोवाएतस्यहितं
नप्रजायते ॥ २ ॥ यस्याग्निहोत्रमहुतंसूर्योभ्युदेति ॥ यद्यंतेस्यात् ॥ उन्नीयप्राङुदाद्रवेत् ॥ सउप
साद्यातमितोरासीत ॥ सयदातामयेत् ॥ अथभूःस्वाहेतिजुहुयात् ॥ प्रजापतिर्वैभूतः ॥ तमेवोपासर
त् ॥ सएवैनंततउन्नयति ॥ नार्तिमार्च्छतियजमानः॥ ३ ॥ तूष्णींजायतेयजमानः ॥ ९ ॥ यदग्निमु
द्धरंति ॥ वसंवस्तर्ह्यग्निः ॥ तस्मिन्यस्यतथाविधेजुह्वति ॥ वसुष्वेवास्याग्निहोत्रंहुतंभवति ॥ नि

हिंतोधूपायन्छेंते ॥ रुद्रास्तर्ह्यग्निः ॥ तस्मिन्यस्यतथांविधेजुह्वति ॥ रुद्रेष्वेवास्यांग्निहोत्रꣳहुतंभंवाति ॥ प्रथममिध्ममर्चिराल्भते ॥ आदित्यास्तर्ह्यग्निः ॥ १ ॥ तस्मिन्यस्यतथांविधेजुह्वति ॥ आदित्येष्वेवास्यांग्निहोत्रꣳहुतंभंवाति ॥ सर्वंएवसर्वंशइध्मआदीप्तोभवाति ॥ विश्वेदेवास्तर्ह्यग्निः ॥ तस्मिन्यस्यतथांविधेजुह्वति ॥ विश्वेष्वेवास्यंदेवेष्वंग्निहोत्रंꣳहुतंभंवाति ॥ नितरामर्चिरुपावैतिलोहिनोकेंत्रभवाति ॥ इंद्रस्तर्ह्यग्निः ॥ तस्मिन्यस्यतथांविधेजुह्वति ॥ इंद्रएवास्यांग्निहोत्रꣳहुतंभंवाति ॥ अंगाराभवंति ॥ तेभ्योंगारेभ्योर्चिरुदेंति ॥ प्रजापंतिस्तर्ह्यग्निः ॥ तस्मिन्यस्यतथांविधेजुह्वति । प्रजापंतावेवास्यांग्निहोत्रꣳहुतंभंवाति ॥ शरोंगाराअध्यूहंते ॥ ब्रह्मतर्ह्यग्निः ॥ तस्मिन्यस्यतथांविधेजुह्वति ॥ ब्रह्मंन्नेवास्यांग्निहोत्रꣳहुतंभंवाति ॥ वसुंषुरुद्रेष्वांदित्येषुविश्वेंषुदेवेषुं ॥ इंद्रेप्रजापंतौब्रह्मन् ॥ अपंरिवर्गमेवास्यैतासुंदेवतासुहुतंभंवति ॥ यस्यैवंविदुषोंग्निहोत्रंजुह्वति ॥ यउंचैनदेवंवेदं ॥ २ ॥ आदित्यास्तर्ह्यग्निरिंद्रएवास्यांग्निहोत्रꣳहुतंभंवतिदेवेषुंचत्वारिंच ॥ १० ॥

॥ ऋतंत्वांसत्येनपरिंषिंचामीतिंसायंपारिंषिंचाति ॥ सत्यंत्वर्तेनपरिंषिंचामीतिप्रातः ॥ अग्निर्वाऋतं ॥ असावांदित्य सत्यं ॥ अग्निनेवतदांदित्येनंसायं

परिषिंचति ॥ अग्निनादित्यंप्रातःसः ॥ यावदहोरात्रेभवंतः ॥ तावदस्यल्लोकस्य ॥ नार्त्तिर्नरिष्टिः ॥ नां
तोनपर्यंतोस्ति ॥ यस्यैवंविदुषोग्निहोत्रंजुह्वति ॥ यउंचैनदेवंवेद ॥ १ ॥ अस्तिद्वेच ॥ ११ ॥
अंगिरसःप्रजापतिरान्नि॰ रुद्रउत्तरावंतोब्रह्मवादिनोग्निहोत्रप्रायणायज्ञाःप्रजापतिरकामयतात्मन्वद्रौद्रंगर्वि
दक्षिणतस्त्रयोवैयदग्निमृतंत्वैकादश ॥ ११ ॥ ॥ अंगिरसःप्रैवतेनंपशूनेवयान्निमार्ष्टियोवाअग्नि
होत्रस्यदक्षिणतःषष्टिः ॥ ६० ॥ ॥ हरिःॐ ॥ ॥ प्रजापतिरकामयतप्रजाःसृजेयेति ॥
सएतंदशंहोतारमपश्यत् ॥ तंमनंसानुद्रुत्यंदर्भस्तंबेजुहोत् ॥ ततोवैसप्रजाअसृजत ॥ ताअस्मात्सृष्टा
अपाक्रामन् ॥ ताग्रहेणागृह्णात् ॥ तद्ग्रहस्यग्रहत्वं ॥ यःकामयेतप्रजायेयेति ॥ सदशंहोतारंमनंसानु
द्रुत्यंदर्भस्तंबेजुहुयात् ॥ प्रजापतिर्वैदशंहोता ॥ १ ॥ प्रजापतिरेवभूत्वाप्रजायते ॥ मनंसाजुहो
ति ॥ मनंइवहिप्रजापतिः ॥ प्रजापतेराप्त्यै ॥ पूर्णयाजुहोति ॥ पूर्णईवहिप्रजापतिः ॥ प्रजापतेरा
प्त्यै ॥ न्यूनयाजुहोति ॥ न्यूनाद्धिप्रजापतिःप्रजाअसृजत ॥ प्रजानांसृष्ट्यै ॥ २ ॥ दर्भस्तंबेजुहो
ति ॥ एतस्माद्वैयोनेःप्रजापतिःप्रजाअसृजत ॥ यस्मादेवयोनेःप्रजापतिःप्रजाअसृजत ॥ तस्मादेवयो
नेःप्रजायते ॥ ब्राह्मणोदक्षिणतउपास्ते ॥ ब्राह्मणोवैप्रजानामुपद्रष्टा ॥ उपद्रष्टुमत्येवप्रजायते ॥ ग्र

होभवति ॥ प्रजानाꣳसृष्टानांधृत्यै ॥ यंब्राह्मणंविद्यांविद्वाꣳसंयशोनच्छेत् ॥ ३ ॥ सोरण्यंपरेत्य ॥
दर्भस्तंबमुद्ग्रथ्य ॥ ब्राह्मणंदक्षिणतोनिषाद्य ॥ चतुर्होतॄन्व्याचक्षीत ॥ एतद्वैदेवानांपरमंगुह्यंब्रह्म ॥ य
च्चतुर्होतारः ॥ तदेवप्रकाशंगमयति ॥ तदेनंप्रकाशंगतं ॥ प्रकाशंप्रजानांगमयति ॥ दर्भस्तंबमुद्ग्रथ्यव्या
चष्टे ॥ ४ ॥ अग्निवान्वैदर्भस्तंबः ॥ अग्निवत्येवव्याचष्टे ॥ ब्राह्मणोदक्षिणतउपास्ते ॥ ब्राह्मणोवैप्र
जानामुपद्रष्टा ॥ उपद्रष्टुमत्येवैनंयशऋच्छति ॥ ईश्वरंतंयशोर्त्तोरित्याहुः ॥ यस्यांतेव्याचष्टइति ॥ व
रस्तस्मैदेयः ॥ यदेवैनंतत्रोपनमति ॥ तदेवावरुंधे ॥ ५ ॥ अग्निमादधानोदशहोत्रारणिमवदध्यात् ॥
प्रजातमेवैनमाधत्ते ॥ तेनैवोद्धुत्याग्निहोत्रंजुहुयात् ॥ प्रजातमेवैनंजुहोति ॥ हविर्निर्वप्स्यंदशहोतारंव्या
चक्षीत ॥ प्रजातमेवैनंनिर्वपति ॥ सामिधेनीरनुवक्ष्यन्दशहोतारंव्याचक्षीत ॥ सामिधेनीरेवसृष्ट्वार
भ्यप्रतनुते ॥ अथोयज्ञोवैदशहोता ॥ यज्ञमेवतनुते ॥ ६ ॥ अभिचरन्दशहोतारंजुहुयात् ॥ नववैपुरुषे
प्राणाः ॥ नाभिर्दशमी ॥ सप्राणमेवैनमभिचरति ॥ एतावद्वैपुरुषस्यस्वं ॥ यावत्प्राणाः ॥ यावदेवा
स्यास्ति॥तदभिचरति ॥ स्वकृतइरिणेजुहोतिप्रदरेवा ॥ एतद्वाअस्यैनिर्ऋतिगृहीतं ॥ निर्ऋतिगृहीतएवैनं
निर्ऋत्याग्राहयति ॥ यद्वाचःक्रूरं ॥ तेनवषट्करोति ॥ वाचएवैनंक्रूरेणप्रवृश्चति ॥ ताजगार्त्तिमार्च्छति

॥ ७ ॥ दशंहोतासृष्टयांऋच्छेद्वयाचंष्टेरुंधएवतंतनुतेनिर्ऋतिगृहीतंपंचच ॥ १ ॥ ॥ प्रजापतिरकाम
यतदर्शपूर्णमासौसृंजयेति ॥ सएतंचतुर्होतारमपश्यत् ॥ तंमनंसानुद्रुत्यांहवनीयेंजुहोत् ॥ ततोवैसद
र्शपूर्णमासावंसृजत ॥ तावंस्मात्सृष्टावपांक्रामतां ॥ तौग्रहेंणागृह्णात् ॥ तद्ग्रहंस्यग्रहत्वं ॥ दर्शपूर्णमा
सावालभंमानः ॥ चतुर्होतारंमनंसानुद्रुत्यांहवनीयेंजुहुयात् ॥ दर्शपूर्णमासावेवसृष्ट्वारभ्यप्रतंनुते
॥ १ ॥ ग्रहोंभवति ॥ दर्शपूर्णमासयोंःसृष्टयोर्धृत्यै ॥ सोंकामयतचातुर्मास्यानिंसृजयेति ॥ सएतं
पंचंहोतारमपश्यत् ॥ तंमनंसानुद्रुत्यांहवनीयेंजुहोत् ॥ ततोवैसचांतुर्मास्यान्यंसृजत ॥ तान्यंस्मात्सृष्टा
न्यपांक्रामन् ॥ तानिग्रहेंणागृह्णात् ॥ तद्ग्रहंस्यग्रहत्वं ॥ चातुर्मास्यान्यालभंमानः ॥ २ ॥ पंचंहोतारंम
नंसानुद्रुत्यांहवनीयेंजुहुयात् ॥ चातुर्मास्यान्येवसृष्ट्वारभ्यप्रतंनुते ॥ ग्रहोंभवति ॥ चातुर्मास्यानांꣳसृष्टा
नांधृत्यै ॥ सोंकामयतपशुबंधꣳसृंजेयेति ॥ सएतꣳषड्ढोतारमपश्यत् ॥ तंमनंसानुद्रुत्यांहवनीयेंजुहो
त् ॥ ततोवैसपशुबंधमंसृजत ॥ सोंस्मात्सृष्टोपांक्रामत् ॥ तंग्रहेंणागृह्णात् ॥ ३ ॥ तद्ग्रहंस्यग्रहत्वं ॥
पशुबंधेनंयक्ष्यमांणः ॥ षड्ढोतारंमनंसानुद्रुत्यांहवनीयेंजुहुयात् ॥ पशुबंधमेवसृष्ट्वारभ्यप्रतंनुते ॥ ग्रहों

भवति ॥ पशुबंधस्यंसृष्टस्यधृत्यै ॥ सोंकामयतसौम्यमंध्वरꣳसृंजेयेति ॥ सएतꣳसप्तहोंतारमपश्य
त् ॥ तंमनंसानुद्रुत्यांहवनीयेंजुहोत् ॥ ततोवैससौम्यमंध्वरमंसृजत ॥ ४ ॥ सोंस्मात्सृष्टोपांक्रामत् ॥
तंग्रहेंणागृह्णात् ॥ तद्ग्रहंस्यग्रहत्वं ॥ दीक्षिष्यमांणः ॥ सप्तहोंतारंमनंसानुद्रुत्यांहवनीयेंजुहुयात् ॥
सौम्यमेवाध्वरꣳसृष्ट्वारभ्यप्रतंनुते ॥ ग्रहोंभवति ॥ सौम्यस्यांध्वरस्यंसृष्टस्यधृत्यै ॥ देवेभ्योवैयज्ञोनप्रा
भंवत् ॥ तमेंतावच्छःसमंभरन् ॥ ५ ॥ यत्संभारा ॥ ततोवैतेभ्योयज्ञःप्राभंवत् ॥ यत्संभाराभवंति ॥
यज्ञस्यप्रभूंत्यै ॥ अतिथ्यमासाद्यव्याचंष्टे ॥ यज्ञमुखंवाआंतिथ्यं ॥ मुखतएवयज्ञꣳसंभृत्यप्रतंनुते ॥
अयंज्ञोवाएषः॥योंपत्नीकंः॥ नप्रजाःप्रजायेरन् ॥ पत्नीर्व्याचंष्टे ॥ यज्ञमेवाकंः ॥ प्रजानांप्रजननाय ॥
उपसत्सुव्याचंष्टे ॥ एतद्वैपत्नीनामायतंनं ॥ स्वएवैनांआयतनेवंकल्पयति ॥६॥ तनुनआलभंमानोगृह्णा
दसृजताभरज्ञायेरन्षट्चं ॥२॥ प्रजापंतिरकामयतप्रजायेयेति ॥ सतपोंतप्यत ॥ सत्रिवृतꣳस्तोमंमसृज
त ॥ तंपंचदशःस्तोमोंमध्यतउदंतृणत् ॥ तौपूर्वपक्षश्चांपरपक्षश्चांभवतां ॥ पूर्वपक्षंदेवाअन्वसृं
ज्यंत ॥ अपरपक्षमन्वसुंराः ॥ ततोदेवाअभंवन् ॥ परासुंराः ॥ यंकामयेंतवसीयान्त्स्यादिति ॥ १ ॥
तंपूर्वपक्षेयांजयेत् ॥ वसीयानेवभंवति ॥ यंकामयेंतपापीयान्त्स्यादिति ॥ तमंपरपक्षेयांजयेत् ॥ पापी
यानेवभंवति ॥ तस्मात्पूर्वपक्षोंपरपक्षात्कंरुण्यंतरः ॥ प्रजापंतिर्वैदशंहोता ॥ चतुर्होतापंचंहो

ता ॥ षड्ढोतासप्तहोता ॥ ऋतवः संवत्सरः ॥ २ ॥ प्रजाः पशव इमे लोकाः ॥ य एवं प्रजापतेर्बहोर्भू
यांसं वेद ॥ बहोरेव भूयान्भवति ॥ प्रजापतिर्देवासुरानसृजत ॥ स इंद्रमपि नासृजत ॥ तं देवा अब्रु
वन् ॥ इंद्रं नो जनयेति ॥ सोऽब्रवीत् ॥ यथाहं युष्मांस्तपसासृक्षि ॥ एवमिंद्रं जनयध्वमिति ॥ ३ ॥
ते तपोऽतप्यंत ॥ त आत्मन्निंद्रमपश्यन् ॥ तमब्रुवन् ॥ जायस्वेति ॥ सोऽब्रवीत् ॥ किंभागधेयमभिजं
निष्य इति ॥ ऋतून्त्संवत्सरं ॥ प्रजाः पशून् ॥ इमान्लोकानित्यब्रुवन् ॥ तं वै माहुत्या प्रजनयतेत्यब्र
वीत् ॥ ४ ॥ तं चतुर्होत्रा प्राजनयन् ॥ यः कामयेत वीरो म आजायेतेति ॥ स चतुर्होतारं जुहुयात् ॥
प्रजापतिर्वै चतुर्होता ॥ प्रजापतिरेव भूत्वा प्रजायते ॥ ऊजनदिंद्रमिंद्रियाय स्वाहेति ग्रहेण जुहोति ॥
आस्य वीरो जायते ॥ वीरꣳ हि देवा एतयाहुत्या प्राजनयन् ॥ आदित्याश्चांगिरसश्च सुवर्गे लोकेऽस्पर्धंत ॥
वयं पूर्वे सुवर्गं लोकमियाम वयं पूर्व इति ॥ ५ ॥ त आदित्या एतं पंचहोतारमपश्यन् ॥ तं पुरा प्रात
रनुवाकादाग्नीध्रे जुहवुः ॥ ततो वै ते पूर्वे सुवर्गं लोकमायन् ॥ यः सुवर्गकामः स्यात् ॥ स पंचहोतारं
पुरा प्रातरनुवाकादाग्नीध्रे जुहुयात् ॥ संवत्सरो वै पंचहोता ॥ संवत्सरः सुवर्गो लोकः ॥ संव
त्सर एवर्तुषु प्रतिष्ठाय ॥ सुवर्गं लोकमेति ॥ तेऽब्रुवन्नांगिरस आदित्यान् ॥ ६ ॥ क्व स्थ ॥ क्व वः सद्भ्यो हु

व्यंवक्ष्यामइति ॥ छंदःस्वित्यंब्रुवन् ॥ गायत्रियांत्रिष्टुभिजगत्यामिति ॥ तस्माच्छंदःसुसद्व्यआ दित्येभ्यः ॥ आंगिरसीःप्रजाहव्यंवहंति ॥ वहंत्यस्मैप्रजाबलिं ॥ ऐनमप्रतिख्यातंगच्छति ॥ यएवंवे दं ॥ द्वादशमासाःपंचर्त्तवः ॥ त्रयंइमेलोकाः ॥ असावादित्यएकविंशः ॥ एतस्मिन्वाएषःश्रितः ॥ ए तस्मिन्प्रतिष्ठितः ॥ यएवमेतंश्श्रितंप्रतिष्ठितंवेदं ॥ प्रत्येवतिष्ठति ॥ ७ ॥ स्यादितिसंवत्सरोजनयध्व मितीत्यब्रवीत्पूर्वइत्यादित्यानृतवःषट्च ॥ ३ ॥ ॥ प्रजापतिरकामयतप्रजायेयेति ॥ सएतंदशहोतार मपश्यत् ॥ तेनंदशधात्मानंविधाय ॥ दशहोत्रातप्यत ॥ तस्याचित्तिःस्रुगासीत् ॥ चित्तमाज्यं ॥ तस्यै तावत्येववागासीत् ॥ एतावान्यज्ञक्रतुः ॥ सचतुर्होतारमसृजत ॥ सोनंदत् ॥ १ ॥ असृक्षिवाइन मिति ॥ तस्यसोमोहविरासीत् ॥ सचतुर्होत्रातप्यत ॥ सोताम्यत् ॥ सभूरितिव्याहरत् ॥ सभूमिमसृ जत ॥ अग्निहोत्रंदर्शपूर्णमासौयजूंश्षि ॥ सद्वितीयमतप्यत ॥ सोताम्यत् ॥ सभुवइतिव्याहरत् ॥ २ ॥ सोंतरिक्षमसृजत ॥ चातुर्मास्यानिसामानि ॥ सतृतीयमतप्यत ॥ सोताम्यत् ॥ ससुवरितिव्या हरत् ॥ सदिवमसृजत ॥ अग्निष्टोममुक्थ्यमतिरात्रमृचः ॥ एतावैव्याहृतयइमेलोकाः ॥ इमान्खलुवैलो काननुप्रजाःपशवश्छंदांसिप्राजायंत ॥ यएवमेताःप्रजापतेःप्रथमाव्याहृतीःप्रजातावेद ॥ ३ ॥ प्रप्रज यापशुभिर्मिथुनैर्जायते ॥ सपंचहोतारमसृजत ॥ सहविर्नाविंदत ॥ तस्मैसोमस्तनुवंप्रायच्छत् ॥ ए

तत्तेहविरिति ॥ सपंचंहोत्रातप्यत ॥ सोताम्यत् ॥ सप्रत्यङ्ङबाधत ॥ सोसुरानसृजत ॥ तदस्याप्रिय
मासीत् ॥ ४ ॥ तद्दुर्वर्णꣳहिरण्यमभवत् ॥ तद्दुर्वर्णस्यहिरण्यस्यजन्म ॥ सद्वितीयमतप्यत ॥ सोता
म्यत् ॥ सप्राङ्बाधत ॥ सदेवानसृजत ॥ तदस्यप्रियमासीत् ॥ तत्सुवर्णꣳहिरण्यमभवत् ॥ तत्सुव
र्णस्यहिरण्यस्यजन्म ॥ यएवꣳसुवर्णस्यहिरण्यस्यजन्मवेद ॥ ५ ॥ सुवर्णआत्मनाभवति ॥ दुर्वर्णो
स्यभ्रातृव्यः ॥ तस्मात्सुवर्णꣳहिरण्यंभार्यं ॥ सुवर्णएवभवति ॥ ऐनंप्रियंगच्छतिनाप्रियं ॥ ससप्तहो
तारमसृजत ॥ ससप्तहोत्रैवसुवर्गंलोकमैत् ॥ त्रिणवेनस्तोमेनैभ्योलोकेभ्योसुरान्प्राणुदत ॥ त्रयस्त्रि
ꣳशेनप्रत्यतिष्ठत् ॥ एकविꣳशेनरुचमधत्त ॥ ६ ॥ सप्तदशेनप्राजायत ॥ यएवंविद्वान्त्सोमेनयजते ॥
सप्तहोत्रैवसुवर्गंलोकमेति ॥ त्रिणवेनस्तोमेनैभ्योलोकेभ्योभ्रातृव्यान्प्रणुदते ॥ त्रयस्त्रिꣳशेनप्रतितिष्ठति ॥
एकविꣳशेनरुचंधत्ते ॥ सप्तदशेनप्रजायते ॥ तस्मात्सप्तदशःस्तोमोननिर्हृत्यः ॥ प्रजापतिर्वैसप्तदशः
॥ प्रजापतिमेवमध्यतोधत्तेप्रजात्यै ॥ ७ ॥ अनंदद्धुवइतिव्याहरद्वेदासीद्वेदाधत्तप्रप्रजात्यै ॥ ४ ॥
देवावैवरुणमयाजयन् ॥ सयस्यैयस्यैदेवतायैदक्षिणामनयत् ॥ तामव्लीनात् ॥ तेब्रुवन् ॥ व्यावृ
त्यप्रतिगृह्णाम ॥ तथानोदक्षिणानव्लेष्यतीति ॥ तेव्यावृत्यप्रत्यगृह्णन् ॥ ततोवैतांदक्षिणानाव्लीनात् ॥

यएवंविद्वान्व्यावृत्यदक्षिणांप्रतिगृह्णाति ॥ नैनंदक्षिणाव्लीनाति ॥ १ ॥ राजात्वावरुणोनयतुदेविदक्षिणे
अग्नयेहिरण्यमित्याह ॥ आग्नेयंवैहिरण्यं ॥ स्वयैवैनंद्देवतयाप्रतिगृह्णाति ॥ सोमायवासइत्याह ॥ सौ
म्यंवैवासः ॥ स्वयैवैनंद्देवतयाप्रतिगृह्णाति ॥ रुद्रायगामित्याह ॥ रौद्रीवैगौः ॥ स्वयैवैनांदेवतयाप्रति
गृह्णाति ॥ वरुणायाश्वमित्याह ॥ २ ॥ वारुणोवाअश्वः ॥ स्वयैवैनंदेवतयाप्रतिगृह्णाति ॥ प्रजापत
यपुरुषमित्याह ॥ प्राजापत्योवैपुरुषः ॥ स्वयैवैनंदेवतयाप्रतिगृह्णाति ॥ मनवेतल्पमित्याह ॥ मान
वोवैतल्पः ॥ स्वयैवैनंदेवतयाप्रतिगृह्णाति ॥ उत्तानायांगीरसायानइत्याह ॥ इयंवाउत्तानआंगीरसः
॥ ३ ॥ अनयैवैनत्प्रतिगृह्णाति ॥ वैश्वानर्यर्चारथंप्रतिगृह्णाति ॥ वैश्वानरोवैदेवतयारथः ॥ स्वयैवैनंदे
वतयाप्रतिगृह्णाति ॥ तेनामृतत्वमश्यामित्याह ॥ अमृतमेवात्मन्धत्ते ॥ वयोदात्रइत्याह ॥ वयएवैनं
कृत्वा ॥ सुवर्गलोकंगमयति ॥ मयोमह्यमस्तुप्रतिग्रहीत्रइत्याह ॥ ४ ॥ यद्वैशिवं ॥ तन्मयः ॥ आ
त्मनएवैषापरीत्तिः ॥ कइदंकस्माअदादित्याह ॥ प्रजापतिर्वैकः ॥ सप्रजापतयेददाति ॥ कामःका
मायेत्याह ॥ कामेनहिददाति ॥ कामेनप्रतिगृह्णाति ॥ कामोदाताकामःप्रतिग्रहीतेत्याह ॥ ५ ॥ का
मोहिदाता ॥ कामःप्रतिग्रहीता ॥ कामंसमुद्रमाविशेत्याह ॥ समुद्रइवहिकामः ॥ नेवहिकामस्यां
तोस्ति ॥ नसमुद्रस्य ॥ कामेनत्वाप्रतिगृह्णामीत्याह ॥ येनकामेनप्रतिगृह्णाति ॥ सएवैनममुष्मिँल्लोके

कामआगच्छति ॥ कामैतत्तएषातेकामदक्षिणेत्याह ॥ कामंएवतद्यजमानोमुष्मिंल्लोकेदक्षिणामिच्छ
ति ॥ नप्रतिग्रहीतारं ॥ यएवंविद्वान्दक्षिणांप्रतिगृह्णाति ॥ अनृणामेवैनांप्रतिगृह्णाति ॥ ६ ॥ बुलि
नात्यश्वमित्याहांगीरस प्रतिग्रहीत्रइत्याहप्रतिग्रहीतेत्याहदक्षिणेत्याह चत्वारिच ॥ ५ ॥ ॥ अंतोवाए
षयज्ञस्य ॥ यद्दशममहः ॥ दशमेहन्त्सर्पराज्ञियां ऋग्भिःस्तुवंति ॥ यज्ञस्यैवांतंगत्वा ॥ अन्नाद्यमव
रुंधते ॥ तिसृभिःस्तुवंति ॥ त्रयंइमेलोकाः ॥ एभ्यएवलोकेभ्योन्नाद्यमवरुंधते ॥ पृश्निवतीर्भवंति ॥ अ
न्नंवैपृश्नि ॥ १ ॥ अन्नमेवावरुंधते ॥ मनसाप्रस्तौति ॥ मनसोद्गायति ॥ मनसाप्रतिहरति ॥ मनइ
वहिप्रजापतिः॥प्रजापतेराप्त्यै ॥ देवावैसर्पाः ॥ तेषामियंराज्ञी ॥ यत्सर्पराज्ञियाऋग्भिःस्तुवंति ॥
अस्यामेवप्रतितिष्ठंति ॥ २ ॥चतुर्होतॄन्होताव्याचष्टे ॥ स्तुतमनुशंसतिशांत्यै ॥ अंतोवाएषयज्ञस्य
यद्दशममहः ॥ एतत्खलुवैदेवानांपरमंगुह्यंब्रह्म ॥ यच्चतुर्होतारः ॥ दशमेहंश्चतुर्होतॄन्व्याचष्टे ॥
यज्ञस्यैवांतंगत्वा ॥ परमंदेवानांगुह्यंब्रह्मावरुंधे ॥ तदेवप्रकाशंगमयति ॥ ३ ॥ तदेनंप्रकाशंगतं ॥
प्रकाशंप्रजानांगमयति ॥ वाचंयच्छति ॥ यज्ञस्यधृत्यै ॥ यजमानदेवत्यंवाअहः ॥ भ्रातृव्यदेवत्यां
रात्रिः ॥ अह्नारात्रिंध्यायेत् ॥ भ्रातृव्यस्यैवतल्लोकंवृंक्ते ॥ यद्दिवावाचंविसृजेत् ॥ अहर्भ्रातृव्यायोच्छिं

ऽषेत् ॥ यन्नक्तं विसृजेत् ॥ रात्रिं भ्रातृव्यायोच्छिंऽषेत् ॥ अधिवृक्षसूर्ये वाचं विसृजति ॥ एतावंतमेवास्मै लोकमुच्छिंऽषति ॥ यावंदादित्योस्तमेति ॥ ४ ॥ पृश्निं तिष्ठंतिगमयतिशिंऽषेत्पंच च ॥ ६ ॥ प्रजापतिः प्रजा असृजत ॥ ताः सृष्टाः समश्लिष्यन् ॥ ता रूपेणानुप्राविशत् ॥ तस्मादाहुः ॥ रूपं वै प्रजापतिरिति ॥ ता नाम्नानुप्राविशत् ॥ तस्मादाहुः ॥ नाम वै प्रजापतिरिति ॥ तस्मादप्यामित्रौ संगत्य ॥ नाम्ना चेद्ध्वयेते ॥ १ ॥ मित्रमेव भवतः ॥ प्रजापतिर्देवासुरानसृजत ॥ स इंद्रमपि नासृजत ॥ तं देवा अब्रुवन् ॥ इंद्रं नो जनयेति ॥ स आत्मन्निंद्रमपश्यत् ॥ तमसृजत ॥ तं त्रिष्टुग्वीर्यं भूत्वानुप्राविशत् ॥ तस्य वज्रः पंचदशो हस्त आपद्यत ॥ तेनोदैयासुरानभ्यभवत् ॥ २ ॥ य एवं वेद ॥ अभि भ्रातृव्यान्भवति ॥ ते देवा असुरैर्विजित्य ॥ सुवर्गं लोकमायन् ॥ तेमुष्मिंल्लोके व्यक्षुध्यन् ॥ तेब्रुवन् ॥ अमुतः प्रदानं वा उपजिजीविमेति ॥ ते सप्तहोतारं यज्ञं विधायायास्यं ॥ आंगीरसं प्राहिण्वन् ॥ एतेनामुत्र कल्पयेति ॥ ३ ॥ तस्य वा इयं कॢप्तिः ॥ यदिदं किंच ॥ य एवं वेद ॥ कल्पतेस्मै ॥ स वा अयं मनुष्येषु यज्ञः सप्तहोता ॥ अमुत्र सद्भ्यो देवेभ्यो हव्यं वहति ॥ य एवं वेद ॥ उपैनं यज्ञो नमति ॥ सोमन्यत ॥ अभि वा इमे स्माल्लोकादमुं लोकं कमिष्यत इति ॥ स वाचस्पते हृदिति व्याहरत् ॥ तस्मात्पुत्रो हृदयं ॥ तस्मादस्माल्लोका

दमुंलोकंनाभिकांमयंते ॥ पुत्रोहिहृदंयं ॥ ४ ॥ व्हयेंतेअभवत्कल्पयेतीतिंचत्वारिंच ॥ ७ ॥ ॥ दे
वावैचतुंर्होतृभिर्यज्ञमंतन्वत ॥ तेविपाप्मनाभ्रातृंव्येणाजंयंत ॥ अभिसुंवर्गंलोकमंजयन् ॥ यएवंवि
द्वाꣳश्चतुंर्होतृभिर्यज्ञंतंनुते ॥ विपाप्मानाभ्रातृंव्येणजयते ॥ अभिसुंवर्गंलोकंजंयति ॥ षड्ढोंत्राप्रायणी
यमासांदयति ॥ अमुष्मैवैलोकायषड्ढोंता ॥ ध्नंतिखलुवाएतत्सोमं ॥ यदंभिषुण्वंतिं ॥ १ ॥ ऋजुधै
वैनंममुंलोकंगंमयति ॥ चतुंर्होत्रातिथ्यं ॥ यशोवैचतुंर्होता ॥ यशंएवात्मन्धंत्ते ॥ पंचंहोत्रापशुमुपं
सादयति ॥ सुवर्ग्योवैपंचंहोता ॥ यजंमानःपशुः ॥ यजंमानमेवसुंवर्गंलोकंगंमयति ॥ ग्रहान्गृहीत्वा
त्वासप्तहोंतारंजुहोति ॥ इंद्रियंवैसप्तहोंता ॥ २ ॥ इंद्रियमेवात्मन्धंत्ते ॥ योवैचतुंर्होतृननुसवनंतर्पयंति
॥ तृप्यंतिप्रजयांपशुभिः ॥ उपैनꣳसोमपीथोनंमति ॥ बहिष्पवमानेदशंहोतारंव्याचंक्षीत ॥ माध्यं
दिनेपवंमानेचतुंर्होतारं ॥ आर्भवेपवंमानेपंचंहोतारं ॥ पितृयज्ञेषड्ढोंतारं ॥ यज्ञायज्ञियंस्यस्तोत्रेसप्तहोंतारं
अनुसवनमेवैनांꣳस्तर्पयति ३ तृप्यंतिप्रजयांपशुभिः ॥ उपैनꣳसोमपीथोनंमति ॥ देवावैचतुंर्होतृभिःस
त्रमांसत ॥ ऋद्धिंपरिमितंयशंस्कामाः ॥ तेंब्रुवन् ॥ यन्नःप्रथमंयशंऋच्छात् ॥ सर्वेंषान्नस्तत्सहासादितिं ॥
सोमश्चतुंर्होता ॥ अग्निःपंचंहोता ॥ धाताषड्ढोंता ४ इंद्रःसप्तहोता ॥ प्रजापंतिर्दशहोता ॥ तेषाꣳसो

मः॒ राजा॑नं॒ यश॑ आर्च्छत् ॥ तन्यं॑कामयत ॥ तेना॑पा॑क्रामत् ॥ तेनं॑प्र॒लाय॑मचरत् ॥ तं दे॒वाः प्रै॒षैः प्रै॑षमै॑च्छन्
॥ तत्प्रै॑षाणा॑प्रै॒ष॒त्वं ॥ नि॒वि॒द्भि॒र्न्य॑वेदयन् ॥ तन्नि॒विदा॑न्निवि॒त्वं ५ आ॒प्री॑भि॒राप्नुवन् ॥ तदा॒प्रीणा॑मा
प्रि॒त्वं ॥ तमं॑घ्नन् ॥ तस्य॒यशो॒ऽव्यं॑गृह्णत ॥ ते ग्रहा॑ अभवन् ॥ तद्ग्रहा॑णां ग्रह॒त्वं ॥ यस्यै॒वंवि॒दु॒षो॑ ग्रहा॑
गृ॒ह्यंते॑ ॥ तस्य॒त्वेवं॑गृ॒ही॒ताः ॥ ते॑ऽब्रुवन् ॥ यो वै॒नः॒ श्रेष्ठो॒ऽभूत् ॥६॥ तमं॑वधिष्म ॥ पुन॑रि॒मं॑ सुवा॑मह॒ा इति॑
॥ तं छंदो॑भिरसुवंत ॥ तच्छंद॑सां छंद॒स्त्वं ॥ साम्ना॒समा॑नंयन् ॥ तत्साम्नः॑साम॒त्वं ॥ उ॒क्थैरु॒द॑स्थापयन् ॥
तदु॒क्थाना॑मुक्थ॒त्वं ॥ य ए॒वं वेद॑ ॥ प्रत्ये॒वति॑ष्ठति ॥ ७ ॥ सर्व॒मायु॑रेति ॥ सोमो॒ वै यशः॑ ॥ य ए॒वं वि॒
द्वान्त्सोमं॑मा॒गच्छं॑ति ॥ यश॑ ए॒वैनं॑मृ॒च्छति ॥ तस्मा॑दाहुः ॥ यश्चै॒वं वेद॒ यश्च॒ न ॥ तावु॒भौ सोम॒मागं॑च्छ
तः ॥ सोमो॒ हि यशः॑ ॥ तंत्वाव यश॑ ऋच्छ॒तीत्या॑हुः ॥ यः सोमे॒ सोमं॑ प्राहेति॑ ॥ तस्मा॒त्सोमे॒ सोम॒ः प्रोच्यः॑ ॥
यश॑ ए॒वैनं॑मृ॒च्छति ॥ ८ ॥ अ॒भि॒षु॒ण्वंति॑ स॒प्त होता॑ तात॒र्पय॑ति॒ षड्ढो॑त्रानिवि॒त्वनभूं त्तिष्ठा॒ति॒ प्राहे॑ति॒ द्वेच॑ ॥ ८ ॥
इ॒दं वा अग्रे॒ नैव किंच॒नासी॑त् ॥ न द्यौरा॑सीत् ॥ न पृ॑थि॒वी ॥ नांतरि॑क्षं ॥ तदस॑दे॒व सन्मनो॑ऽकुरु॒त स्यामि
ति॑ ॥ तद॑तप्यत ॥ तस्मा॑त्तेपा॒नाद्धू॒मो॑ऽजायत ॥ तद्भूयो॑ऽतप्यत ॥ तस्मा॑त्तेपा॒नाद॒ग्निर॑जायत ॥ तद्भू
यो॑ऽतप्यत ॥ १ ॥ तस्मा॑त्तेपा॒नाज्ज्योति॑रजायत ॥ तद्भूयो॑ऽतप्यत ॥ तस्मा॑त्तेपा॒नाद॒र्चिर॑जायत ॥ त

भूयोतप्यत ॥ तस्मात्तेपानान्मरीचयोजायंत ॥ तद्भूयोतप्यत ॥ तस्मात्तेपानादुदाराअजायंत ॥ तद्भू
योतप्यत ॥ तदभ्रमिवसमहन्यत ॥ तद्वस्तिमभिनत् ॥ २ ॥ ससमुद्रोभवत् ॥ तस्मात्समुद्रस्यन
पिबंति ॥ प्रजननमिवहिमन्यंते ॥ तस्मात्पशोर्जायमानादापं पुरस्तायंति ॥ तद्दशहोतान्वसृज्यत
॥ प्रजापतिर्वैदशहोता ॥ यएवंतपसोवीर्यविद्वाꣳस्तप्यंते ॥ भवत्येव ॥ तद्वाइदमापःसलिलमा
सीत् ॥ सोरोदीत्प्रजापतिः ॥ ३ ॥ सकस्माअज्ञि ॥ यद्यस्याअप्रतिष्ठायाइति ॥ यदप्स्ववापद्यत ॥
सापृथिव्यभवत् ॥ यद्व्यमृष्ट ॥ तदंतरिक्षमभवत् ॥ यदूर्ध्वमुदमृष्ट ॥ साद्यौरभवत् ॥ यदरोदीत् ॥
तदनयोरोदस्त्वं ॥४॥ यएवंवेद ॥ नास्यगृहेरुदंति ॥ एतद्वाएषांलोकानांजन्म ॥ यएवमेषांलोकानां
जन्मवेद ॥ नैषुलोकेष्वार्तिमार्च्छति ॥ सइमांप्रतिष्ठामविंदत ॥ सइमांप्रतिष्ठांवित्वाकामयतप्रजायेये
ति ॥ सतपोतप्यत ॥ सोंतर्वानभवत् ॥ सजघनादसुरानसृजत ॥ ५ ॥ तेभ्योमृन्मयेपात्रेन्नमदु
हत् ॥ यास्यसातनूरासीत् ॥ तामपाहत ॥ सातमिस्राभवत् ॥ सोकामयतप्रजायेयेति ॥ स
तपोतप्यत ॥ सोंतर्वानभवत् ॥ सप्रजननादेवप्रजाअसृजत ॥ तस्मादिमाभूयिष्ठाः ॥ प्रजननाध्ये
नाअसृजत ॥ ६ ॥ ताभ्योदारुमयेपात्रेपयोदुहत् ॥ यास्यसातनूरासीत् ॥ तामपाहत ॥ साजोत्स्ना

भवत् ॥ सोऽकामयत प्रजायेयेति ॥ स तपोऽतप्यत ॥ सोऽन्तर्वानभवत् ॥ स उपपक्षाभ्यामेवर्तून्नसृजत ॥
तेभ्यो रजते पात्रे घृतमदुहत् ॥ यास्य सा तनूरासीत् ॥ ७ ॥ तामपाहत ॥ सोऽहोरात्रयोः संधिरभवत् ॥
सोऽकामयत प्रजायेयेति ॥ स तपोऽतप्यत ॥ सोऽन्तर्वानभवत् ॥ स मुखादहोरात्रानसृजत ॥ तेभ्यो हरिते पात्रे सो
ममदुहत् ॥ यास्य सा तनूरासीत् ॥ तामपाहत ॥ तदहरभवत् ॥ ८ ॥ एते वै प्रजापतेर्दोहाः ॥ य ए
वं वेद ॥ दुह एव प्रजाः ॥ दिवा वै नोऽभूदिति ॥ तद्देवानां देवत्वं ॥ य एवं देवानां देवत्वं वेद ॥ देववान्
भवति ॥ एतद्वा अहोरात्राणां जन्म ॥ य एवमहोरात्राणां जन्म वेद ॥ नाहोरात्रेष्वार्तिमार्छति ॥ ९ ॥
असतोऽधि मनोऽसृज्यत ॥ मनः प्रजापतिमसृजत ॥ प्रजापतिः प्रजा असृजत ॥ तद्वा इदं मनस्येव परमं
प्रतिष्ठितं ॥ यदिदं किंच ॥ तदेतच्छ्वोवस्यसन्नाम ब्रह्म ॥ व्युच्छन्ती व्युच्छन्त्यस्मै वस्यसी वस्यसी व्युच्छति ॥ प्र
जायते प्रजया पशुभिः ॥ प्र परमेष्ठिनो मात्रामाप्नोति ॥ य एवं वेद ॥ १० ॥ अग्निरंजायत तं तप्यत अभिन
दरोदात्प्रजापतेरोदस्त्वमसृजतासृजत घृतमदुहद्यास्य सा तनूरासीदहरभवदच्छति वेद ॥ ९ ॥ ॥ इदं
धूमोऽग्निर्ज्योतिरर्चिर्मरीचय उदारास्तदभ्रं जघनात्सा तमिस्रा स प्रजननात्सा ज्योत्स्ना स उपपक्षाभ्या ९ सोऽहो
रात्रयोः संधिः समुखात्तदहरभवन्मृन्मये दारुमये रजते हरिते तेभ्यस्ताभ्यो द्वे तन्नपयोघृत ९ सोमं ॥ प्रजा

पतिरिंद्रमसृजतानुजावरंदेवानां ॥ तंप्राहिणोत् ॥ परेहि ॥ एतेषांदेवानामधिपतिरेधीति ॥ तंदे
वाअब्रुवन् ॥ कस्त्वमसि ॥ वयंवैत्वच्छ्रेयांसस्मइति ॥ सोब्रवीत् ॥ कस्त्वमसित्वयंवैत्वच्छ्रेयांस्स
स्मइतिमादेवाअवोचन्निति ॥ अथवाइदंतर्हिप्रजापतौहरआसीत् ॥ १ ॥ यदस्मिन्नादित्ये ॥ तदेनम
ब्रवीत् ॥ एतन्मेप्रयच्छ ॥ अथाहमेतेषांदेवानामधिपतिर्भविष्यामीति ॥ कोहंस्यामित्यब्रवीत् ॥ एत
त्प्रदायेति ॥ एतत्स्याइत्यब्रवीत् ॥ यदेतद्ब्रवीषीति ॥ कोहवैनामप्रजापतिः ॥ यएवंवेद ॥ २ ॥ वि
दुरेनंनाम्ना ॥ तदस्मैरुक्मंकृत्वाप्रत्यमुंचत् ॥ ततोवाइंद्रोदेवानामधिपतिरभवत् ॥ यएवंवेद ॥ अधिप
तिरेवसमानानांभवति ॥ सोमन्यत ॥ किंकिंवाअकरमिति ॥ सचंद्रमआहरोतिप्रालपत् ॥ तच्चंद्रमस
श्चंद्रमस्त्वं ॥ यएवंवेद ॥ ३ ॥ चंद्रवानेवभवति ॥ तंदेवाअब्रुवन् ॥ सुवीर्योमर्यायथागोपायतइति
॥ तत्सूर्यस्यसूर्यत्वं ॥ यएवंवेद ॥ नैनंदभ्नोति ॥ कश्चनास्मिन्वाइदमिंद्रियंप्रत्यस्थादिति ॥ तदिंद्र
स्येंद्रत्वं ॥ यएवंवेद ॥ इंद्रियाव्येवभवति ॥ ४ ॥ अयंवाइदंपरमोभूदिति ॥ तत्परमेष्ठिनःपरमेष्ठि
त्वं ॥ यएवंवेद ॥ परमामेवकाष्ठांगच्छति ॥ तंदेवाःसमंतंपर्यविशन् ॥ वसवःपुरस्तात् ॥ रुद्रादक्षि
णतः ॥ आदित्याःपश्चात् ॥ विश्वेदेवाउत्तरतः ॥ अंगिरसःप्रत्यंचं ॥ ५ ॥ साध्याःपराचं ॥ यएवं
वेद ॥ उपैनंसमानाःसंविशंति ॥ सप्रजापतिरेवभूत्वाप्रजाआवयत् ॥ ताअस्मैनातिष्ठंतान्नाद्याय ॥

तामुखंपुरस्तात्पश्यंतीः ॥ दक्षिणत.पर्यायन् ॥ सदक्षिणतःपर्यवर्त्तयत ॥ तामुखंपुरस्तात्पश्यंती ॥ मुखं
दक्षिणतः ॥ ६ ॥ पश्चात्पर्यायन् ॥ सपश्चात्पर्यवर्त्तयत ॥ तामुखंपुरस्तात्पश्यंतीः ॥ मुखंदक्षिणतः
॥ मुखंपश्चात् ॥ उत्तरतःपर्यायन् ॥ सउत्तरतःपर्यवर्त्तयत ॥ तामुखंपुरस्तात्पश्यंतीः ॥ मुखंदक्षि
णतः ॥ मुखंपश्चात् ॥ ७ ॥ मुखमुत्तरतः ॥ ऊर्ध्वाउदायन् ॥ सउपरिष्टान्यवर्त्तयत ॥ ताःसर्वतो
मुखोभूत्वावयत् ॥ ततोवैतस्मैप्रजाअतिष्ठंतान्नाद्याय ॥ यएवंविद्वान्परिचवर्त्तयतेनिचं ॥ प्रजापतिरे
वभूत्वाप्रजाअत्ति ॥ तिष्ठंतेस्मैप्रजाअन्नाद्याय ॥ अन्नादएवभवति ॥८॥ आसोद्वेदंचंद्रमस्त्वंयएवंवेदंद्रि
याण्येवभवतिप्रत्यंचंमुखंदक्षिणतोमुखंपश्चान्नवच ॥ १० ॥ प्रजापतिरकामयतबहोर्भूयान्त्स्यामिति ॥ सए
तंदशहोतारमपश्यत् ॥ तंप्रायुंक्त ॥ तस्यप्रयुक्तिबहोर्भूयानभवत् ॥ य कामयेतबहोर्भूयान्त्स्यामिति ॥
॥ सदशहोतारंप्रयुंजीत ॥ बहोरेवभूयान्भवति ॥ सोकामयतवीरोमआजायेतेति ॥ सदशहोतुश्चतु
र्होतारंनिरमिमीत ॥ तंप्रायुंक्त ॥ ३ ॥ तस्यप्रयुक्तींद्रोजायत ॥ यःकामयेतवीरोमआजायेतेति ॥ स
चतुर्होतारंप्रयुंजीत ॥ आस्यवीरोजायते ॥ सोकामयतपशुमान्त्स्यामिति ॥ सचतुर्होतुपंचहोतारंनि
रमिमीत ॥ तंप्रायुंक्त ॥ तस्यप्रयुक्तिपशुमानभवत् ॥ यःकामयेतपशुमान्त्स्यामिति ॥ सपंचहोतारं

प्रयुंजीत ॥ २ ॥ पशुमानेवभंवति ॥ सोंकामयतत्त्वेंमिकल्पेरन्निति ॥ सपंचंहोतुःषष्ठोंतारंनिरंमिमी
त ॥ तंप्रायुंङ्क्त ॥ तस्यप्रयुंक्त्यृतवोंस्माअकल्पत ॥ यःकामयेंतत्त्वेंमेकल्पेरन्निति ॥ सषष्ठोंतारंप्रयुं
जीत ॥ कल्पंतेस्माऋतवंः ॥ सोंकामयतसोमप सोंमयाजीस्यां ॥ आमेसोमप सोंमयाजीजायेतेति ॥
॥ ३ ॥ सषष्ठोंतुःसप्तहोंतारंनिरंममीत ॥ तंप्रायुंङ्क्त ॥ तस्यप्रयुंक्तिसोमपःसोंमयाज्यंभवत् ॥ आस्यंसो
मप सोंमयाज्यंजायत ॥ य कामयेंतसोमपःसोंमयाजीस्यां ॥ आमेंसोमपःसोंमयाजीजायेतेति ॥ ससप्त
होंतारंप्रयुंजीत ॥ सोमपएवसोंमयाजीभंवति॥आस्यंसोमपःसोंमयाजीजांयते ॥ सवाएषपशुःपंचधाप्र
तितिष्ठति ॥ ४ ॥ पद्भिर्मुखेंन ॥ तेदेवाःपशून्वित्वा ॥ सुवर्गंलोकमांयन् ॥ तेंमुष्मिंन्लोकेव्यंक्षुध्य
न् ॥ तेंब्रुवन् ॥ अमुतंःप्रदानंवाउपंजिजीविमेति ॥ तेसप्तहोंतारंयज्ञंविधायायास्यं ॥ आंगीरसंप्राहिं
ण्वन् ॥ एतेनामुत्रंकल्पयेति ॥ तस्यवाइयंक्लृप्तिः॥ ५ ॥ यदिदंकिंच ॥ यएवंवेद ॥ कल्पंतेस्मै ॥ सवा
अयंमनुष्येषुयज्ञःसप्तहोता ॥ अमुत्रंसद्भ्योदेवेभ्योहव्यंवहति ॥ यएवंवेद ॥ उपैनंयज्ञोनमति ॥ योवै
चतुर्होतॄणांनिदानंवेद ॥ निदानंवान्भवति ॥ अग्निहोत्रंवैदशहोतुर्निदानं ॥ दर्शपूर्णमासौचतुर्होतुः ॥
चातुर्मास्यानिपंचंहोतुः ॥ पशुबंधःषष्ठोंतुः ॥ सौम्योंध्वरःसप्तहोंतुः॥ एतद्वैचतुर्होतॄणांनिदानं ॥ यए

वंवेद ॥ निदानवान्भवति ॥ ६ ॥ अग्निमीनर्तप्रायुंक्पंचहोतारंप्रयुंजीतजायेतेतितिष्ठतिकृमिर्दशहो
तुर्निदानंश्सप्तचं ॥ ११ ॥ ॥ प्रजापतिरकामयतप्रजा सृजेयेतिप्रजापतिरकामयतदर्शपूर्णमासौ
सृजेयतिप्रजापतिरकामयतप्रजायेयेतिसतप सत्रिवृतंप्रजापतिरकामयतप्रजायेयेतिसएतंदशहोतारंतेनंद
शवात्मानंदेवावैवरुणमंतोवप्रजापतिस्ताःसृष्टाःसमश्लिष्यंदेवावैचतुर्होतृभिरिदंवाअग्रेप्रजापतिरिंद्रंप्रजाप
तिरकामयतवहोर्भूयानेकादश ॥ १२ ॥ ॥ प्रज पतिस्तद्वहंस्यग्रहत्वंप्रजापतिरकामयतप्रजायेयेति
सएतंदशहोतारमनयैवंनत्तस्यवाङयंकृमिस्तस्मांत्तेप्रानाज्ज्योतिर्यदस्मिन्नादित्येसषड्ढोतुःसप्तहोतारंत्रिसंप्त
तिः ॥ ॥ ७२ ॥ ॥ हरिः ॐ ॥ ॥ ब्रह्मवादिनोवदंति ॥ किंचतुर्होतृणांचतुर्होतृत्वमिति ॥
यदेवैषुचतुर्द्धाहोतारः ॥ तेनचतुर्होतारः ॥ तस्माच्चतुर्होतारउच्यंते ॥ तच्चतुर्होतृणांचतुर्होतृत्वं ॥ सो
मोवैचतुर्होता ॥ अग्निःपंचहोता ॥ धाताषड्ढोता ॥ इंद्रःसप्तहोता ॥ १ ॥ प्रजापतिर्दशहोता ॥ य
एवंचतुर्होतृणामृद्धिंवेद ॥ ऋध्नोत्येव ॥ यएषामेवंबंधुतांवेद ॥ बंधुमान्भवति ॥ यएषामेवंकृमिंवि
दं ॥ कल्पतेस्मै ॥ यएषामेवमायतनंवेदं ॥ आयतनवान्भवति ॥ यएषामेवंप्रतिष्ठांवेद ॥ २ ॥ प्रत्ये
वतिष्ठति ॥ ब्रह्मवादिनोवदंति ॥ दशहोताचतुर्होता ॥ पंचहोताषड्ढोतासप्तहोता ॥ अथकस्माच्चतु

होतारउच्यंतइति ॥ इंद्रोवैचतुर्होता ॥ इंद्रःखलुवैश्रेष्ठोदेवतानामुपदेशनात् ॥ यएवमिंद्रꣳश्रेष्ठंदेव
तानामुपदेशनाद्वेद ॥ वसिष्ठःसमानानांभवति ॥ तस्माच्छ्रेष्ठमायंतंप्रथमेनैवानुबुध्यंते ॥ अयमागन् ॥
अयमवासादिति ॥ कीर्तिरस्यपूर्वागच्छतिजनतामायतः ॥ अथोएनंप्रथमेनैवानुबुध्यंते ॥ अयमाग
न् ॥ अयमवासादिति ॥ ३ ॥ सप्तहोताप्रतिष्ठांवेदंबुध्यंतेषट्चं ॥ १ ॥ ॥ दक्षिणांप्रतिग्रही
ष्यन्त्सप्तदशकृत्वोपान्यात् ॥ आत्मानमेवसमिंधे ॥ तेजसेवीर्याय ॥ अथोप्रजापतिरेवैनांभूत्वाप्रति
गृह्णाति ॥ आत्मनोनार्त्यै ॥ यद्येनमार्त्विज्याद्वृतꣳसंतंनिर्हरेरन् ॥ आग्नीध्रेजुहुयाद्दशहोतारं ॥ चतुर्गृही
तेनाज्येन ॥ पुरस्तात्प्रत्यङ्तिष्ठन् ॥ प्रतिलोमंविग्राहं ॥ १ ॥ प्राणानेवास्योपदासयति ॥ यद्येनंपुन
रुपशिक्षेयुः ॥ आग्नीध्रएवजुहुयाद्दशहोतारं ॥ चतुर्गृहीतेनाज्येन ॥ पश्चात्प्राङासीनः ॥ अनुलोमम
विग्राहं ॥ प्राणानेवास्मैकल्पयति ॥ प्रायश्चित्तीवाग्घोतेत्यृतुमुखऋतुमुखेजुहोति ॥ ऋतूनेवास्मैकल्पय
ति ॥ कल्पंतेस्माऋतवः ॥ २ ॥ क्लृप्ताअस्माऋतवआयंति ॥ षड्ढोतावैभूत्वाप्रजापतिरिदꣳसर्वमसृज
त ॥ समनोसृजत ॥ मनसोधिगायत्रीमसृजत ॥ तद्गायत्रीयशआर्च्छत् ॥ तामालभत ॥ गायत्रि
याअधिछंदाꣳस्यसृजत ॥ छंदोभ्योधिसाम ॥ तत्सामयशआर्च्छत् ॥ तदालभत ॥ ३ ॥ साम्नोधि

यजूꣳष्यसृजत ॥ यजुर्भ्योऽधिविष्णुं ॥ तद्विष्णुंयशआर्च्छत् ॥ तमालंभत ॥ विष्णोरध्योषधीरसृज
त ॥ ओषधीभ्योऽधिसोमं ॥ तत्सोमंयशआर्च्छत् ॥ तमालंभत ॥ सोमादधिपशूनसृजत ॥ पशुभ्यो
धींद्रं ॥ ४ ॥ तदिंद्रंयशआर्च्छत् ॥ तदेनंनातिप्राच्यवत ॥ इंद्रइवयशस्वीभवति ॥ यएवंवेद ॥ नैनं
यशोतिप्रच्यवते ॥ यद्वाइदंकिंच ॥ तत्सर्वमुत्तानएवांगीरसःप्रत्यगृह्णात् ॥ तदेनंप्रतिगृहीतंनाहिनत्
॥ यत्किंचप्रतिगृह्णीयात् ॥ तत्सर्वमुत्तानस्त्वांगीरसःप्रतिगृह्णात्वित्येवप्रतिगृह्णीयात् ॥ इयंवाउत्तान
आंगीरसः ॥ अनयैवैनत्प्रतिगृह्णाति ॥ नैनꣳहिनस्ति ॥ बर्हिषाप्रतियाद्गांवाश्वंवा ॥ एतद्वैपशूनांप्रियं
धाम ॥ प्रियेणैवैनंधाम्नाप्रत्येति ॥ ५ ॥ विग्राहंमृतवस्तदालंभतेद्रंगृह्णीयात्षड्‌ ॥ २ ॥ योवाआवि
द्वान्निवर्त्तयंते ॥ विशीर्षासपाप्मामुष्मिंल्लोकेभवति ॥ अथयोविद्वांनिवर्त्तयते ॥ सशीर्षाविपाप्मामु
ष्मिंल्लोकेभवति ॥ देवमावैसप्तपुष्टिकामान्यवर्त्तयंत ॥ अग्निश्चपृथिवीच ॥ वायुश्चांतरिक्षंच ॥ आ
दित्यश्चद्यौश्चचंद्रमाः ॥ अग्निर्न्यवर्त्तयत ॥ ससांहलमपुष्यत् ॥ १ ॥ पृथिवीन्यवर्त्तयत ॥ सौषधी
भिर्वनस्पतिभिरपुष्यत् ॥ वायुर्न्यवर्त्तयत ॥ समरीचीभिरपुष्यत् ॥ अंतरिक्षंन्यवर्त्तयत ॥ तद्वयोभिरपु
ष्यत् ॥ आदित्योन्यवर्त्तयत ॥ सरश्मिभिरपुष्यत् ॥ द्यौर्न्यवर्त्तयत ॥ सानक्षत्रैरपुष्यत् ॥ चंद्रमान्य

वर्त्तयत ॥ सोऽहोरात्रैरर्द्धमासैर्मासैर्ऋतुभिः संवत्सरेणापुष्यत् ॥ तान्पोषान्पुष्यति ॥ याꣳस्तेपुष्यन् ॥
यएवंविद्वान्निर्चवर्त्तयंतेपरिच ॥ ३ ॥ अपुष्यन्नक्षत्रैरपुष्यत्पंचंच ॥ ३ ॥ ॥ तस्यवाअग्नेर्हिरण्यंप्रति
जग्रहुर्षः ॥ अर्द्धमिंद्रियस्यापाक्रामत् ॥ तदेतेनैवप्रत्यगृह्णात् ॥ तेनवैसार्द्धमिंद्रियस्यात्मन्नुपाधत्त ॥
अर्धमिंद्रियस्यात्मन्नुपाधत्ते ॥ यएवंविद्वान्हिरण्यंप्रतिगृह्णाति ॥ अथयोविद्वान्प्रतिगृह्णाति ॥ अर्द्धमस्यें
द्रियस्यापक्रामति ॥ तस्यवैसोमस्यवासः प्रतिजग्रहुर्षः ॥ तृतीयमिंद्रियस्यापाक्रामत् ॥ १ ॥ तदेतेनै
वप्रत्यगृह्णात् ॥ तेनवैसतृतीयमिंद्रियस्यात्मन्नुपाधत्त ॥ तृतीयमिंद्रियस्यात्मन्नुपाधत्ते ॥ यएवंविद्वान्वा
सः प्रतिगृह्णाति ॥ अथयोविद्वान्प्रतिगृह्णाति ॥ तृतीयमस्येंद्रियस्यापक्रामति ॥ तस्यवैरुद्रस्यगांप्रतिज
ग्रहुर्षः ॥ चतुर्थमिंद्रियस्यापाक्रामत् ॥ तामेतेनैवप्रत्यगृह्णात् ॥ तेनवैसचतुर्थमिंद्रियस्यात्मन्नुपाध
त्त ॥ २ ॥ चतुर्थमिंद्रियस्यात्मन्नुपाधत्ते ॥ यएवंविद्वान्गांप्रतिगृह्णाति ॥ अथयोविद्वाप्रतिगृह्णाति ॥
चतुर्थमस्येंद्रियस्यापक्रामति ॥ तस्यवैवरुणस्याश्वंप्रतिजग्रहुर्षः ॥ पंचममिंद्रियस्यापाक्रामत् ॥ तमेतेनै
वप्रत्यगृह्णात् ॥ तेनवैसपंचममिंद्रियस्यात्मन्नुपाधत्त ॥ पंचममिंद्रियस्यात्मन्नुपाधत्ते ॥ यएवंविद्वान

श्वंप्रतिगृह्णाति ॥ ३ ॥ अथयोविद्वान्प्रतिगृह्णाति ॥ पंचममस्याद्रियस्यापक्रामति ॥ तस्यवैप्रजापतेः
पुरुषंप्रतिजग्रहुषः ॥ षष्ठमिंद्रियस्यापाक्रामत् ॥ तमेतेनैवप्रत्यगृह्णात् ॥ तेनवैसषष्ठमिंद्रियस्यात्मन्नुपा
धत्त ॥ षष्ठमिंद्रियस्यात्मन्नुपाधत्ते ॥ यएवंविद्वान्पुरुषंप्रतिगृह्णाति ॥ अथयोविद्वान्प्रतिगृह्णाति ॥ ष
ष्ठमस्येंद्रियस्यापक्रामति ॥ ४ ॥ तस्यवैमनोस्तल्पंप्रतिजग्रहुषः ॥ सप्तमामिंद्रियस्यापाक्रामत् ॥ त
मेतेनैवप्रत्यगृह्णात् ॥ तेनवैससप्तमामिंद्रियस्यात्मन्नुपाधत्त ॥ सप्तममिंद्रियस्यात्मन्नुपाधत्ते ॥ यएवं
विद्वाꣳस्तल्पंप्रतिगृह्णाति ॥ अथयोविद्वान्प्रतिगृह्णाति ॥ सप्तममस्येंद्रियस्यापक्रामति ॥ तस्यवाउत्ता
नस्यांगीरसस्याप्राणत्प्रतिजग्रहुषः ॥ अष्टमामिंद्रियस्यापाक्रामत् ॥ ५ ॥ तदेतेनैवप्रत्यगृह्णात् ॥ तेन
वैसोष्टममिंद्रियस्यात्मन्नुपाधत्त ॥ अष्टममिंद्रियस्यात्मन्नुपाधत्ते ॥ यएवंविद्वानप्राणत्प्रतिगृह्णाति ॥ अ
थयोविद्वान्प्रतिगृह्णाति ॥ अष्टममस्येंद्रियस्यापक्रामति ॥ यद्वाइदंकिंच ॥ तत्सर्वमुत्तानएवांगीरसः
प्रत्यगृह्णात् ॥ तदेनंप्रतिगृहीतंनाहिनत् ॥ यत्किंचप्रतिगृह्णीयात् ॥ तत्सर्वमुत्तानस्त्वांगीरसःप्रतिगृ
ह्णात्वित्येवप्रतिगृह्णीयात् ॥ इयंवाउत्तानआंगीरसः ॥ अनयैवैनत्प्रतिगृह्णाति ॥ नैनꣳहिनस्ति ॥

॥ ६ ॥ तृतीयमिंद्रियस्यापाक्रामच्चतुर्थमिंद्रियस्यात्मन्नुपाधत्ताश्वंप्रतिगृह्णातिषष्ठमंस्येंद्रियस्यापक्रामत्यष्ट
ममिंद्रियस्यापाक्रामत्प्रतिगृह्णोयाच्चत्वारिंच ॥ ४ ॥ ॥ तस्यवाअग्नेर्हिरण्यꣳसोमस्यवासस्तदेतेनरुद्र
स्यगांतामेतेनवरुणस्याश्वंप्रजापतेःपुरुषंमनोस्तल्पंतमेतेनोत्तानस्यतदेतेनाप्राणद्यद्वै ॥ अर्द्धंतृतीयमष्ट
मंतच्चतुर्थतांपंचमꣳषष्ठꣳसप्तमंतं ॥ हिरण्यंवासोगामश्वंपुरुषꣳस्तल्पमप्राणत्सप्त ॥ ॥ ब्रह्मवादिनो
वदंति ॥ यद्दशहोतारःसत्रमासंत ॥ केनतेगृहपतिनाध्र्नुवन् ॥ केनप्रजाअसृजंतेति ॥ प्रजापति
नावैतेगृहपतिनाध्र्नुवन् ॥ तेनप्रजाअसृजंत ॥ यच्चतुर्होतारःसत्रमासंत ॥ केनतेगृहपतिनाध्र्नुवन् ॥ के
नोषधीरसृजंतेति ॥ सोमेनवैतेगृहपतिनाध्र्नुवन् ॥ १ ॥ तेनौषधीरसृजंत ॥ यत्पंचहोतारःसत्रमासं
त ॥ केनतेगृहपतिनाध्र्नुवन् ॥ केनैभ्योलोकेभ्योसुरान्प्राणुदंत ॥ केनैषांपशूनवृंजतेति ॥ अग्निनावै
तेगृहपतिनाध्र्नुवन् ॥ तेनैभ्योलोकेभ्योसुरान्प्राणुदंत ॥ तेनैषांपशूनवृंजतेति ॥ यत्षड्ढोतारःसत्रमासंत ॥
केनतेगृहपतिनाध्र्नुवन् ॥ २ ॥ केनर्तूनकल्पयंतेति ॥ धात्रावैतेगृहपतिनाध्र्नुवन् ॥ तेनर्तूनकल्पयंत ॥
यत्सप्तहोतारःसत्रमासंत ॥ केनतेगृहपतिनाध्र्नुवन् ॥ केनसुवरायन् ॥ केनेमान्लोकान्त्समतन्वन्निति

तिं ॥ अर्यम्णावैतेगृहपतिनार्ध्नुवन् ॥ तेनसुवरायन् ॥ तेनेमाꣳल्लोकान्त्समतन्वान्निति॥ ३ ॥ एतेवै
देवागृहपतयः ॥ तान्यएवंविद्वान् ॥ अप्यन्यस्यंगार्हपतेदीक्षते ॥ अवांतरमेवसत्रिणांमृध्नोति ॥
योवाअर्यमणवेद ॥ दानंकामाअस्मैप्रजाभवंति ॥ यज्ञोवाअर्यमा ॥ आर्यावसतिरितिवैतमाहुर्यप्र
शꣳसंति ॥ आर्यावसतिर्भवति ॥ यएवंवेद ॥ ४ ॥ यद्वाइदंकिंच ॥ तत्सर्वंचतुर्होतारः ॥ चतुर्हो
तृभ्योधियज्ञोनिर्मितः ॥ सयएवंविद्वान्विवदेत ॥ अहमेवभूयोवेद ॥ यश्चतुर्होतृन्वेदेति ॥ सह्येवभू
योवेद ॥ यश्चतुर्होतृन्वेद ॥ योवैचतुर्होतृणाꣳहोतृन्वेद ॥ सर्वासुप्रजास्वन्नमत्ति ॥ ५ ॥ सर्वादि
शोभिजयति ॥ प्रजापतिर्वैदशहोतृणाꣳहोता ॥ सोमश्चतुर्होतृणाꣳहोता ॥ अग्निःपंचहोतृणाꣳहोता
॥ धाताषड्ढोतृणाꣳहोता ॥ अर्यमासप्तहोतृणाꣳहोता ॥ एतेवैचतुर्होतृणाꣳहोतारः ॥ तान्यएवंवे
द ॥ सर्वासुप्रजास्वन्नमत्ति ॥ सर्वादिशोभिजयति ॥ ६ ॥ आर्ध्नुवन्नार्ध्नुवन्नित्येवंवेदात्तिसर्वादिशोभि
जयति ॥ ५ ॥ ॥ वैतसत्रकं ॥ ॥ प्रजापतिःप्रजासृष्ट्वाव्यस्रꣳसत ॥ सहृदयंभूतोशयत् ॥ आ
त्मन्हा ३ इत्यह्वयत् ॥ आपःप्रत्यशृण्वन्॥ ताअग्निहोत्रेणैवयज्ञक्रतुनोपपर्यावर्तत ॥ ताःकुसिंधमुपौहन्
॥ तस्मादग्निहोत्रस्यंयज्ञक्रतोः ॥ एकऋत्विक् ॥ चतुष्कृत्वोह्वयत् ॥ अग्निर्वायुरादित्यश्चंद्रमाः ॥ १ ॥

तेप्रत्यंशृण्वन् ॥ तेदर्शपूर्णमासाभ्यांमेवयज्ञक्रतुनोपंपर्यावर्त्तत ॥ तउपैांह ऽ श्चत्वार्यंगानि ॥ तस्मांद्द
र्शपूर्णमासयोर्यज्ञक्रतोः ॥ चत्वारंकृत्विजः ॥ पंचकृत्वोह्वंयत् ॥ पशव प्रत्यशृण्वन् ॥ तेचांतुर्मास्यैरेवयं
ज्ञक्रतुनोपंपर्यावर्त्तत ॥ तउपैांहन्लोमंच्छवींमा ऽ समास्थिमज्जानं ॥ तस्मांच्चातुर्मास्यानांयज्ञक्रतोः ॥ २
पंचर्त्विजः ॥ षट्कृत्वोह्वंयत् ॥ ऋतवः प्रत्यंशृण्वन् ॥ तेपंशुबंधेनैवयज्ञक्रतुनोपंपर्यावर्तत ॥ तउपैां
हन्स्तनांवांडौशिश्नमवांचंप्राणं ॥ तस्मांत्पशुबंधस्यंयज्ञक्रतोः ॥ षड्डत्विजः ॥ सप्तकृत्वोह्वंयत् ॥
होत्राःप्रत्यंशृण्वन् ॥ ताःसौम्येनैवाध्वरेणंयज्ञक्रतुनोपंपर्यावर्त्तत ॥ ३ ॥ ताउपैांहन्त्सप्तशीर्षण्यांन्प्रा
णान् ॥ तस्मांत्सौम्यस्यांध्वरस्यंयज्ञक्रतोः ॥ सप्तहोत्राःप्राचींर्वषट्कुर्वंति ॥ दशकृत्वोह्वंयत् ॥ त
पःप्रत्यंशृणोत् ॥ तत्कर्मणैवसंवत्सरेणसर्वैर्यज्ञक्रतुभिरुपंपर्यावर्त्तत ॥ तत्सर्वमात्मानमपंरिवर्गमुपैांहत् ॥
तस्मांत्संवत्सरेसर्वेयज्ञक्रतवोवंरुध्यंते ॥ तस्मादशंहोताचतुर्होता ॥ पंचंहोताषड्ढोंतासप्तहोता ॥ ए
कंहोत्रेबलिऽहंरंति ॥ हरंत्यस्मैप्रजावलिं ॥ ऐनमप्रंतिख्यातंगच्छाति ॥ यएवंवेद ॥ ४ ॥ चंद्रमां
श्चातुर्मास्यानांयज्ञक्रतोरध्वरेणयज्ञक्रतुनोपंपर्यावर्ततसप्तहोताचत्वारिंच ॥ ६ ॥ प्रजापतिःपुरुषमसृजत
॥ सोग्निरंब्रवीत् ॥ ममायमन्नमस्त्विति ॥ सोबिभेत् ॥ सर्वंवैमायंप्रधक्ष्यतीति ॥ सएताऽश्चतुर्होतृना
त्मस्मरणानपश्यत् ॥ तानंजुहोत् ॥ तैर्वैसआत्मानमस्पृणोत् ॥ यदंग्निहोत्रंजुहोति ॥ एकंहोतारमेवतच्चं

ज्ञक्रतुमाप्नोत्यग्निहोत्रं ॥१ कुसिंधंचात्मनं स्पृणोति । आदित्यस्यंचसायुज्यंगच्छति ॥ चतुरुन्नयति ॥ चतुर्हो
तारमेवतद्यंज्ञक्रतुमाप्नोतिदर्शपूर्णमासौ ॥ चत्वारिंचात्मनेंगानिस्पृणोति ॥ आदित्यस्यंचसायुज्यंगच्छति ॥
चतुरुन्नयति ॥ समित्पंचमी ॥ पंचहोतारमेवतद्यंज्ञक्रतुमाप्नोतिचातुर्मास्यानि ॥ लोमंच्छवींमा॑ ँ समास्थिमज्जा
नं ॥ २ ॥ तानिंचात्मनंःस्पृणोति ॥ आदित्यस्यंचसायुज्यंगच्छति ॥ चतुरुन्नयति द्विर्जुहोति ॥ षढ्ढों
तारमेवतद्यंज्ञक्रतुमाप्नोतिपशुबंधं ॥ स्तनांवांडौशिश्नमवांचंप्राणं ॥ तानिंचात्मनं स्पृणोति ॥ आदित्य
स्यंचसायुंज्यंगच्छति ॥ चतुरुन्नयति ॥ द्विर्जुहोति ॥ ३ ॥ समित्संप्तमी ॥ सप्तहोता मेवतद्यंज्ञक्रतुमाप्नोति
सौम्यमंध्वरं ॥ सप्तचात्मनंःशीर्षण्यान्प्राणान्त्स्पृणोति ॥ आदित्यस्यंचसायुज्यंगच्छति ॥ चतुरुन्नय
ति ॥ द्विर्जुहोति ॥ द्विर्निमार्ष्टि ॥ द्विःप्राश्नाति ॥ दशहोतारमेवतद्यंज्ञक्रतुमाप्नोतिसंवत्सरं ॥ सर्वंचा
त्मानमपरिवर्ग ँ स्पृणोति ॥ आदित्यस्यंचसायुज्यंगच्छति ॥ ४ ॥ अग्निहोत्रंमज्जानांद्विर्जुहोत्यपरिवर्ग
ँ स्पृणोत्येकंच ॥ ७ ॥ ॥ अपक्रामंतुगर्भिण्यः ॥ ॥ प्रजापतिरकामयतप्रजायेयेति ॥ सतपोतप्य
त ॥ सोंतर्वानभवत् ॥ सहरितःश्यावोंभवत् ॥ तस्मात्स्त्र्यंतर्वत्नी ॥ हरिंणीसतीश्यावाभंवति ॥ सवि
जायमानोगर्भेणाताम्यत् ॥ सतांतःकृष्णःश्यावोंभवत् ॥ तस्मात्तांतःकृष्णःश्यावोभंवति ॥ तस्यासुरेवाजी

वत् ॥ १ ॥ तेनासुनासुरानसृजत ॥ तदसुराणामसुरत्वं ॥ यएवमसुराणामसुरत्वंवेद ॥ असुमानेव
भवति ॥ नैनमसुर्जहाति ॥ सोसुरान्त्सृष्ट्वापितेवामन्यत ॥ तदनुपितृनसृजत ॥ तत्पितृणांपितृत्वं ॥
यएवंपितृणांपितृत्वंवेद ॥ पितेवैवस्वानांभवति ॥ २ ॥ यंत्यस्यपितरोहवं ॥ सपितृन्त्सृष्ट्वामनस्यत्
॥ तदनुमनुष्यांऽसृजत् ॥ तन्मनुष्याणांमनुष्यत्वं ॥ यएवंमनुष्याणांमनुष्यत्वंवेद ॥ मनस्व्येवभव
ति ॥ नैनंमनुर्जहाति ॥ तस्मैमनुष्यान्त्ससृजानाय ॥ दिवादेवत्राभवत् ॥ तदनुदेवानसृजत ॥ तद्देवा
नांदेवत्वं ॥ यएवंदेवानांदेवत्वंवेद ॥ दिवाहैवास्यदेवत्राभवति ॥ तानिवाएतानिचत्वार्यभांसि ॥
देवामनुष्याःपितरोसुराः ॥ तेषुसर्वेष्वंभोनभइवभवति ॥ यएवंवेद ॥ ३ ॥ अजीवत्स्वानांभवतिदे
वानसृजतसप्तच ॥ ४ ॥ यथास्थानंगर्भिण्यः ॥ ॥ ब्रह्मवादिनोवदंति ॥ योवाङ्मंविद्यात् ॥ य
तोयंपवते ॥ यदभिपवते ॥ यदभिसंपवते ॥ सर्वमायुरियात् ॥ नपुरायुषःप्रमीयेत ॥ पशुमा
न्त्स्यात् ॥ विंदेतंप्रजां ॥ योवाङ्मंवेद ॥ १ ॥ यतोयंपवते ॥ यदभिपवते ॥ यदभिसंपवते ॥ सर्व
मायुरेति ॥ नपुरायुषःप्रमीयते ॥ पशुमान्भवति ॥ विंदतेंप्रजां ॥ अद्भ्यःपवते ॥ अपोभिपवते ॥

अपोंभिसंपंवते ॥ २ ॥ अस्याःपंवते ॥ इमामभिपंवते ॥ इमामभिसंपंवते ॥ अग्नेःपंवते ॥ अग्निमभिपंवते ॥ अग्निमभिसंपंवते ॥ अंतरिक्षात्पवते ॥ अंतरिक्षमभिपंवते ॥ अंतरिक्षमभिसंपंवते ॥ आदित्यात्पंवते॥ ३ ॥आदित्यमभिपंवते ॥ आदित्यमभिसंपंवते ॥ द्योःपंवते ॥ दिवमभिपवते॥दिवमभिसंपंवते॥दिग्भ्यःपंवते॥दिशोभिपंवते॥दिशोभिसंपंवते॥ सयत्पुरस्ताद्वाति॥प्राणएवभूत्वापुरस्ताद्वाति ॥ ४ ॥ तस्मात्पुरस्ताद्वांतं ॥ सर्वाःप्रजाःप्रतिनंदंति ॥ प्राणोहिप्रियःप्रजानां ॥ प्राणइवप्रियःप्रजानांभवति ॥ यएवंवेद ॥सवाएषप्राणएव ॥ अथयद्दक्षिणतोवाति ॥ मातरिश्वैवभूत्वादक्षिणतोवाति ॥ तस्माद्दक्षिणतोवांतंविद्यात् ॥ सर्वादिशआवाति ॥ ५ ॥ सर्वादिशोनुविवाति ॥ सर्वादिशोनुसंवातीति ॥ सवाएषमातरिश्वैव ॥ अथयत्पश्चाद्वाति ॥ पवमानएवभूत्वापश्चाद्वाति ॥ पूतमस्माआहरंति ॥ पूतमुपहरंति ॥ पूतमश्नाति ॥ यएवंवेद ॥ सवाएषपवमानएव ॥ ६ ॥ अथयदुत्तरतोवाति ॥ सवितैवभूत्वोत्तरतोवाति ॥ सवितेवस्वानांभवति ॥ यएववेद ॥ सवाएषसवितैव ॥ तेयएनंपुरस्तादायंतमुपवदंति ॥ यएवास्यपुरस्तात्पाप्मानः ॥ ताःस्तेपघ्नंति ॥ पुरस्तादितरात्पाप्मनःसचंते ॥ अथयएनंदक्षिणतआयंतमुपवदंति ॥ ७ ॥ यएवास्यदक्षिणतःपाप्मानः ॥ ताःस्तेपघ्नंति ॥

दक्षिणतइतंरान्पाप्मनंःसचंते ॥ अथयएंनंपश्चादायंतंमुपवदंति ॥ यएवास्यंपश्चात्पाप्मानंः ॥ ताꣳस्ते
पंघ्नंति ॥ पश्चादितंरान्पाप्मनंःसचंते ॥ अथयएंनमुत्तरतआयंतंमुपवदंति ॥ यएवास्योंत्तरतःपाप्मानंः
॥ ताꣳस्तेपंघ्नंति ॥ ८ ॥ उत्तरतइतंरान्पाप्मनंःसचंते ॥ तस्मादेवंविद्वान् ॥ वोवंनृत्येत् ॥ प्रेवंच
लेत् ॥ व्यस्येंवाक्ष्यौभाषेत ॥ मंटयेंदिव ॥ क्राथयेंदिव ॥ शृंगायेंतेव ॥ उतमोपंवदेयुः ॥ उतमेंपा
प्मानमपंहन्युरितिं ॥ सयांदिशꣳसनिमेष्यन्त्स्यात् ॥ यदातांदिशंवातोंवायात् ॥ अथप्रेयात् ॥ प्रवां
धावयेत् ॥ सातमेवरांदितंꣳस्वंढंगंधमभिप्रच्यंवते ॥ आस्यतंजंनपदंपूर्वाकीर्तिर्गंच्छति ॥ दानंकामाअ
स्मैप्रजाभंवंति ॥ यएवंवेदं ॥ ९ ॥ वेदसंपंवतआदित्यात्पंवतेवात्यावांत्येपपवंमानएवदंक्षिणतआयं
तंमुपवदंतियएवास्योंत्तरतःपाप्मानस्ताꣳस्तेपघ्नंतंत्यिष्टौचं ॥ ९ ॥ ॥ प्रजापंतिःसोमꣳराजांनमसृज
त ॥ तंत्रयोवेदाअन्वंसृज्यंत ॥ तान्हस्तेंकुरुत ॥ अथहसीतांसावित्री ॥ सोमꣳराजांनंचकमे ॥ श्र
द्धामुसचंकमे ॥ साहंपितरंप्रजापंतिमुपंससार ॥ तꣳहोंवाच ॥ नमंस्तेअस्तुभगवः ॥ उपंत्वायानि
॥ १ ॥ प्रत्वांपद्ये ॥ सोमंवैराजांनंकामये ॥ श्रद्धामुसकांमयतइतिं ॥ तस्यांउहस्थांगरमंलंकारंकल्प
यित्वा ॥ दशंहोतारंपुरस्तांद्व्याख्याय ॥ चतुंर्होतारंदक्षिणतः ॥ पंचंहोतारंपश्चात् ॥ षड्ढोंतारमुत्तर

तः ।। सप्तहोतारमुपरिष्टात् ॥ संभारैश्चपत्निभिश्चमुखेलंकृत्य ।। २ ॥ आस्यार्धेवव्राज ॥ ताँऽहो
दीक्षयोवाच ॥ उपमावर्त्तस्वेति ।। तँऽहोवाच ॥ भोगंतुमआचक्ष्व ।। एतन्मआचक्ष्व ।। यत्तेपाणा
विति ॥ तस्याउहत्रोन्वेदान्प्रददौ ॥ तस्मादुहस्त्रियोभोगमेवहारयंते ॥ सयःकामयेतप्रियःस्यामिति ।।
॥ ३ ॥ यंवाकामयेतप्रियःस्यादिति ॥ तस्माएतँस्थागरमलंकारंकल्पयित्वा ॥ दशहोतारंपुरस्ता
द्व्याख्याय ॥ चतुर्होतारंदक्षिणतः ॥ पंचहोतारंपश्चात् ॥ षड्ढोतारमुत्तरतः ।। सप्तहोतारमुपरिष्टात् ॥
संभारैश्चपत्निभिश्चमुखेलंकृत्य ।। आस्यार्धेवंजत् ॥ प्रियोहैवभवति ॥ ४ ॥ अयान्यलंकृत्यस्यामि
तिभवति ॥ १० ॥ ।। ब्रह्मात्मन्वदसृजत ॥ तदकामयत ।। समात्मनापद्येयेति ।। आत्मन्नात्म
न्नित्यामंत्रयत ।। तस्मैदशमँहूतःप्रत्यशृणोत् ॥ सदशहूतोभवत्।।दशहूतोहवैनामैषः ॥ तंवाएतंदशहू
तँसंतं ।।दशहोतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइवहिदेवाः ।। १ ।। आत्मन्नात्मन्नित्यामंत्रयत ॥ त
स्मैसप्तमँहूतःप्रत्यशृणोत् ॥ ससप्तहूतोभवत् ॥ सप्तहूतोहवैनामैषः ॥ तंवाएतँसप्तहूतँसंतं ॥
सप्तहोतेत्याचक्षतेपरोक्षेण ।। परोक्षप्रियाइवहिदेवाः ॥ आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मैषष्ठँहूतः
प्रत्यशृणोत् ।। सषड्ढूतोभवत् ॥ २ ॥ षड्ढूतोहवैनामैषः ॥ तंवाएतँषड्ढूतँसंतं ।। षड्ढोतेत्याचक्षतेपरो

क्षेण ॥ परोक्षप्रियाइवहिदेवाः ॥ आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मैपंचमꣳहूतःप्रत्यंशृणोत् ॥ स
पंचहूतोभवत् ॥ पंचहूतोहवैनामैषः ॥ तंवाएतंपंचतुर्हूतꣳसंतं ॥ पंचहोतेत्याचक्षतेपरोक्षेण ॥
॥ ३ ॥ परोक्षंप्रियाइवहिदेवाः ॥ आत्मन्नात्मन्नित्यामंत्रयत ॥ तस्मैचतुर्थꣳहूतःप्रत्यंशृणोत् ॥ सचतुर्हू
तोभवत् ॥ चतुर्हूतोहवैनामैषः ॥ तंवाएतंचतुर्हूतꣳसंतं ॥ चतुर्होतेत्याचक्षतेपरोक्षेण ॥ परोक्षप्रियाइ
वहिदेवाः ॥ तमब्रवीत् ॥ त्वंवैमेनेदिष्ठꣳहूतःप्रत्यंश्रौषीः ॥ त्वयैनानाख्यातारइति ॥ तस्मान्नुहैनाꣳ
श्चतुर्होतारइत्याचक्षते ॥ तस्माच्छुश्रूषुःपुत्राणाꣳहृद्यतमः ॥ नेदिष्ठोहृद्यतमः ॥ नेदिष्ठोब्रह्मणो
भवति ॥ यएवंवेद ॥ ४ ॥ देवाःषड्ढूतोभवत्पंचहोतेत्याचक्षनेपरोक्षेणाश्रौषीःषट् ॥ १ ॥ ॥ ब्र
ह्मवादिनःकिंदक्षिणांयोवाअविद्वान्तस्यवैब्रह्मवादिनोयद्दशंहोतारःप्रजापतिर्व्यस्तंप्रजापतिःपुरुषंप्रजापति
रकामयतप्रजायेयेतिसतपःसौंतवान्ब्रह्मवादिनोयोवाइमंविद्यात्प्रजापतिःसोमꣳराजानंब्रह्मात्मन्वदेकांद
श ॥ ११ ॥ ॥ ब्रह्मवादिनस्तस्यवाअग्नेयेंद्वाइदंकिंचप्रजापतिरकामयतयएत्रास्यदक्षिणतःपंचा
शत् ॥ ५० ॥ ॥ हरिःॐम् ॥ ॥ जुष्टोदमूनाअतिथिर्दुरोणे ॥ इमन्नोयज्ञमुपयाहिविद्वा
न् ॥ विश्वाअग्नेभियुजोविहत्यं ॥ शत्रूयतामाभराभोजनानि ॥ अग्नेशर्द्धमहतेसौभगाय ॥ तवद्युम्ना

न्युत्तमानिसंतु ॥ संजास्पत्यꣳसुयममाकृणुष्व ॥ शत्रूयतामभितिष्ठामहाꣳसि ॥ अग्नेयोनोभितोज नः ॥ वृकोवारोजिघाꣳसति ॥१॥ ताꣳस्त्वंवृत्रहन्जाहि ॥ वस्वस्मभ्यमाभर ॥ अग्नेयोनोभिदासति ॥ ॥ समानोयश्चनिष्ट्यः ॥ इध्मस्येवप्रक्षायतः ॥ मातस्योच्छेषिकिंचन ॥ त्वमिंद्राभिभूरसि ॥ देवोवि ज्ञातवीर्यः ॥ वृत्रहापुरुचेतनः ॥ अपप्राचइंद्रविश्वाꣳअमित्रान् ॥ २ ॥ अपापाचोअभिभूतेनुदस्व ॥ अपोदीचोअपशूराधराचउरौ ॥ यथातवशर्मन्मदेम ॥ तमिंद्रंवाजयामसि ॥ महेवृत्रायहंतवे ॥ सवृषावृषभोभुवत् ॥ युजेरथंगवेषणꣳहरिभ्यां ॥ उपब्रह्माणिजुजुषाणमस्थुः ॥ विबाधिष्टास्यरोदसीम हित्वा ॥ इंद्रोवृत्राण्यप्रतीजघन्वान् ॥ ३ ॥ हव्यवाहमभिमातिषाहं ॥ रक्षोहणंपृतनासुजिष्णुं ॥ ज्योतिष्मंतंदीद्यतंपुरंधिं ॥ अग्निꣳस्विष्टकृतमाहुवेम ॥ स्विष्टमग्नेअभितत्पृणाहि ॥ विश्वादेवपृतनाअभि ष्य ॥ उरुंनःपंथांप्रदिशन्विभाहि ॥ ज्योतिष्मद्धेह्यजरंनआयुः ॥ त्वामग्नेहविष्मंतः ॥ देवंमर्तासई डते ॥ ४ ॥ मन्येत्वाजातवेदसं ॥ सहव्यावक्ष्यानुषक् ॥ विश्वानिनोदुर्गहाजातवेदः ॥ सिंधुंननावा दुरितातिपर्षि ॥ अग्नेअत्रिवन्मनसागृणानः ॥ अस्माकंबोध्यविताततूनां ॥ पूषागाअन्वेतुनः ॥ पू षारक्षत्वर्वतः ॥ पूषावाजꣳसनोतुनः ॥ पूषेमाआशाअनुवेदसर्वाः ॥ ५ ॥ सोअस्माꣳअभयतमेनने

षत् ॥ स्वस्तिदाअघृणिःसर्ववीरः ॥ अप्रयुच्छन्पुरएंतुप्रजानन् ॥ त्वमंग्नेसप्रथांअसि ॥ जुष्टोहोतावरेण्यः ॥ त्वयांयज्ञंवितंन्वते ॥ अग्नेरक्षांꣳसिसेधति ॥ शुक्रशोचिरमर्त्यः ॥ शुचिःपावकईड्यः ॥
अग्नेरक्षाणोअꣳहंसः ॥ प्रतिष्मदेवरीषंतः ॥ तपिंष्ठैरजरोंदह ॥ अग्नेहꣳसिन्यंत्रिणं ॥ दीद्यन्मर्त्येष्वा ॥
स्वेक्षयेशुचिव्रत ॥ आवांतवाहिभेषजं ॥ विवांतवाहियद्रपः ॥ त्वꣳहिविश्वभेषजः ॥ देवानांदूतईयसे ॥ द्वाविमौवातौवातः ॥ ७ ॥ आसिंधोरापरावतः ॥ दक्षंमेअन्यआवातु ॥ परान्योवांतुयद्रपः ॥ यददोवांततेगृहे ॥ अमृतंस्यनिधिर्हितः ॥ ततोंनोदेहिजीवसे ॥ ततोंनोधेहिभेषजं ॥ ततोंनोमहआवह ॥ वातआवांतुभेषजं ॥ शंभूर्मयोभूनोंहृदे ॥ ८ ॥ प्रणआयूꣳषितारिषत् ॥ त्वमंग्नेअयासिं ॥ अयासन्मनंसाहितः ॥ अयासन्हव्यमूंहिषे ॥ अयानोंधेहिभेषजं ॥ इष्टोअग्निराहुतः ॥ स्वाहांकृतःपिपर्त्तुनः ॥ स्वगादेवेभ्यइदंनमः ॥ कामोंभूतस्यभव्यंस्य ॥ सम्राडेकोविरांजति ॥ ९ ॥ सइदंप्रतिपप्रथे ॥ ऋतूनुत्सृंजतेवशी ॥ कामस्तदग्रेसमंवर्त्तताधिं ॥ मनसोरेतःप्रथमंयदासीत् ॥ सतोबंधुमसंतिनिरंविंदन् ॥ हृदिप्रतोष्यांकवयोमनीषा ॥ त्वयांमन्योसरथंमारुजंतः ॥ हर्षमाणासोधृषतामरुत्वः ॥ तिग्मेषंवआयुधासꣳशिशांनाः ॥ उपप्रयंतिनरोअग्निरूंपाः ॥ १० ॥ मन्युर्भगोमन्युरेवासंदे

वः ॥ मन्युर्होतावरुणोविश्ववेदाः ॥ मन्युंविशंईडतेदेवयंतीः ॥ पाहिनोमन्योतपसाश्रमेण ॥ त्वमंग्ने व्रतभृच्छुचिः ॥ देवाꣳआसादयाइह ॥ अग्नेहव्यायवोढवे ॥ व्रतानुबिभ्रंद्व्रतपाअदांभ्यः ॥ यजानो देवाꣳअजरःसुवीरः ॥ दधद्रत्नानिसुविदानोअंग्ने ॥ गोपायनोजीवसेजातवेदः ॥ १३ ॥ जिघांꣳ सत्यमित्रांन्जघन्वानोडतेसर्वाꣳअꣳहंसोवातोहृदेराजत्यग्निरूपाःसुविदानोअंग्नएकंच ॥ ३ ॥ ॥ चक्षुषोहेतेमनसोहेते ॥ वाचोहेतेब्रह्मणोहेते ॥ योमाघायुरभिदासति ॥ तमंग्नेमेन्यामेनिंकृणु ॥ योमाचक्षुषायोमनसा ॥ योवाचाब्रह्मणाघायुरभिदासति ॥ तयांग्नेत्वंमेन्या ॥ अमुममेनिंकृणु ॥ यत्किंचासौ मनसायच्चवाचा ॥ यज्ञैर्जुहोतियजुषाहविर्भिः ॥ १ ॥ तन्मृत्युर्निरृत्यासंविदानः ॥ पुरादिष्टादाहुतीरस्यहंतु ॥ यातुधानानिर्ऋतिरादुरक्षः ॥ तेअस्यघ्नंत्वनृतेनसत्यं ॥ इंद्रेषिताआज्यमस्यमथ्नंतु ॥ मातत्समृद्धियदसौकरोति ॥ हन्मितेहंकृतꣳहविः ॥ योमेघोरमचीकृतः ॥ अपांचौतउभौबाहू ॥ अपनह्याम्यास्यं ॥ २ ॥ अपनह्यामितबाहू ॥ अपनह्याम्यास्यं ॥ अग्नेर्देवस्यब्रह्मणा ॥ सर्वंतेवधिषंकृतं ॥ पुरामुष्यंवषट्कारात् ॥ यज्ञंदेवेषुनस्कृधि ॥ स्विंष्टमस्माकंभूयात् ॥ मास्मान्प्रापन्नरातयः ॥ अंतिदूरेसतोअंग्ने ॥ भ्रातृव्यस्याभिदासतः ॥ ३ ॥ वषट्कारेणवज्रेण ॥ कृत्याꣳहन्मिकृतामहं ॥ योमानक्तंदिवा

सायं ॥ प्रातश्चान्होनिपीयंति ।। अद्यातामिंद्रवज्रेण ॥ आतृंव्यंपादयामसि ॥ इंद्रस्यगृहोसितंत्वा ॥ प्र
पद्येसगुःसाश्वः ॥ सहयन्मेअस्तितेनं ॥ ईडेअग्निंविपाश्चितं ॥ ४ ।। गिरायज्ञस्यसाधनं ॥ श्रुष्टीवा
नंधितावानं ॥ अग्नेशकेमतेवयं ॥ यमंदेवस्यवाजिनः ॥ अतिद्वेषांश्सितरेम ॥ अवंतमासमनसौस
मोकसौ ॥ सचेतसौसरेतसौ ।। उभौमामंवतंजातवेदसौ ॥ शिवौभवतमद्यनः ॥ स्वयंकृण्वानः
सुगमप्रयावं॥५।।तिग्मशृंगोवृषभ शोशुचानः ॥ प्रत्न्श्सधस्थमनुपश्यमानः ॥ आतंतुमग्निर्दिव्यंततान
॥ त्वंनस्तंतुरुतसेतुरग्ने ।। त्वंपंथाभवासिदेवयानः ॥ त्वयाग्नेपृष्ठंवयमारुहेम ॥ अथादेवैःसधमादमदे
म ॥ उदुत्तमंमुमुग्धिनः ॥ विपाशंमध्यमंचृत ॥ अवाधमानिजीवसे ॥ ६ ॥ वयश्सोमव्रतेतव ॥
मनस्तनूषुविभ्रतः ॥ प्रजावंतोअशीमहि ॥ इंद्राणीदेवीसुभगासुपत्नी ॥ उदश्शेनपातिविद्येजिगा
य ॥ त्रिश्शदस्याजघनंयोजनानि ॥ उपस्थइंद्र्श्स्थविरंबिभर्त्ति ॥ सेनांह्नामंपृथिवीधनंजया ।।
विश्वव्यंचाअदितिःसूर्यत्वक् ।। इंद्राणीदेवीप्रासहाददाना ॥ ७ ॥ सानोदेवीसुहवाशर्मयच्छतु ॥
आत्वाहार्षमंतरभूः ।। ध्रुवस्तिष्ठाविचाचालिः ॥ विशस्त्वासर्वावांच्छंतु ॥ मात्वद्राष्ट्रमधिभ्रशत् ॥ ध्रु
वाद्यौर्ध्रुवापृथिवी ॥ ध्रुवंविश्वमिदंजगत् ॥ ध्रुवाह्पर्वताइमे ॥ ध्रुवोराजाविशामयं ॥ इहैवैधिमा

व्यंथिष्ठाः ॥८॥ पर्वंतइवाविंचाचलिः ॥ इंद्रंइवेहध्रुवास्तिंष्ठ ॥ इहराष्ट्रमुंधारय ॥ अभितिंष्टपृतन्यतः॥
अधंरेसंतुशत्रंवः ॥ इंद्रंइववृत्रहातिंष्ठ ॥ अपःक्षेत्रांणिसंजयंन् ॥ इंद्रंएणमदीधरत् ॥ ध्रुवंध्रुवेणंहवि
षां ॥ तस्मैंदेवाअधिंब्रवन् ॥ अयंचब्रह्मंणस्पतिंः ॥ १ ॥ हविर्भिंरास्यंमाभिदासंतोविपश्चितमप्रंयावं
जीवसेददंनाव्यथिष्ठाब्रवन्नेकंच ॥ २ ॥ ॥ जुष्टींनरोब्रह्मंणावःपितृणां ॥ अक्षंमव्ययन्नकिलांरिषाथ ॥
यच्छक्वंरीषुबृहतारवेंण ॥ इंद्रेशुष्ममदंधाथावसिष्ठाः ॥ पावकानःसरंस्वती ॥ वाजेंभिर्वाजिनींवती ॥
यज्ञंवंष्टुधियावंसुः ॥ सरंस्वत्यभिनोंनेषिवस्यंः ॥ मापंस्फरीःपयंसामानआधंक् ॥ जुषस्वंनःसख्यांवे
श्यांच ॥ १ ॥ मात्वत्क्षेत्राण्यरंणानिगन्म ॥ वृंजेहविर्नमंसाबर्हिरग्नौ ॥ अयांमिस्रुग्घृतवंतीसुवृक्तिः ॥
अम्यंक्षिसद्मसदंनेपृथिव्याः ॥ अश्रांयियज्ञःसूर्येनचक्षुंः ॥ इहार्वाचमतिंह्वये ॥ इंद्रंजैत्रांयजेतंवे ॥ अ
स्माकंमस्तुकेवंलः ॥ अर्वांचमिंद्रममुतोंहवामहे ॥ योगोजिद्धंनजिदंश्वजिद्यः ॥ २ ॥ इमंनोंयज्ञं
विंहवेजुंषस्व ॥ अस्यकुंर्मोहरिवोमेदिनंत्वा ॥ असंमृष्टोजायसेमातृवोःशुचिंः ॥ मंद्रःकविरुदं
तिष्ठोविवंस्वतः ॥ घृतेनंत्वावर्द्धयंनग्नआहुत ॥ धूमस्तेंकेतुरंभवद्दिविश्रितः ॥ अग्निरग्रेंप्रथमोदेवतांनां
॥ संयांतानामुत्तमोविष्णुंरासीत् ॥ यजंमानायपरिगृह्यंदेवान् ॥ दीक्षयेदंहविरागंच्छतंनः ॥ ३ ॥ अ

ग्निश्चंविष्णोतपंउत्तमंमहः ॥ दीक्षापालेभ्योवनंतꣳहिशंका ॥ विश्वैर्देवैर्यज्ञियैःसंविदानौ ॥ दीक्षाम
स्मैयजमानायधत्तं ॥ प्रतद्विष्णुंस्तवतेवीर्याय ॥मृगोनभीम.कुचरोगिरिष्ठाः ॥ यस्योरुषुत्रिषुविक्रमणेषु ॥
अधिक्षियंतिभुवनानिविश्वा ॥ नूमर्त्तोदयतेसनिष्यन्यः ॥ विष्णवउरुगायायदाशत् ॥४॥ प्रयःसत्राचा
मनसायजाते ॥ एतावंतंनर्यमाविवासात् ॥ विचक्रमेपृथिवीमेषएतां ॥क्षेत्रायविष्णुर्मनुषेदशस्यन् ॥ ध्रुवासो
अस्यकीरयोजनासः ॥ उरुक्षितिꣳसुजनिमाचकार॥त्रिर्देवःपृथिवीमेषएतां ॥ विचक्रमेशतर्चसंमहित्वा॥
प्रविष्णुरस्तुतवसस्तवीयान् ॥ त्वेषꣳह्यस्यस्थविरस्यनाम ॥५॥ होतारंचित्ररथमध्वरस्य ॥ यज्ञस्ययज्ञस्य
केतुꣳरुशंतं ॥ प्रत्यर्द्धिंदेवस्यदेवस्यमह्ना ॥ श्रियात्वाग्निमतिथिंजनानां ॥ आनोविश्वाभिरूतिभिःसजो
षाः॥ ब्रह्मजुषाणोहर्यश्वयाहि ॥ वरीवृजत्स्थविरेभिःसुशिप्र ॥ अस्मेदधद्वृषणꣳशुष्ममिंद्र ॥ इंद्रःसुवर्षा
जनयन्नहानि ॥ जिगायोशिग्भिःपृतनाअभिश्रीः ॥ ६ ॥ प्रारोचयन्मनवेकेतुमह्ना ॥ अविंदज्ज्यो
तिर्वृहतेरणाय ॥ अश्विनाववसेनिह्वयेवां ॥ आनूनंयातꣳसुकृतायविप्रा ॥ प्रातर्युक्तेनसुवृतारथेन ॥
उपागच्छतमवसागतंनः ॥ अविष्टंधीष्वश्विनानआसु ॥ प्रजावद्रेतोअह्रयंनोअस्तु ॥ आवांतोकेतनये
तूतुजानाः ॥ सुरत्नासोदेववीतिंगमेम ॥ ७ ॥ त्वꣳसोमक्रतुभिःसुक्रतुर्भूः ॥ त्वंदक्षैःसुदक्षोविश्ववे

दाः ॥ त्वंवृषावृषत्वेभिर्महित्वा ॥ द्युम्नेभिर्द्युम्न्यंभवोनृचक्षाः ॥ अषाढंयुत्सुपृतनासुपप्रिं ॥ सुवर्षामप्स्वां
वृजनंस्यगोपां ॥ भरेषुजाꣳसुक्षितिꣳसुश्रवसं ॥ जयंतंत्वामनुमदेमसोम ॥ भवामित्रोनशेव्योघृ
तासुतिः ॥ विभूतद्युम्नएवयाउसप्रथाः ॥ ८ ॥ अधातेविष्णोविदुषाचिदृध्यः ॥ स्तोमोयज्ञस्यराध्यो
हविष्मतः ॥ यःपूर्व्यायवेधसेनवीयसे ॥ सुमज्जानयेविष्णवेददाशति ॥ योजातमस्यमहतोमहिब्रवा
त् ॥ सेदुश्रवोभिर्युज्यंचिदभ्यसत् ॥ तमुस्तोतारःपूर्व्यंयथाविदऋतस्य ॥ गर्भꣳहविषापिपर्तन ॥
आस्यंजानंतोनामचिद्विवक्तन ॥ बृहत्तेविष्णोसुमतिंभजामहे ॥९॥ इमाधानाघृतस्नुवः ॥ हरीइहोप
वक्षतः ॥ इंद्रꣳसुखतमेरथे ॥ एषब्रह्माप्रतेमहे ॥ विदथेशꣳसिषꣳहरी ॥ यऋत्वियःप्रतेवन्वे ॥ वनु
षोहर्यतंमदं ॥ इंद्रोनामघृतंनयः ॥ हरिभिश्चारुसेचते ॥ श्रुतोगणआत्वाविशंतु ॥ १० ॥ हरिवर्प
संगिरः ॥ आचर्षणिप्रावृषभोजनानां ॥ राजाकृष्टीनांपुरुहूतइंद्रः ॥ स्तुतश्रवस्यन्नवसोपमद्रिक् ॥ यु
क्त्वाहरीवृषणायाह्यर्वाङ् ॥ प्रयत्सिंधवःप्रसवंयदायन् ॥ आपःसमुद्रꣳरथ्येवजग्मुः ॥ अतश्चिदिंद्रःस
दसोवरीयान् ॥ यदीꣳसोमःपृणतिदुग्धोअꣳशुः ॥ ह्वयामसित्वेंद्रयाह्यर्वाङ् ॥११॥ अरंतेसोमस्तनुवेभ

वाति ॥ शतंक्रतोमादयंस्वासुतेषुं ॥ प्रास्माꣳअंवपृतंनासुप्रयुत्सु ॥ इंद्रांयसोमाःप्रदिवोविदांनाः ॥ऋभुर्ये
भिर्वृषंपर्वाविहांयाः ॥ प्रयम्यमांणान्प्रतिषूगृंभाय ॥ इंद्रपिबवृषंधूतस्यवृष्णंः॥ अहेंडमानउपंयाहियज्ञं ॥
तुभ्यंपवंतइदंवःसुतासंः ॥ गावोनवंज्रिन्स्वमोकोअच्छं ॥ १२ ॥ इंद्रागंहिप्रथमोयज्ञियांनां ॥ यातें
काकुत्सुकृंतायावरिष्ठा ॥ ययाशश्वत्पिबंसिमध्वंऊर्मिं ॥ तयांपाहिप्रतेंअध्वर्युरंस्थात् ॥ संतेवज्रोंवर्त्तता
मिंद्रगव्युः ॥ प्रातर्युजाविबोंधय ॥ अश्विंनावेहगंच्छतं ॥ अस्यसोमंस्यपीतयें ॥ प्रातर्यावांणाप्रथमा
यंजध्वं ॥ पुरागृध्रादररुषःपिबाथः ॥ प्रातर्हियज्ञमश्विनादधांते ॥ प्रशंꣳसंतिकवयंःपूर्वभाजंः॥ प्रातर्यं
जध्वमश्विनांहिनोत ॥ नसायमंस्तिदेवयाअजुंष्टं ॥ उतान्योअस्मद्यंजतेविचांयः ॥ पूर्वःपूर्वोयजं
मानोवनीयान् ॥ १३ ॥ चाश्वजिद्योगंच्छतंनोदाशंनामांभिश्रीर्गमेमसप्रथाभजामहेविशंतुयाह्वं
र्वाङच्छंपिबाथःषट्चं ॥ ३ ॥ नक्तंजातास्योंषधे ॥ रामेकृष्णेअसिंक्रिच ॥ इदꣳरंजनिरजय ॥
किलासंपलितंचयत् ॥ किलासंचपलितंचं ॥ निरितोनांशयापृषंत् ॥ आनस्वोअंश्नुतांवर्णंः ॥ परांश्वे
तानिंपातय ॥ असितंतेनिलयंनं ॥ आस्थानमसितंनवं ॥ १ ॥असिक्रियस्योषधे ॥ निरितोनांशयापृषंत्
॥ अस्थिजस्यंकिलासंस्य ॥ तनूजस्यंचयत्त्वाचि ॥ कृत्ययांकृतस्यब्रह्मंणा ॥ लक्ष्मंश्वेतमंनीनशं ॥ संरूपा

दंतंबर्हिषिंप्रिये ॥ अमृतैंद्रंवयोधसं ॥ बृहतींछंदंइंद्रियं ॥ पंचाविंगांवयोदधंत् ॥ वेत्वाज्यंस्यहोतर्य
जं ॥ होतायक्षद्द्वचंस्वतीः ॥ सुप्रायणाऋतावृधः ॥ ३ ॥ द्वारोंदेवीर्हिरण्ययीः ॥ ब्रह्माणइंद्रंवयो
धसं ॥ पंक्तिंछंदंइहेंद्रियं ॥ तुर्यवाहंगांवयोदधंत् ॥ वेत्वाज्यंस्यहोतर्यजं ॥ होतायक्षत्सुपेशसे ॥
सुशिल्पेबृहतीउभे ॥ नक्तोषासानदर्शते ॥ विश्वमिंद्रंवयोधसं ॥ त्रिष्टुभंछंदंइंद्रियं ॥ ४ ॥ पष्ठवां
हंगांवयोदधंत् ॥ वेत्वाज्यंस्यहोतर्यजं ॥ होतायक्षत्प्रचेतसा ॥ देवानामुत्तमंयशः ॥ होतारादैव्यां
कवी ॥ सयुजेंद्रंवयोधसं ॥ जगतींछंदंइहेंद्रियं ॥ अनड्वाहंगांवयोदधंत् ॥ वेत्वाज्यंस्यहोतर्यजं ॥
होतायक्षत्पेशस्वतीः ॥ ५ ॥ तिस्रोदेवीर्हिरण्ययीः ॥ भारतीबृहतीर्महीः ॥ पतिमिंद्रंवयोधसं ॥
विराजंछंदंइहेंद्रियं ॥ धेनुंगांनवयोदधंत् ॥ वेत्वाज्यंस्यहोतर्यजं ॥ होतायक्षत्सुरेतसं ॥ त्वष्टारंपु
ष्टिवर्द्धनं ॥ रूपाणिबिभ्रंतंपृथक् ॥ पुष्टिमिंद्रंवयोधसं ॥ ६ ॥ द्विपदंछंदंइहेंद्रियं ॥ उक्षाणंगांनव
योदधंत् ॥ वेत्वाज्यंस्यहोतर्यजं ॥ होतायक्षच्छतक्रंतुं ॥ हिरण्यपर्णमुक्थिनं ॥ रशनांबिभ्रतंवशिं ॥
भगमिंद्रंवयोधसं ॥ ककुभंछंदंइहेंद्रियं ॥ वशांवेहतंगांनवयोदधंत् ॥ वेत्वाज्यंस्यहोतर्यजं ॥
होतायक्षत्स्वाहाकृतीः ॥ अग्निंगृहपतिंपृथक् ॥ वरुणंभेषजंकविं ॥ क्षत्रमिंद्रंवयोधसं ॥ अ

तिच्छंदसंछंदइंद्रियं ॥ बृहदृषभंगांवयोदधत् ॥ वेत्वाज्यस्यहोतर्यज ॥ ७ ॥ दधेदधंदता वृधइंद्रियंपेशस्वतीवयोधसंवेत्वाज्यस्यहोतर्यजंसप्तच ॥ १७ ॥ ॥ इडस्पदेग्निंगायत्रींत्र्यविं ॥ शुचिंव्रतश्शुचिंमुष्णिहंदित्यवाहं ॥ इडेन्यश्सोममनुष्टुभंत्रिवत्सं ॥ सुबर्हिषदमम्रुतेंद्रंबृहतींपंचाविं ॥ व्यचस्वतीःसुप्रायणाब्रह्मणःपंक्तिमिहतुर्यवाहं ॥ सुपेशसेविश्वमिंद्रंत्रिष्टुभंपष्टवाहं ॥ प्रचेतसासयुजेंद्रं जगतीमिहानड्वाहं ॥ पेशस्वतीस्तिस्रःपतिंविराजमिहधेनुं ॥ सुरेतसंत्वष्टारंपुष्टिमिंद्रंद्विपदमिहो क्षाणंन ॥ शतक्रतुंभगमिंद्रंककुभमिहवशांन ॥ स्वाहाकृतीःक्षत्रमतिच्छंदसं बृहदृषभंगांवयः ॥ इंद्रि यमृषिंवसुनवदशेहेंद्रियमष्टनवदशगांनवयोदधत्सर्ववेतु ॥ ॥ समिद्धोअग्निःसमिधा ॥ सुषमिद्धोवरे ण्यः ॥ गायत्रीछंदइंद्रियं ॥ त्र्यविर्गौर्वयोदधुः ॥ तनूनपाच्छुचिव्रतः ॥ तनूपाच्चसरस्वती ॥ उष्णि क्छंदइंद्रियं ॥ दित्यवाड्गौर्वयोदधुः ॥ इडाभिरग्निरीड्यः ॥ सोमोदेवोअमर्त्यः ॥ १॥ अनुष्टुप्छंदइं द्रियं ॥ त्रिवत्सोगौर्वयोदधुः ॥ सुबर्हिरग्निःपूषण्वान् ॥ स्तीर्णबर्हिरमर्त्यः ॥ बृहतीछंदइंद्रियं ॥ पंचावि र्गौर्वयोदधुः ॥ दुरोदेवीर्दिशोमहीः । ब्रह्मादेवोबृहस्पतिः ॥ पंक्तिश्छंदइहेंद्रियं ॥ तुर्यवाड्गौर्वयोदधुः

॥ २ ॥ उषेयक्षासुपेशसा ॥ विश्वेदेवाअमर्त्याः ॥ त्रिष्टुप्छंदइंद्रियं ॥ पष्ठवाड्गौर्वयोदधुः ॥ दैव्या
होताराभिषजा ॥ इंद्रेणसयुजायुजा ॥ जगतीछंदइहेंद्रियं ॥ अनड्वान्गौर्वयोदधुः ॥ तिस्रइडा
सरस्वती ॥ भारतीमरुतोविशः ॥ ३ ॥ विराट्छंदइहिंद्रियं ॥ धेनुर्गौर्नवयोदधुः ॥ त्वष्टातुरीपोअद्भु
तः ॥ इंद्राग्नीपुष्टिवर्धना ॥ द्विपाच्छंदइहेंद्रियं ॥ उक्षागौर्नवयोदधुः ॥ शमितानोवनस्पतिः ॥
सवितांप्रसुवन्भगं ॥ ककुच्छंदइहेंद्रियं ॥ वशावेहद्गौर्नवयोदधुः ॥ स्वाहायज्ञंवरुणः ॥ सुक्षत्रोभिषजं
करत् ॥ अतिच्छंदाश्छंदइंद्रियं ॥ बृहदृषभोगौर्वयोदधुः ॥ ४ ॥ अमर्त्यस्तुर्यवाड्गौर्वयोदधुर्विशोव
शावेहद्गौर्नवयोदधुश्चत्वारिंच ॥ १८ ॥ वसंतेनर्तुनादेवाः ॥ वसवस्त्रिवृतास्तुतं ॥ रथंतरेणतजसा ॥
हविरिंद्रेवयोदधुः ॥ ग्रीष्मेणदेवाऋतुना ॥ रुद्राःपंचदशेस्तुतं ॥ बृहतायशसाबलं ॥ हविरिं
द्रेवयोदधुः ॥ वर्षाभिर्ऋतुनादित्याः ॥ स्तोमेसप्तदशेस्तुतं ॥ १ ॥ वैरूपेणविशौजसा ॥ हविरिंद्रे
वयोदधुः ॥ शारदेनर्तुनादेवाः ॥ एकविंशऋभवःस्तुतं ॥ वैराजेनश्रियाश्रियं ॥ हविरिंद्रेवयो
दधुः ॥ हेमंतेनर्तुनादेवाः ॥ मरुतस्त्रिणवेस्तुतं ॥ बलेनशक्वरीःसहः ॥ हविरिंद्रेवयोदधुः ॥ शै

शिशिरेणर्तुनांदेवाः ॥ त्रयस्त्रिंशेनामृतंस्तुतं ॥ सत्येनरेवतीःक्षत्रं ॥ हविरिंद्रेवयोदधुः ॥ २ ॥ स्तोमैसे
मदशेस्तुतंसहोहविरिंद्रेवयोदधुश्चत्वारिंच ॥ १९ ॥ ॥ वसंतेनग्रीष्मेणगंवर्गाभिःशारदेनहेमंतेन
शैशिरेणषट् ॥ ॥ देवंबर्हिरिंद्रंवयोधसं ॥ देवंदेवमवर्द्धयत् ॥ गायत्रियाछंदसेंद्रियं ॥ तेजइंद्रे
वयोदधत् ॥ वसुवनेवसुधेयस्यवेतुयज ॥ देवीर्द्वारोदेवमिंद्रंवयोधसं ॥ देवीर्देवमवर्द्धयन् ॥ उष्णि
हाछंदसेंद्रियं ॥ प्राणमिंद्रेवयोदधत् ॥ वसुवनेवसुधेयस्यवियंतुयज ॥ १ ॥ देवीदेवंवयोध
सं ॥ उषेइंद्रमवर्द्धतां ॥ अनुष्टुभाछंदसेंद्रियं ॥ वाचमिंद्रेवयोदधत् ॥ वसुवनेवसुधेयस्य
वीतांयज ॥ देवीजोष्ट्रीदेवमिंद्रंवयोधसं ॥ देवीदेवमवर्द्धतां ॥ बृहत्याछंदसेंद्रियं ॥
श्रोत्रमिंद्रेवयोदधत् ॥ वसुवनेवसुधेयस्यवीतांयज ॥ २ ॥ देवीऊर्जाहुतीदेवमिंद्रंवयोधसं ॥ देवीदे
वमवर्द्धतां ॥ पङ्क्त्याछंदसेंद्रियं ॥ शुक्रमिंद्रेवयोदधत् ॥ वसुवनेवसुधेयस्यवीतांयज ॥ देवादैव्याहो
तारादेवमिंद्रंवयोधसं ॥ देवादेवमवर्द्धतां ॥ त्रिष्टुभाछंदसेंद्रियं ॥ त्विषिमिंद्रेवयोदधत् ॥ वसुवने
वसुधेयस्यवीतांयज ॥ ३ ॥ देवीस्तिस्रस्तिस्रोदेवीर्वयोधसं ॥ पतिमिंद्रमवर्द्धयन् ॥ जगत्याछंदसे

द्रियं ॥ बलमिंद्रेवयोदधंत् ॥ वसुवनेंवसुधेयंस्यावियंतुयजं ॥ देवोनराशꣳसोदेवमिंद्रंवयोधसं ॥ दे
वोदेवमवर्द्धयत् ॥ विराजाछंदसेंद्रियं ॥ रेतइंद्रेवयोदधंत् ॥ वसुवनेंवसुधेयस्यवेतुयज ॥ ४ ॥ देवो
वनस्पतिर्देवमिंद्रंवयोधसं ॥ देवोदेवमवर्द्धयत् ॥ द्विपदाछंदसेंद्रियं ॥ भगमिंद्रेवयोदधंत् ॥ वसुवनें
वसुधेयंस्यवेतुयजं ॥ देवंबर्हिर्वारितीनांदेवमिंद्रंवयोधसं ॥ देवंदेवमवर्द्धयत् ॥ ककुभाछंदसेंद्रिय ॥
यशइंद्रेवयोदधंत् ॥ वसुवनेवसुधेयंस्यवेतुयजं ॥ देवोअग्निःस्विष्टकृद्देवमिंद्रंवयोधसं ॥ देवोदेवमवर्द्ध
यत् ॥ अतिच्छंदसाछंदसेंद्रियं ॥ क्षत्रमिंद्रेवयोदधंत् ॥ वसुवनेंवसुधेयंस्यवेतुयजं ॥ ५ ॥ वियंतुय
जंवीतांयजंवीतांयजंवेतुयजंवेतुयजपंचंच ॥२०॥ देवंबर्हिर्गायत्रियातेजः ॥ देवीद्वारउष्णिहांप्राणं ॥
देवीदेवमुषेअनुष्टुभावाचं ॥ देवीजोष्ट्रीबृहत्याश्रोत्रं ॥ देवीऊर्जाहुतीपङ्क्त्याशुक्रं ॥ देवादैव्याहोतारा
त्रिष्टुभात्विषिं ॥ देवीस्तिस्रस्तिस्रोदेवीः पंतिजगत्याबलं ॥ देवोनराशꣳसोविराजारेतः ॥ दे
वोवनस्पतिर्द्विपदाभगं ॥ देवंबर्हिर्वारितीनांककुभायशः ॥ देवोअग्निःस्विष्टकृदतिच्छंदसाक्षत्रं ॥
स्वाद्वींत्वासोमःसुरावंतꣳसोसेनमित्रोसियद्देवाहोतायक्षत्त्वमिंद्रꣳसमिद्धइंद्रआचर्षणिप्रादेवंबर्हिरिंद्रꣳ
सुदेवꣳहोतायक्षत्समिधाग्निꣳसमिंद्धोअग्निरश्विनाश्विनाहविरिंद्रियंदेवंबर्हिःसरस्वत्यग्निमयोशंतोहोताय

क्षदिडस्पदेसमिंद्धोअग्निःसमिधांवसंतेनदेवंबर्हिरिंद्रंवयोधसंविꣳशतिः ॥ २० ॥ स्वाद्वींत्वामीमदंतापित
रःसाम्राज्यायसुक्रतुःपूतंपवित्रेणोषासानक्ताबदरैरधांतामश्विनाह्वविरिंद्रियंदेवइंद्रोवनस्पतिं पष्ठवाहंगांदे
वीदेवंवयोधसंचतुर्नवतिः ॥ ९४ ॥ हरिःॐम् ॥ त्रिवृत्स्तोमोभवति ॥ ब्रह्मवर्चसंवैत्रिवृत् ॥
ब्रह्मवर्चसमेवावरुंधे ॥ अग्निष्टोमःसोमोभवति ॥ ब्रह्मवर्चसंवाअग्निष्टोमः ॥ ब्रह्मवर्चसमेवावरुंधे ॥
रथंतरꣳसामभवति ॥ ब्रह्मवर्चसंवैरथंतरं ॥ ब्रह्मवर्चसमेवावरुंधे ॥ परिस्रजीहोताभवति ॥ १ ॥
अरुणोमिर्मिरस्त्रिशुक्रः ॥ एतद्वैब्रह्मवर्चसस्यरूपं ॥ रूपेणैवब्रह्मवर्चसमवरुंधे ॥ बृहस्पतिरकामय
तदेवानांपुरोधांगच्छेयमिति ॥ सएतंबृहस्पतिसवमपश्यत्॥तमाहरत् ॥ तेनायजत ॥ ततोवैसदेवानां
पुरोधामगच्छत् ॥ यःपुरोधाकामःस्यात् ॥ सबृहस्पतिसवेनयजेत ॥ २ ॥ पुरोधामेवगच्छति ॥
तस्यप्रातःसवनेसन्नेषुनाराशꣳसेषु ॥ एकादशदक्षिणानीयंते ॥ एकादशमाध्यंदिनेसवनेसन्नेषु
नाराशꣳसेषु ॥ एकादशतृतीयसवनेसन्नेषुनाराशꣳसेषु ॥ त्रयस्त्रिꣳशत्संपद्यंते ॥ त्रयस्त्रिꣳशद्वै
देवताः ॥ देवताएवावरुंधे ॥ अश्वश्चतुस्त्रिꣳशः ॥ प्राजापत्योवाअश्वः ॥ ३ ॥ प्रजापतिश्चतुस्त्रिꣳ
शोदेवतानां ॥ यावतीरेवदेवताः ॥ ताएवावरुंधे ॥ कृष्णाजिनेनाभिषिंचति ॥ ब्रह्मणोवाएतद्रूपं ॥
यत्कृष्णाजिनं ॥ ब्रह्मवर्चसेनैवैनꣳसमर्द्धयति ॥ आज्येनाभिषिंचति ॥ तेजोवाआज्यं ॥ तेजएवा

स्मिन्दधाति ॥ ४ ॥ होताभवतियजेतवाअश्वोदधाति ॥ १ ॥ यदाग्नेयोभवति ॥ अग्निर्मुखाद्धृ
द्धिः ॥ अथयत्पौष्णः ॥ पुष्टिर्वैपूषा ॥ पुष्टिर्वैश्यस्य ॥ पुष्टिमेवावरुंधे ॥ प्रसवायसावित्रः ॥ अथय
वायेष्ट्रः ॥ त्वष्टारूपाणिविकरोति ॥ निर्वरुणत्वायवारुणः ॥ १ ॥ अथोयएवकश्चसन्त्सूयते ॥ स
हिवारुणः ॥ अथयद्वैश्वदेवः ॥ वैश्वदेवोहिवैश्यः ॥ अथयन्मारुतः ॥ मारुतोहिवैश्यः ॥ सप्तैता
निहवींषिभवंति ॥ सप्तगणावैमरुतः ॥ पृश्निःपष्ठौहीमारुत्यालभ्यते ॥ विड्वैमरुतः ॥ विशएवैत
न्मध्यतोभिषिच्यते ॥ तस्माद्वाएषविशःप्रियः ॥ विशोहिमध्यतोभिषिच्यते ॥ ऋषभचर्मेध्यभिषिं
चति ॥ सहिप्रजनयिता ॥ दध्नाभिषिंचति ॥ ऊर्ग्वाअन्नाद्यंदधि ॥ ऊर्जैवैनमन्नाद्येनसमर्द्धयति ॥
॥ २ ॥ वारुणोविड्वैमरुतोष्टौच ॥ २ ॥ यदाग्नेयोभवति ॥ आग्नेयोवैब्राह्मणः ॥ अथयत्सौम्यः ॥
सौम्योहिब्राह्मणः ॥ प्रसवायैवसावित्रः ॥ अथयद्बार्हस्पत्यः ॥ एतद्वैब्राह्मणस्यवाक्पतीयं ॥ अथय
दग्नीषोमीयः ॥ आग्नेयोवैब्राह्मणः ॥ तौयदासंगच्छेते ॥१॥ अथवीर्यावत्तरोभवति ॥ अथयत्सारस्व
तः ॥ एतद्धिप्रत्यक्षंब्राह्मणस्यवाक्पतीयं ॥ निर्वरुणत्वायैववारुणः ॥ अथोयएवकश्चसन्त्सूयते ॥ सहि
वारुणः ॥ अथयद्द्यावापृथिव्यः ॥इंद्रोवृत्रायवज्रमुदयच्छत् ॥ तंद्यावापृथिवीनान्वमन्येतां ॥ तमेतेनै
वभागधेयेनान्वमन्येतां ॥ २ ॥ वज्रस्यवाएषोनुमानाय ॥ अनुमतवज्रःसूयाताइति ॥ अष्टावेतानि

हृवींꣳषिंभवंति ॥ अष्टाक्षराग्रायत्री ॥ गायत्रीब्रह्मवर्चसं ॥ गायत्रियैवब्रह्मवर्चसमवरुंधे ॥ हिरण्य
नघृतमुत्पुनाति ॥ तेजसएवरुचे ॥ कृष्णाजिनेभिषिंचति ॥ ब्रह्मणोवाएतदृक्सामयोरूपं ॥ यत्कृष्णा
जिनं ॥ ब्रह्मन्नेवैनमृक्सामयोरध्यभिषिंचति ॥ घृतेनाभिषिंचति ॥ तथावीर्यावत्तरोभवति ॥ ३ ॥
संगच्छेतेभागधेयेनान्वमन्येताꣳरूपंचत्वारिंच ॥ ३ ॥ नवैसोमेनसोमस्यसवोस्ति ॥ हृतोह्येषः ॥
अभिषुतोह्येषः ॥ नहिहृतःसूयते ॥ सौमीꣳसूतवशामालभते ॥ सोमोवैरेतोधाः ॥ रेतएवतद्दधाति ॥
सौम्यर्चाभिषिंचति ॥ रेतोधाह्येषा ॥ रेतःसोमः ॥ रेतएवास्मिन्दधाति ॥ यत्किंचराजसूयमृते
सोमं ॥ तत्सर्वंभवति ॥ अषाढंयुत्सुपृतनासुपप्रिं ॥ सुवर्षामप्स्वांवृजनस्यगोपां ॥ भरेषुजाꣳ
सुक्षितिꣳसुश्रवसं ॥ जयंतंत्वामनुमदेमसोम ॥ १ ॥ रेतःसोमःसप्तच ॥ ४ ॥ योवैसोमेन
सूयते ॥ सदेवसवः ॥ यःपशुनासूयते ॥ सदेवसवः ॥ यइष्टचासूयते ॥ समनुष्यसवः ॥ एतंवैपृ
थयेदेवाःप्रायच्छन् ॥ ततोवैसोप्यारण्यानांपशूनामसूयत ॥ यावतीःकियतीश्चप्रजावाचंवदं
ति ॥ तासाꣳसर्वासाꣳसूयते ॥ १ ॥ यएतेनयजते ॥ यउचैनमेवंवेद ॥ नाराशꣳस्यर्चाभिषिंचति ॥ मनु

ष्यांवैनराशंस्सः ॥ निह्नुत्यवावैतत् ॥ अथाभिषिंचति ॥ यत्किंचराजसूयमनुत्तरवेदीकं ॥ तत्सर्वंभव
ति ॥ येमेपंचाशतंददुः ॥ अश्वानांस्सधस्तुतिः ॥ द्युमदग्नेमहिश्रवः ॥ बृहत्कृधिमघोनां ॥ नृवदमृ
तनृणां ॥ २ ॥ सूयतेसधस्तुतिस्त्रीणिंच ॥ ५ ॥ एषगोसवः ॥ षट्त्रिंशउक्थ्योबृहत्सामा ॥ पवं
मानेकण्वरथंतरंभवति ॥ योवैवाजपेयः ॥ ससम्राट्सवः ॥ योराजसूयः ॥ सवरुणसवः ॥ प्रजाप
तिःस्वाराज्यंपरमेष्ठी ॥ स्वाराज्यंगौरेव ॥ गौरिवभवति ॥ १ ॥ यएतेनयजंते ॥ यउचैनमेवंवेद ॥
उभेबृहद्रथंतरेभवतः ॥ तद्धिस्वाराज्यं ॥ अयुतंदक्षिणाः ॥ तद्धिस्वाराज्यं ॥ प्रतिधुषाभिषिंचति ॥
तद्धिस्वाराज्यं ॥ अनुद्धतेवेद्यैदक्षिणतआहवनीयस्यबृहतस्तोत्रंप्रत्यभिषिंचति ॥ इयंवावरथंतरं ॥ २॥
असौबृहत् ॥ अनयोरेवैनमनंतर्हितमभिषिंचति ॥ पशुस्तोमोवाएषः ॥ तेनंगोसवः ॥ षट्त्रिंशः स
र्वः ॥ रेवज्जातःसहसावृद्धः ॥ क्षत्राणांक्षत्रभृत्तमोवयोधाः ॥ महान्महित्वेतंस्तभानः ॥ क्षत्रेराष्ट्रेच
जागृहि ॥ प्रजापतेस्त्वापरमेष्ठिनःस्वाराज्येनाभिषिंचामीत्याह ॥ स्वाराज्यमेवैनंगमयति ॥ ३ ॥ इ
वभवतिरथंतरमाहैकंच ॥ ६ ॥ सिंहेव्याघ्रउतयापृदाकौ ॥ त्विषिरग्नौब्राह्मणेसूर्येय ॥ इंद्रंयादे
वीसुभगाजजान ॥ सानआगन्वर्चसासंविदाना ॥ याराजन्येदुंदुभावायतायां ॥ अश्वस्यक्रंदेपुरुष

स्यमायौ ॥ इंद्रंयादेवीसुभगांजजानं ॥ सानआगन्वर्चसासंविदाना ॥ याहस्तिनिद्वीपिनियाहिरंण्ये ॥ त्विषिरश्वेषुपुरुषेषुगोषु ॥ १ ॥ इंद्रंयादेवीसुभगांजजानं ॥ सानआगन्वर्चसासंविदाना ॥ रथेअक्षेषुवृषभस्यवाजे ॥ वातेपर्जन्येवरुणस्यशुष्मे ॥ इंद्रंयादेवीसुभगांजजानं ॥ सानआगन्वर्चसासंविदाना ॥ राडसिविराडसि ॥ सम्राडसिस्वराडसि ॥ इंद्रायत्वातेजस्वतेतेजस्वंतश्श्रीणामि ॥ इंद्रायत्वौजस्वतओजस्वंतश्श्रीणामि ॥ २ ॥ इंद्रायत्वापयस्वतेपयस्वंतश्श्रीणामि ॥ इंद्रायत्वायुष्मतआयुष्मंतश्श्रीणामि ॥ तेजोसि ॥ तत्तेप्रयच्छामि ॥ तेजस्वदस्तुमेमुखं ॥ तेजस्वच्छिरोअस्तुमे ॥ तेजस्वान्विश्वतःप्रत्यङ् ॥ तेजसासंपिपृग्धिमा ॥ ओजोसि ॥ तत्तेप्रयच्छामि ॥३॥ ओजस्वदस्तुमेमुखं ॥ ओजस्वच्छिरोअस्तुमे ॥ ओजस्वान्विश्वतःप्रत्यङ् ॥ ओजसासंपिपृग्धिमा ॥पयोसि॥तत्तेप्रयच्छामि ॥ पयस्वदस्तुमेमुखं ॥ पयस्वच्छिरोअस्तुमे ॥ पयस्वान्विश्वतःप्रत्यङ् ॥ पयसासंपिपृग्धिमा ॥ ४ ॥ आयुरसि ॥ तत्तेप्रयच्छामि ॥ आयुष्मदस्तुमेमुखं ॥ आयुष्मच्छिरोअस्तुमे ॥ आयुष्मान्विश्वतःप्रत्यङ् ॥ आयुषासंपिपृग्धिमा ॥ इममग्नआयुषवर्चसेकृधि ॥ प्रियश्रेतोवरुणसोमराजन् ॥ मातेवास्माअदिते शर्मयच्छ ॥ विश्वेदेवाजरदष्टिर्यथासत् ॥ ५ ॥ आयुरसिविश्वायुरसि ॥ सर्वायुरसिसर्वमायुरसि ॥ यतोवातोमनोजवाः ॥ यतःक्षरंतिसिंधवः ॥ तासांत्वासर्वासाश्रुचा ॥ अभिषिंचामिवर्चसा ॥ समुद्र

इवासिगृह्णनां ॥ सोमंइवास्यदांभ्यः ॥ अग्निरिंवविश्वतंःप्रत्यङ् ॥ सूर्यंइवज्योतिषाविभूः ॥ ६ ॥
अपांयोद्रवंणेरसंः ॥ तमहमस्माऽआंमुष्यायणायं ॥ तेजंसेब्रह्मवर्चसायंगृह्णामि ॥ अपांयऊर्मौरसंः ॥
तमहमस्माआंमुष्यायणायं ॥ ओजंसेवीर्यांयगृह्णामि ॥ अपांयोमंध्यतोरसंः ॥ तमहमस्माआंमुष्याय
णायं ॥ पुष्टचैंप्रजनंनायगृह्णामि ॥ अपांयोयज्ञियोरसंः ॥ तमहमस्माआंमुष्यायणायं ॥ आयुंषेदीर्घायु
त्वायंगृह्णामि ॥ ७ ॥ गोष्वोजंस्वंतःश्रीणाम्योजोंसितत्तेप्रयंच्छामिपयंसासंपिंपृग्धिमासंद्विभूर्यज्ञियो
रसोंद्वेचं ॥ ७ ॥ ॥ अभिप्रेहिंवीरयंस्व ॥ उग्रश्चेत्तासपत्नहा ॥ आतिंष्ठमित्रवर्द्धंनः ॥ तुभ्यंदेवाअ
धिंब्रवन् ॥ अंकौन्यंकावभितआतिंष्ठवृत्रहन्त्रथं ॥ आतिंष्ठंतंपरिविश्वेंअभूषन् ॥ श्रियंवसांनश्चरतिस्वरो
चाः ॥ महत्तदस्यासुंरस्यनामं ॥ आविश्वरूपोअमृतांनितस्थौ ॥ अनुत्वेंद्रोंमदत्वनुबृहस्पतिंः ॥ १ ॥
अनुसोमोअन्वग्निरांवीत् ॥ अनुंत्वाविश्वेंदेवाअंवंतु ॥ अनुंसप्तराजांनोयउताभिषिंक्ताः ॥ अनुंत्वा
मित्रावरुंणाविहावंतं ॥ अनुद्यावांपृथिवीविश्वशंभू ॥ सूर्योंअहोंभिरनुंत्वावतु ॥ चंद्रमानक्षंत्रैरनुंत्वाव
तु ॥ द्यौश्चंत्वापृथिवीचप्रचेंतसा ॥ शुक्रोबृहद्दक्षिंणात्वापिपर्त्तु ॥ अनुंस्वधाचिंकिताःसोमोंअग्निः ॥
आयंपृंणक्तुरजंसीउपस्थं ॥ २ ॥ बृहस्पतिःसोमोंअग्निरेंकंच ॥ ८ ॥ ॥ ॥ प्रजापंतिःप्रजाअं

सृजत ॥ ताअस्मात्सृष्टाःपरांचीरायन् ॥ सएतंप्रजापतिरोदनमपश्यत् ॥ सोन्नंभू
तोतिष्ठत् ॥ ताअन्यत्रान्नाद्यमवित्वा ॥ प्रजापतिंप्रजाउपावर्त्तंत ॥ अन्नमेवैनंभूतंपश्यंतीः ॥ प्रजाउपावर्त्तं
ते ॥ यएतेनयजंते ॥ यउचैनमेवंवेद ॥ सर्वाण्यन्नानिभवंति ॥ १ ॥ सर्वेपुरुषाः ॥ सर्वाण्येवान्ना
न्यवरुंधे ॥ सर्वान्पुरुषान् ॥ राडसिविराडसीत्याह ॥ स्वाराज्यमेवैनंगमयति ॥ यद्धिरण्यंददाति ॥
तेजस्तेनावरुंधे ॥ यत्तिसृधन्वं ॥ वीर्यंतेन ॥ यदष्ट्रां ॥ २ ॥ पुष्टिंतेन ॥ यत्कमंडलुं ॥ आयुस्तेन ॥
यद्धिरण्यमाबध्नाति ॥ ज्योतिर्वैहिरण्यं ॥ ज्योतिरेवास्मिन्दधाति ॥ अथोतेजोवैहिरण्यं ॥ तेजएवा
स्मन्धत्ते ॥ यदोदनंप्राश्नाति ॥ एतदेवसर्वमवरुध्यं ॥ ३ ॥ तदस्मिन्नेकधाधात् ॥ रोहिण्यांकार्यः ॥
यद्ब्राह्मणएवरोहिणी ॥ तस्मादेव ॥ अथोवर्ष्मैवैनं समानानांकरोति ॥ उद्यतासूर्येणकार्यः ॥ उद्यं
तंवाएत सर्वाःप्रजाःप्रतिनंदति ॥ दिदृक्षेण्योदर्शनीयोभवति ॥ यएवंवेद ॥ ब्रह्मवादिनोवदंति ॥
॥ ४ ॥ अवेत्योवभृथा३ना३इति ॥ यद्दर्भपुंजीलैःपवयंति ॥ तत्स्विंदेवावैति ॥ तन्नावैति ॥ त्रिभिःपं
वयति ॥ त्रयइमेलोकाः ॥ एभिरेवैनंलोकैःपवयति ॥ अथोअपांवाएततेजोवर्चः ॥ यद्दर्भाः ॥ यद्द
र्भपुंजीलैःपवयंति ॥ अपामेवैनंतेजसावर्चसाभिषिंचति ॥ ५ ॥ भवंत्यष्ट्रामवरुध्यंवदंतिदर्भायद्द
र्भपुंजीलैःपवयत्येकंच ॥ ॥ ६ ॥ प्रजापतिरकामयतबहोर्भूयान्त्स्यामिति ॥ सएतंपंचशारदीयमपश्य

त् ॥ तमाहरत् ॥ तेनायजत ॥ ततोवैसबहोर्भूयानभवत् ॥ यःकामयेतबहोर्भूयान्त्स्यामिति ॥ सपंच
शारदीयेनयजेत ॥ बहोरेवभूयान्भवति ॥ मरुत्स्तोमोवाएषः ॥ मरुतोहिदेवानांभूयिष्ठाः ॥ १ ॥
बहुर्भवति ॥ यएतेनयजंते ॥ यउचैनमेवंवेद ॥ पंचशारदीयोभवति ॥ पंचवाऋतवःसंवत्स
रः ॥ ऋतुष्वेवसंवत्सरेप्रतितिष्ठति ॥ अथोपंचाक्षरापङ्क्तिः ॥ पाङ्क्तोयज्ञः ॥ यज्ञमे
वावरुंधे ॥ सप्तदशश्स्तोमानातियंति ॥ सप्तदशःप्रजापतिः ॥ प्रजापतेराप्त्यै ॥ २ ॥
भूयिष्ठायंतिद्वेचं ॥ १० ॥ अगस्त्योमरुद्भ्यउक्षणःप्रौक्षत् ॥ तानिंद्रआदत्त ॥ तएनंवज्रमुद्यत्याभ्यायं
त ॥ तानगस्त्यश्चैवेंद्रश्चकयाशुभीयेनाशमयतां ॥ तांञ्छांतानुपाह्वयत ॥ यत्कयाशुभीयंभवतिशां
त्यै ॥ तस्मादेतऐंद्रामारुताउक्षाणःसवनीयाभवंति ॥ त्रयःप्रथमेहन्नालभ्यंते ॥ एवंद्वितीये ॥ एवंतृ
तीये ॥ १ ॥ एवंचतुर्थे ॥ पंचोत्तमेहन्नालभ्यंते ॥ वर्षिष्ठमिवह्येतदहः ॥ वर्षिष्ठःसमानानांभवति ॥
यएतेनयजंते ॥ यउचैनमेवंवेद ॥ स्वाराज्यंवाएषयज्ञः ॥ एतेनवाएकयावाकादमःस्वाराज्यमगच्छ
त् ॥ स्वाराज्यंगच्छति ॥ यएतेनयजंते ॥ २ ॥ यउचैनमेवंवेद ॥ मारुतोवाएषःस्तोमः ॥ एतेन
वैमरुतोदेवानांभूयिष्ठाअभवन् ॥ भूयिष्ठःसमानानांभवति ॥ यएतेनयजते ॥ यउचैनमेवंवेद ॥
पंचशारदीयोवाएषयज्ञः ॥ आपंचमात्पुरुषादन्नमाति ॥ यएतेनयजंते ॥ यउचैनमेवंवेद ॥ सप्तदश

ꣳस्तोमानातिर्यंति ॥ सप्तदशःप्रजापतिः ॥ प्रजापतेरेवनैति ॥ ३ ॥ तृतीयंगच्छतियएतेनयजंतेत्ति
यएतेनयजंतेयउंचैनमेवंवेदत्रीणिच ॥ ११ ॥ अगस्त्यःस्वाराज्यंमारुतःपंचशारदीयोत्राएषयज्ञःसप्तद
शःप्रजापतेरेवनैति ॥ अस्याजरासोदमामरित्राः ॥ अर्चद्धूमासोअग्नयःपावकाः ॥ श्वितीचयःश्वा
त्रासोभुरण्यवः ॥ वनर्षदोवायवोनसोमाः ॥ यजानोमित्रावरुणा ॥ यजादेवाꣳऋतंबृहत् ॥ अग्नेयक्षि
स्वंदमं ॥ अश्विनापिबतꣳसुतं ॥ दीद्यग्नीशुचिव्रता ॥ ऋतुनायज्ञवाहसा ॥ १ ॥ द्वेविरूपेचरतः
स्वर्थे ॥ अन्यान्यावत्समुपधापयेते ॥ हरिरन्यस्यांभवतिस्वधावान् ॥ शुक्रोअन्यस्यांददृशेसुवर्चाः ॥
पूर्वापरंचरतोमाययैतौ ॥ शिशूक्रीडंतौपरियातोअध्वरं ॥ विश्वान्यन्योभुवनाभिचष्टे ॥ ऋतूनन्योवि
दधज्जायतेपुनः ॥ त्रीणिशतात्रीसहस्राण्यग्निं ॥ त्रिꣳशच्चदेवानवचासपर्यन् ॥ २ ॥ औक्षन्घृतै
रास्तृणन्बर्हिरस्मै ॥ आदिद्धोतारन्यषादयंत ॥ अग्निनाग्निःसमिध्यते ॥ कविर्गृहपतिर्युवा ॥ हव्य
वाड्जुह्वास्यः ॥ अग्निर्देवानांजठरं ॥ पूतदक्षःकविक्रतुः ॥ देवोदेवेभिरागमत् ॥ अग्निश्रियोमरुतो
विश्वकृष्टयः ॥ आत्वेषमुग्रमवईमहेवयं ॥ ३ ॥ तेस्वानिनोरुद्रियावर्षनिर्णिजः ॥ सिꣳहानहेषक्र

तवः सुदानवः ॥ यदुंत्तमेमंरुतोमध्यमेवां ॥ यद्वांवमेसुंभगासोदिविष्ठ ॥ ततोंनोरुद्राउतवान्वस्यं ॥
अग्नेंवित्ताद्धविषोयद्यजांमः ॥ ईडेअग्निं स्ववसंनमोभिः ॥ इहप्रंसत्नोविचंयत्कृतंनः ॥ रथैंरिवप्रभंरेवा
जयद्भिः ॥ प्रदक्षिणिन्मरुतां स्तोमंमृध्यां ॥ ४ ॥ श्रुधिश्रुत्कर्णवह्निंभिः ॥ देवैरंग्नेसयावंभिः ॥ आसीं
दंतुबर्हिषिं ॥ मित्रोवरुंणोअर्यमा ॥ प्रातर्यावाणोअध्वरं ॥ विश्वेंषामदितिर्यज्ञियांनां ॥ विश्वेंषामतिं
थिर्मानुंषाणां ॥ अग्निर्देवानामवंआवृणानः ॥ सुमृडीकोभंवतुविश्ववेंदाः ॥ त्वेअंग्नेसुमतिंभिक्षं
माणाः ॥ ५ ॥ दिविश्रत्रोंदधिरेयज्ञियांसः ॥ नक्तांचचक्रुरुषसाविरूंपे ॥ कृष्णंचवर्णमरुणंचसंधुः ॥
त्वामंग्नआदित्यासंआस्यं ॥ त्वांजिह्वां शुचंयश्चक्रिरेकवे ॥ त्वां रांतिषाचोंअध्वरेषुंसश्चिरे ॥ त्वेदे
वाहविरंदंत्याहुंतं ॥ नित्वांयज्ञस्यसाधंनं ॥ अग्नेहोतारमृत्विजं ॥ वनुष्वद्देवधीमहिप्रचेंतसं ॥ जीरंदूत
ममंर्त्यं ॥ ६ ॥ यज्ञवाहसासपर्यन्वयमृंध्यांभिक्षंमाणाःप्रचेंतसमेकंच ॥ १२ ॥ तिष्ठाहरीरथआयुज्य
मांनायाहि ॥ वायुर्ननियुतोंनोअच्छं ॥ पिबास्यंधोअभिसृंष्टोअस्मे ॥ इंद्रस्वाहांरारिमातेमदांय ॥ कस्य
वृषासुतेसचां ॥ नियुत्वांन्वृषभोरंणत् ॥ वृत्रहासोमंपीतये ॥ इंद्रंवयंमहाधने ॥ इंद्रमर्भेंहवामहे ॥ यु
जंवृत्रेषुंवज्रिणं ॥ १ ॥ द्वितायोवृंत्रहंतमः ॥ विदइंद्रःशतक्रंतुः ॥ उपनोहरिंभिःसुतं ॥ ससूरआ

जनयन्ज्योतिरिंद्रं ॥ अयाधियातरणिरद्रिबर्हाः ॥ ऋतेनंशुष्मीनवंमानोअर्कैः ॥ व्युस्त्रिधोअस्रो अद्रिर्बिभेद ॥ उतत्यदाश्वाश्व्यं ॥ यदिंद्रनाहुषीष्वा ॥ अग्रेंविक्षुप्रतीदंयत् ॥ २ ॥ भरेष्विंद्रंसुहवंं हवामहे ॥ अंहोमुचंसुकृतंदैव्यंजनं ॥ अग्निंमित्रंवरुणंसातयेभगं ॥ द्यावांपृथिवीमरुतंःस्वस्तयें ॥ महिक्षेत्रंपुरुश्चंद्रंविविद्वान् ॥ आदित्सखिंभ्यश्चरथंसमैरत् ॥ इंद्रोनृभिरंजनद्दीद्यानःसाकं ॥ सूर्यं मुषसंगातुमग्निं ॥ उरुंनोलोकमनुंनेषिविद्वान् ॥ सुवर्वज्ज्योतिरभंयंस्वस्ति ॥ ३ ॥ ऋष्वातइंद्र स्थविंरस्यबाहू ॥ उपंस्थेयामशरणाबृहंता ॥ आनोविश्वांभिरूतिभिःसजोषाः ॥ ब्रह्मंजुषाणोहर्यश्व याहि ॥ वरींवृजत्स्थविंरेभिःसुशिप्र ॥ अस्मेदधद्वृषंणंशुष्ममिंद्र ॥ इंद्रांयगावंआशिरं ॥ दुदुहे वज्रिणेमधुं ॥ यत्सीमुपह्वरेविदत् ॥ तास्तेंवज्रिन्धेनवोंजोजयुर्नः ॥ ४ ॥ गभंस्तयोनियुतोंविश्ववाराः ॥ अहंरहर्भूयइज्जोगुंवानाः ॥ पूर्णाइंद्रक्षुमतोभोजंनस्य ॥ इमांतेधियंप्रभंरेमहोमहीं ॥ अस्य स्तोत्रेधिषणायत्तंआनजे ॥ तमुंत्सवेचंप्रसवेचंसासहिं ॥ इंद्रंदेवासःशवंसामदन्ननुं ॥ ५ ॥ वज्रिणंमयत्स्वस्तिजोंजयुर्नःसप्तचं ॥ १३ ॥ प्रजापंतिःपशूनंसृजत ॥ तेंस्मात्सृष्टाःपरांचआयन् ॥

तानंग्निष्टोमेनंनाप्नोंत् ॥ तानुक्थ्येनंनाप्नोंत् ॥ तान्षोंडशिनानाप्नोंत् ॥ तान्त्रात्रियानाप्नोंत् ॥ तान्त्सं
धिनानाप्नोंत् ॥ सोंग्निमंब्रवीत् ॥ इमान्मंईप्सेतिं ॥ तानग्निस्त्रिवृतास्तोमेंननाप्नोंत् ॥ १ ॥ सइंद्रम
ब्रवीत् ॥ इमान्मंईप्सेतिं ॥ तानिंद्रःपंचदशेनस्तोमेंननाप्नोंत् ॥ सविश्वान्देवानंब्रवीत् ॥ इमान्मंई
प्सेतिं ॥ तान्विश्वेंदेवाःसंप्तदशेनस्तोमेंननाप्नुवन् ॥ सविष्णुमब्रवीत् ॥ इमान्मंईप्सेतिं ॥ तान्वि
ष्णुरेकविंशेनस्तोमेनाप्नोत् ॥ वारवंतीयेनावारयत ॥ २ ॥ इदंविष्णुर्विचंक्रमइतिव्यंक्रमत ॥ यस्मा
त्पशवःप्रप्रेबभ्रंशेरन् ॥ सएतेनंयजेत ॥ यदाप्नोंत् ॥ तदप्तोर्यामस्याप्तोर्यामत्वं ॥ एतेनवैदेवाजैत्वां
निर्जित्वा ॥ यंकाममकांमयंततमाप्नुवन् ॥ यंकामंकामयंते ॥ तमेतेनाप्नोति ॥ ३ ॥ स्तोमेंननाप्नोंदवा
रयतनवंच ॥ १४ ॥ व्याघ्रोंयमग्नौचंरतिप्रविंष्टः ॥ ऋषीणांपुत्रोअंभिशस्तिपाअयं ॥ नमस्कारेणन
मंसातेजुहोमि ॥ मादेवानांमिथुयाकंर्मभागं ॥ सावोंहिदेवप्रसवायंपित्रे ॥ वर्ष्माणमस्मैवरिमा
णंमस्मै ॥ अथास्मभ्यंसवितःसर्वतांता ॥ दिवेदिंवआसुवाभूरिपश्वः ॥ भूतोभूतेषुंचरतिप्रवि
ष्टः ॥ सभूतानामधिंपतिर्बभूव ॥ १ ॥ तस्यमृत्यौचंरतिराजसूयं ॥ सराजाराज्यमनुंमन्यतामि
दं ॥ येभिःशिल्पैःपप्रथानामदृंहत् ॥ येभिर्द्यामभ्यपिंशत्प्रजापंतिः ॥ येभिर्वाचंविश्वरूपां
समव्यंयत् ॥ तेनेममंग्नइहवर्चसासमंङ्धि ॥ येभिंरादित्यस्तपंतिप्रकेतुभिः ॥ येभिःसूर्योंददृशे

चित्रभांनुः ॥ येभिर्वाचंपुष्कलेभिरव्यंयत् ॥ तेनेममंग्नइहवर्चसासमंङ्धि ॥ २ ॥ आयंभांतुशवंसापंचंकृष्टीः ॥ इंद्रइवज्येष्ठोभंवतुप्रजावांन् ॥ अस्माअंस्तुपुष्कलंचित्रभांनु ॥ आयंपृंणक्तुरजंसोउपस्थं ॥ यत्तेशिल्पंकश्यपरोचनावंत् ॥ इंद्रियावंत्पुष्कलंचित्रभांनु ॥ यस्मिन्त्सूर्याअर्पिताः सप्तसाकं ॥ तस्मिन्राजांनमधिविश्रयेमं ॥ द्यौरंसिपृथिव्यंसि ॥ व्याघ्रोवैव्याघ्रेधिं ॥ ३ विश्रयस्वदिशोमहीः ॥ विशंस्त्वासर्वावांछंतु ॥ मात्वद्राष्ट्रमधिंभ्रशत् ॥ यादिव्याआपःपयंसासंबभूवुः ॥ याअंतरिक्षउतपार्थिवीर्याः ॥ तासांत्वासर्वासांरुचा ॥ अभिषिंचामिवर्चसा ॥ अभित्वावर्चसासिचंदिव्येनं ॥ पयंसासह ॥ यथासांराष्ट्रवर्द्धनः ॥ ४ ॥ तथांत्वासवितांकरत् ॥ इंद्रंविश्वाअवीवृधन् ॥ समुद्रव्यंचसंगिरंः ॥ रथीतंमंरथीनां ॥ वाजांनांसत्पंतिंपतिं ॥ वसंवस्त्वापुरस्तादभिषिंचंतुगायत्रेणच्छंदंसा ॥ रुद्रास्त्वांदक्षिणतोंभिषिंचंतुत्रैष्टुभेनछंदेसा ॥ आदित्यास्त्वांपश्चादभिषिंचंतुजागंतनेछंदंसा ॥ विश्वेंत्वादेवाउंत्तरतोंभिषिंचंत्वानुंष्टुभेनछंदंसा ॥ वृहस्पतिंस्त्वोपरिष्टादभिषिंचतुपाङ्क्तेनछंदंसा ॥ ५ ॥ अरुणंत्वावृकंमुग्रंखंजंकरं ॥ रोचंमानंमरुतामग्रेंअर्चिषंः ॥ सूर्यवंतंमघवांनंविषासहिं ॥ इंद्रंमुक्थेषुंनामहूतंमंहुवेम ॥ प्रबाहवांसिसृतंजीवसेंनः ॥ आनोगव्यूतिमुक्ष

तंवृतेन ॥ आ नोजनेश्रवयत युवाना ॥ श्रुतंमेमित्रावरुणाहवेमा ॥ इंद्रस्यतेवीर्यकृतः ॥ बाहूउ
पावहरामि ॥ ६ ॥ बभूवाव्ययत्तेनेममंग्नइहवर्चसासमंङ्धिवैयाघ्रोधिराष्ट्रवर्धनः ॥ पाङ्क्तेनछं
दसोपावहरामि ॥ १५ ॥ ॥ अभिप्रेहिवीरयस्व ॥ उग्रश्चेत्तासपत्नहा ॥ आतिष्ठवृत्रहंतमः ॥ तु
भ्यंदेवाअधिब्रवन् ॥ अंकौन्यंकावभितोरथंयौ ॥ ध्वांतंवाताग्रमनुसंचरंतौ ॥ दूरेहेतिरिंद्रि
यावान्पतत्री ॥ तेनोग्नयःपप्रयःपारयंतु ॥ नमस्तऋषेगद ॥ अव्यंधायैत्वास्वधायैत्वा ॥ १ ॥ मान
इंद्राभितस्त्वदृष्टारिष्टासः ॥ एवाब्रह्मन्तवेदस्तु ॥ तिष्ठारथेअधियद्वज्रहस्तः ॥ आरश्मीन्देवयु
वसेस्वश्वः ॥ आतिष्ठवृत्रहन्नातिष्ठंतंपरि ॥ अनुत्वेंद्रोमदत्वनुत्वामित्रावरुणौ ॥ द्यौश्चत्वापृ
थिवीचप्रचेतसा ॥ शुक्रोबृहद्दक्षिणात्वापिपर्तु ॥ अनुस्वधाचिकिनाꣳसोमोअग्निः ॥ अनुत्वावतुस
वितासवेन ॥ २ ॥ इंद्रंविश्वाअवीवृधन् ॥ समुद्रव्यचसंगिरः ॥ रथीतमꣳरथीनां ॥ वाजानाꣳस
त्पतिंपतिं ॥ परिमासेन्याघोषाः ॥ ज्यानांवृंजंतुगृध्रवः ॥ मेथिष्ठाःपिन्वमानाइह ॥ मांगोपतिमभिसं
विशंतु ॥ तन्मेनुमतिरनुमन्यतां ॥ तन्मातापृथिवीतत्पितायौः ॥ ३ ॥ तद्ग्रावाणःसोमसुतोमयोभुवः
स्तदश्विनाशृणुतꣳसौभगायुवं ॥ अवतेहेडउदुत्तमं ॥ एनाव्याघ्रंपीरषस्वजानाः ॥ सिꣳहꣳहिन्वंति

मह्युतेसौभंगाय ॥ समुद्रंनसुहुवंतस्थिवाꣳसं ॥ ममृज्यंतेद्वीपिनंमप्स्वंतः ॥ उदसावेंतुसूर्यः ॥ उ
दिदंमामकंवचः ॥ उदिंहिदेवसूर्य ॥ सहवग्नुनाममं ॥ अहंवाचोविवाचनं ॥ मयिवागंस्तुधर्णसिः
यंतुनदयोवर्षंतुपर्जन्याः ॥ सुपिप्पलाओषधयोभवंतु ॥ अन्नवतामोदनवंतामामिक्षवतां ॥ एषाꣳ
राजांभूयासं ॥ ४ ॥ स्वधायैत्वासवेनद्यौःसूर्यसमचं ॥ १६ ॥ येकेशिनःप्रथमाःसत्रमासंत ॥ ये
भिराभृतंयदिदंविरोचंते ॥ तेभ्योजुहोमिबहुधाघृतेनं ॥ रायस्पोषेणेमंवर्चसासꣳसृंजाथ ॥ नर्ते
ब्रह्मणस्तपंसोविमोकः ॥ द्विनाम्नींदीक्षावशिनीह्युग्रा ॥ प्रकेशाःसुवतेकांडिनोभवंति ॥ तेषांब्र
ह्मेदीशेवपनस्यनान्यः ॥ आरोहप्रोष्ठंविषहस्वशत्रून् ॥ अवांस्राग्दीक्षावशिनीह्युग्रा ॥ १ ॥ देहि
दक्षिणांप्रतिरस्वायुः ॥ अथांमुच्यस्ववरुणस्यपाशात् ॥ येनावपत्सविताक्षुरेणं ॥ सोमंस्यराज्ञोव
रुणस्यविद्वान् ॥ तेनंब्रह्माणोवपतेदमस्योर्जेमं ॥ रय्यावर्चसासꣳसृंजाथ ॥ मानेकेशानतुंगाद्वर्चएं
तत् ॥ तथांधाताकरोतुते ॥ तुभ्यमिंद्रोबृहस्पतिः ॥ सवितावर्चआदंधात् ॥ २ ॥ तेभ्योनिधा
नंबहुधाव्यैच्छंन् ॥ अंतराद्यावांपृथिवीअपःसुवः ॥ दर्भस्तंबेवीर्यकृतेनिधायं ॥ पौꣳस्येनेमंव
र्चसासꣳसृंजाथ ॥ बलंतेबाहुवो.संवितादंधातु ॥ सोमंस्त्वानक्तुपयंसाघृतेनं ॥ स्त्रीषुरूपमंश्वि

नैतंनिर्धत्तं ॥ पौꣳस्येनेमंवर्चसासꣳसृजाथ ॥ यत्सीमंतंकंकतस्तेलिलेखं ॥ यद्वाक्षुरः
परिववर्जवपꣳस्ते ॥ स्त्रीषुरूपमश्विनैतंनिर्धत्तं ॥ पौꣳस्येनेमꣳसꣳसृजाथोवीर्येण ॥ ३ ॥ अवांस्ताग्दीक्षा
वशिनीह्युग्रादंधाद्ववर्जवपꣳस्तेद्वेचं ॥ १७ ॥ ॥ येकेशिनोनर्त्तमातेबलंतेयत्सोमंतं ॥ इंद्रंवैस्वा
विशोमरुतोनापाचायन् ॥ सोनंपचाय्यमानएतंविघनमपश्यत् ॥ तमाहरत् ॥ तेनायजत ॥ तेनैवास्मा
तꣳसꣳस्तंभंव्यहन् ॥ यद्व्यहन् ॥ तद्विघनस्यविघनत्वं ॥ विपाप्मानंभ्रातृव्यꣳहते ॥ यएतेनयजंते ॥
यउचैनमेवंवेद ॥ १ ॥ यꣳराजानंविशोनापचायेयुः ॥ योवाब्राह्मणस्तमसापाप्मनाप्रावृतःस्यात् ॥
सएतेनयजेत ॥ विघनेनैवैनान्द्विहत्य ॥ विशामाधिपत्यंगच्छति । तस्यद्वेद्वादशेस्तोत्रेभवतः ॥ द्वेचतुर्विꣳशे ॥
औद्भिद्यमेवतत् ॥ एतद्वैक्षत्रस्यौद्भिद्यं ॥ यदस्मैस्वाविशोबलिꣳहरंति ॥ २ ॥ हरंत्यस्मैविशोबलिं ॥ ऐन
मप्रतिख्यातंगच्छति ॥ यएवंवेद ॥ प्रबाहुग्वाअग्रेक्षत्राण्यातेपुः ॥ तेषामिंद्रःक्षत्राण्यादत्त ॥ नवाइमानिक्ष
त्राण्यभूवन्निति ॥ तन्नक्षत्राणांनक्षत्रत्वं ॥ आश्रेयंसोभ्रातृव्यस्यतेजइंद्रियंदत्ते ॥ यएतेनयजंते ॥ यउं
चैनमेवंवेद ॥ ३ ॥ तद्यथाहवैसंचक्रिणौकष्णुकाउपावहितौस्यातां ॥ एवमेतौयुग्मंतौस्तोमौ ॥ अयुक्षु
स्तोमेषुक्रियेते ॥ पाप्मनोपहत्यै ॥ अपवाप्मानंभ्रातृव्यꣳहते ॥ यएतेनयजते ॥ यउचैनमेवंवेद ॥ तद्यथा
हवैसूतग्रामण्यः ॥ एवंछंदाꣳसि ॥ तेष्वसावादित्योबृहतीरभ्यूढः ॥ ४ ॥ सतोबृहतीषुस्तुवतेसतोबृ

कृ०य० ॥६०॥

हन् ॥ प्रजयापशुभिरसानीत्येव ॥ व्यतिषक्ताभिस्तुवते ॥ व्यतिषक्तंवैक्षत्रंविशा ॥ विशैवैनंक्षत्रेणव्यति
षजति ॥ व्यतिषक्ताभिस्तुवते ॥ व्यतिषक्तोवैग्रामणीःसंजातैः ॥ सजातैरेवैनंव्यतिषजति ॥ व्यतिष
क्ताभिस्तुवते ॥ व्यतिषक्तोवैपुरुषःपाप्मभिः ॥ व्यतिषक्ताभिरेवास्यपाप्मनोनुदते ॥ ५ ॥ वेदहरंत्ये
नमेवंवेदाभ्यूढःपाप्मभिरेकंच ॥ १८ ॥ त्रिवृद्यदाग्नेयोग्निमुखाह्यृद्धिर्यदाग्नेयाआग्नेयोनवैसोमेनयोवै
सोमेनैषगोसवःसिꣳहेभिप्रेहिमित्रवर्धनःप्रजापतिस्ताःसृष्टाओदनंप्रजापतिरकामयतबहोर्भूयानगस्त्यो
स्याजरासास्तिष्ठाहरीप्रजापतिःपशून्व्याघ्रोभिप्रेहिवृत्रहंतमोयेकेशिनइंद्रवाअष्टादश ॥ १८ ॥ त्रिवृद्योवै
सोमेनायुरसिविश्वायुर्बहुर्भवतितिष्ठाहरीरथआयंभातुतेभ्योनिधानꣳषट्षष्टिः ॥ ६६ ॥ हरिःॐ ॥
पीवोअन्नाꣳरयिवृधःसुमेधाः ॥ श्वेतःसिषक्तिनियुतामभिश्रीः ॥ तेवायवेसमनसोवितस्थुः ॥ विश्वे
न्नरःस्वपत्यानिचक्रुः ॥ रायेनुयंजज्ञतूरोदसीउभे ॥ रायेदेवीधिषणाधातिदेवं ॥ अधावायुंनियुतःसश्च
तस्वाः ॥ उतश्वेतंवसुधितिंनिरेके ॥ आवायोप्रयाभिः ॥ प्रवायुमच्छाबृहतीमनीषा ॥ १ ॥ बृहद्र
यिंविश्ववाराꣳरथप्रां ॥ द्युतद्यामानियुतःपत्यमानः ॥ कविःकविमियक्षसिप्रयज्यो ॥ आनोनियुद्भिः
शतिनीभिरध्वरं ॥ सहस्रिणीभिरुपयाहियज्ञं ॥ वायोअस्मिन्हविषिमादयस्व ॥ यूयंपातस्वस्तिभिः

तै०ब्रा० ॥६०॥

सदानः ॥ प्रजापतेनत्वदेतान्यन्यः ॥ विश्वाजातानिपरितावभूव ॥ यत्कामास्तेजुहुमस्तन्नोअस्तु ॥
॥२॥वयंस्यामपतयोरयीणां ॥ रयीणांपतिंयजतंबृहतं ॥ अस्मिन्भरेनृतमंवाजसातौ ॥ प्रजापतिंप्रथ
मजामृतस्य ॥ यजामदेवमधिनोब्रवीतु ॥ प्रजापतेत्वंनिधिपाःपुराणः ॥ देवानांपिताजनिताप्रजानां ॥
पतिर्विश्वस्यजगतःपरस्याः ॥ हविर्नोदेवविहवेजुषस्व ॥ तवेमेलोकाःप्रदिशोदिशश्च ॥ ३ ॥ पराव
तोनिवतउद्वतश्च ॥ प्रजापतेविश्वसृज्जीवधन्यइदंनोदेव ॥ प्रतिहर्यहव्यं ॥ प्रजापतिंप्रथमंयज्ञि
यानां ॥ देवानामग्रेयजतंयजध्वं ॥ सनोददातुद्रविणंसुवीर्यं ॥ रायस्पोषंविष्यंतुनाभिमस्मे ॥ योरा
यईशेशतदायउक्थ्यः ॥ यःपशूनांरक्षिताविष्ठितानां ॥ प्रजापतिःप्रथमजाऋतस्य ॥ ४ ॥ सहस्रधा
माजुषताहविर्नः ॥ सोमापूषणेमौदेवौ ॥ सोमापूषणारजसोविमानं ॥ सप्तचक्रंरथमविश्वमिन्वं ॥
विषूवृतंमनसायुज्यमानं ॥ तंजिन्वथोवृषणापंचरश्मिं ॥ दिव्यन्यःसदनंचक्रउच्चा ॥ पृथिव्यामन्योअ
ध्यंतरिक्षे ॥ तावस्मभ्यंपुरुवारंपुरुक्षुं ॥ रायस्पोषंविष्यंतांनाभिमस्मे ॥ ५ ॥ धियंपूषाजिन्वतुविश्व
मिन्वः ॥ रयिंसोमोरयिपतिर्दधातु ॥ अवतुदेव्यदितिरनर्वा ॥ बृहद्वदेमविदथेसुवीराः ॥ वि
श्वान्यन्योभुवनाजजानं ॥ विश्वमन्योअभिचक्षाणएति ॥ सोमापूषणाववतंधियंमे ॥ युवभ्यांविश्वाः

पृतनाजयेम ॥ उदुत्तमंवरुणपाशमस्मत् ॥ यत्किंचेदंकितवासः ॥ अवंतेहेडस्तत्वायामि ॥ आदित्यानामवंसानदक्षिणा ॥ धारयंतआदित्यासस्तिस्रोभूमीर्धारयन् ॥ यज्ञोदेवानांशुचिरपः ॥ ६ ॥ मनीषास्तुचर्त्तस्यारमेकितवासश्चत्वारिंच ॥ १ ॥ तेशुक्रासःशुचयोरश्मिवंतः ॥ सीदन्नादित्याअधिबर्हिषिप्रिये ॥ कामेनदेवाःसरथंदिवोनः ॥ आयांतुयज्ञमुपनोजुषाणाः ॥ तेसूनवोअदितेःपीवसामिषं ॥ घृतंपिन्वत्प्रतिहर्यन्नृतेजाः ॥ प्रयज्ञियायजमानाययेमुरे ॥ आदित्याःकाममपितुमंतमस्मे ॥ आनःपुत्राअदितेर्यातुयज्ञं ॥ आदित्यासःपथिभिर्देवयानैः ॥ १ ॥ अस्मेकामंदाशुषेसन्नमंता ॥ पुरोडाशंघृतवंतंजुषंतां ॥ स्कभायतनिर्ऋतिंसेधतामतिं ॥ प्ररश्मिभिर्यतमानाअमृध्राः ॥ आदित्याःकामप्रयतांवषट्कृतिं ॥ जुषध्वंनोहव्यदातिंयजत्राः ॥ आदित्यान्काममवमेहुवेम ॥ येभूतानिजनयंतोविचिख्युः ॥ सीदंतुपुत्राअदितेरुपस्थं ॥ स्तीर्णबर्हिर्हविरद्यायदेवाः ॥ २ ॥ स्तीर्णबर्हिःसीदतायज्ञेअस्मिन् ॥ ध्राजाःसेधंतोअमतिंदुरेवां ॥ अस्मभ्यंपुत्राआदितेःप्रयंसत ॥ आदित्याःकामंहविषोजुषाणाः ॥ अग्नेनयसुपथारायेअस्मान् ॥ विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनः ॥

भूयिष्ठांतेनमंउक्तिंविधेम ॥ प्रवःशुक्रायभानवेभरध्वं ॥ हव्यंमतिंचाग्नयेसुपूतं ॥ १ ॥ योदैव्यां
निमानुषाजनूꣳषि ॥ अंतर्विश्वानिविद्मनाजिगाति ॥ अच्छागिरोमतयोदेवयंतीः ॥ अग्निंयंतिद्रविं
णंभिक्षमाणाः ॥ सुसंदृशꣳसुप्रतीकꣳस्वंचं ॥ हव्यवाहमरतिंमानुषाणां ॥ अग्नेत्वमस्मद्युयोध्यमीं
वाः ॥ अनंग्नित्राअभ्यंमंतकृष्टीः ॥ पुनरस्मभ्यꣳसुवितायदेव ॥ क्षांविश्वेभिरजरेभिर्यजत्र ॥ ४ ॥ अ
ग्नेत्वंपारयानव्योअस्मान् ॥ स्वस्तिभिरतिदुर्गाणिविश्वा ॥ पूश्चपृथ्वीबहुलानउर्वी ॥ भवांतोकायतन
यायशंयोः ॥ प्रकारवोमननावच्यमाना ॥ देवद्रीचीनयथदेवयंतः ॥ दक्षिणावाड्वाजिनीप्राच्येति ॥
हविर्भरंत्यग्नयेघृताची ॥ इंद्रंनरोयुजेरथं ॥ जगृभ्णातेदक्षिणमिंद्रहस्तं ॥ ५ ॥ व
सूयवोवसुपतेवसूनां ॥ विद्माहित्वागोपतिꣳशूरगोनां ॥ अस्मभ्यंचित्रंवृषणꣳरयिंदाः ॥ तवेदंविश्व
मभितःपशव्यं ॥ यत्पश्यसिचक्षसासूर्यस्य ॥ गवामसिगोपतिरेकइंद्र ॥ भक्षीमहितेप्रयतस्यवस्वः ॥
समिंद्रणोमनसानेषिगोभिः ॥ सꣳसूरिभिर्मघवन्त्सꣳस्वस्त्या ॥ संब्रह्मणादेवकृतंयदस्ति ॥ ६ ॥ सं
देवानाꣳसुमत्यायज्ञियानां ॥ आराच्छत्रुमपबाधस्वदूरं ॥ उग्रोयःशंवःपुरुहूततेन ॥ अस्मेधेहि

यवमद्गोमदिंद्र ॥ कृधीधियंजरित्रेवाजरत्नां ॥ आवेधसꣳसाहिशुचिः ॥ बृहस्पतिःप्रथमंजायमानः ॥
महोज्योतिषःपरमेव्योमन् ॥ सप्तास्यस्तुविजातोरवेण ॥ विसप्तरश्मिरधमत्तमाꣳसि ॥७॥ बृहस्पतिः
समंजयद्वसूनि ॥ महोव्रजान्गोमतोदेवएषः ॥ अपःसिषासन्त्सुवरप्रतीतः ॥ बृहस्पतिर्हंत्यमित्रं
मर्कैः ॥ बृहस्पतेपर्यैवापित्रे ॥ आनोदिवःपावीरवी ॥ इमाजुह्वानायस्तेस्तनः ॥ सरस्वत्यभिनोनेषि ॥ इ
यꣳशुष्मेभिर्बिसखाइवारुजत् ॥ सानुगिरीणांतविषेभिरूर्मिभिः ॥ पारावद्घ्नीमवसेसुवृक्तिभिः ॥ सर
स्वतीमाविवासेमधीतिभिः ॥ ८ ॥ देवयानैर्देवाःसुपूतंयजत्रहस्तमस्तितमाꣳस्यूर्मिभिर्द्वेच ॥ २ ॥
सोमोधेनुꣳसोमोअर्वंतमाशुं ॥ सोमोवीरंकर्मण्यंददातु ॥ सादन्यंविदथ्यꣳसभेयं ॥ पितुश्रवणंयो
ददाशदस्मै ॥ अषाढंयुत्सुत्वꣳसोमक्रतुभिः ॥ यातेधामानिहविषायजंति ॥ त्वमिमाओषधीःसो
मविश्वाः ॥ त्वमपोअजनयस्त्वंगाः ॥ त्वमाततंथोर्वंतरिक्षं ॥ त्वंज्योतिषावितमोववर्थ ॥ १ ॥ यातेधा
मानिदिवियापृथिव्यां ॥ यापर्वतेष्वोषधीष्वप्सु ॥ तेभिर्नोविश्वैःसुमनाअहेडन् ॥ राजन्त्सोमप्रति
हव्यागृभाय ॥ विष्णोर्नुकंतदस्यप्रियं ॥ प्रतद्विष्णुः ॥ परोमात्रयातनुवावृधान ॥ नतेमहित्वमन्वश्नुव
ति ॥ उभेतेविद्मरजसीपृथिव्याविष्णोदेवत्वं ॥ परमस्यवित्से ॥ २ ॥ विचक्रमेत्रिर्देवः ॥ आतेमहोयोजा

तएव ॥ अभिगोत्राणि॥ आभिस्पृधोमिथतीरारिषण्यन् ॥ अमित्रस्यव्यथयामन्युमिंद्र ॥ आभिर्विश्वां
अभियुजोविषूचीः ॥ आर्यायविशोवतारीर्दासीः ॥ अयःशृण्वेअधजयन्नुतघ्नन् ॥ अयमुतप्रकृणुतेयु
धागाः ॥ यदासत्यंकृणुतेमन्युमिंद्रः ॥ ३ ॥ विश्वंदृढंभयतएजंदस्मात् ॥ अनुस्वधामक्षरन्नापोअ
स्य ॥ अवर्धतमध्यआनाव्यानां ॥ सध्रीचीनेनमनसातमिंद्रओजिष्ठेन ॥ हन्मनाहन्नभिद्यून् ॥ म
रुत्वंतंवृषभंवावृधानं ॥ अकवारिंदिव्यंशासमिंद्रं ॥ विश्वासाहमवसेनूतनाय ॥ उग्रंसहोदा
मिहतंहुवेम ॥ जनिष्ठाउग्रःसहसेतुराय ॥ ४ ॥ मंद्रओजिष्ठोबहुलाभिमानः ॥ अवर्धन्निंद्रंमरु
तश्चिदत्र ॥ मातायद्वीरंदधनद्धनिष्ठा ॥ क्वस्यावोमरुतःस्वधासीत् ॥ यन्मामेकंसमधत्ताहिहत्ये ॥
अहंह्युग्रस्तविषस्तुविष्मान् ॥ विश्वस्यशत्रोरनमंवधस्नैः ॥ वृत्रस्यत्वाश्वसथादीषमाणाः ॥ वि
श्वेदेवाअजहुर्येसखायः ॥ मरुद्भिरिंद्रसख्यंतेअस्तु ॥ ५ ॥ अथेमाविश्वाःपृतनाजयासि ॥ वधीं
वृत्रंमरुतइंद्रियेण ॥ स्वेनभामेनतविषोबभूवान् ॥ अहमेतामनवेविश्वश्चंद्राः ॥ सुगाअपश्चकर
वज्रबाहुः ॥ सयोवृषावृष्ण्येभिःसमोकाः ॥ महोदिवःपृथिव्याश्चसम्राट् ॥ सतीनसत्वाहव्योभरेषु॥
मरुत्वान्नोभवत्विंद्रऊती ॥ इंद्रोवृत्रमतरद्वृत्रतूर्ये ॥ ६ ॥ अनाधृष्योमघवाशूरइंद्रः ॥ अन्वेनंविशो

अमर्तपूर्वीः ॥ अयꣳराजाजगतश्चर्षणीनां ॥ सएववीरःसउवीर्यावान् ॥ सएकराजोजगतःप
रस्पाः ॥ यदावृत्रमतरच्छूरइंद्रः ॥ अथाभवद्दमिताभिक्रतूनां ॥ इंद्रोयज्ञंवर्द्धयन्विश्ववेदाः ॥
पुरोडाशस्यजुषताꣳहविर्नः ॥ वृत्रंतीर्त्वादानवंवज्रबाहुः ॥ ७ ॥ दिशोदृꣳहदृꣳहिताहृꣳहणेन ॥
इमंयज्ञंवर्द्धयन्विश्ववेदाः ॥ पुरोडाशंप्रतिगृभ्णात्विंद्रः ॥ यदावृत्रमतरच्छूरइंद्रः ॥ अथैकराजो
अभवज्जनानां ॥ इंद्रोदेवान्छंबरहत्यआवत् ॥ इंद्रोदेवानामभवत्पुरोगाः ॥ इंद्रोयज्ञेहविषावावृ
धानः ॥ वृत्रतूर्नोअभयꣳशर्मयꣳसत् ॥ यःसप्तसिंधूꣳरदधात्पृथिव्यां ॥ यःसप्तलोकानकृ
णोद्दिशश्च ॥ इंद्रोहविष्मान्त्सगणोमरुद्भिः ॥ वृत्रतूर्नोयज्ञमिहोपयासत् ॥ ८ ॥ ववर्थीवित्सइंद्रस्तु
रायस्तुवृत्रतूर्येवज्रबाहुःपृथिव्यांत्रीणिच ॥ ३ ॥ इंद्रस्तरस्वानभिमातिहोग्रः ॥ हिरण्यवाशीरिषि
रःसुवर्षाः ॥ तस्यवयꣳसुमतौयज्ञियस्य ॥ अपिभद्रेसौमनसेस्याम ॥ हिरण्यवर्णोअभयंकृणोतु ॥ अ
भिमातिहेंद्रःपृतनासुजिष्णुः ॥ सनःशर्मत्रिवरूथंवियꣳसत् ॥ यूयंपातस्वस्तिभिःसदानः ॥ इं
द्रꣳस्तुहिवज्रिणꣳस्तोमपृष्ठं ॥ पुरोडाशस्यजुषताꣳहविर्नः ॥ १ ॥ हत्वाभिमातीःपृतनाःसहस्वा
न् ॥ अथाभयंकृणुहिविश्वतोनः ॥ स्तुहिशूरंवज्रिणमप्रतीतं ॥ अभिमातिहनंपुरुहूतमिंद्रं ॥ य

एकइच्छतपतिर्जनेषु ॥ तस्माइंद्रायहविराजुहोत ॥ इंद्रोदेवानामधिपाःपुरोहितः ॥ दिशांपतिरभ
वद्वाजिनीवान् ॥ अभिमातिहातांविषस्तुविष्मान् ॥ अस्मभ्यंचित्रंवृषणंरयिंदात् ॥ २ ॥ यइमेद्या
वापृथिवीमहित्वा ॥ बलेनाद्दंहदभिमातिहेंद्रः ॥ सनोहविःप्रतिगृभ्णातुरातये ॥ देवानांदेवोनिधि
पानोअव्यात् ॥ अनंवस्तेरथंवृष्णेयत्ते ॥ इंद्रस्यनुवीर्याण्यहन्नहिं ॥ इंद्रोयातोवसितस्यराजा ॥ शम
स्यचशृंगिणोवज्रबाहुः ॥ सेदुराजाक्षेतिचर्षणीनां ॥ अराननेमिःपरितावभूव ॥ ३ ॥ अभिसिध्मो
अजिगादस्यशत्रून् ॥ वितिग्मेनवृषभेणापुरोभेत् ॥ संवज्रेणासृजद्वृत्रमिंद्रः ॥ प्रस्वांमतिमतिरच्छाशंदा
नः ॥ विष्णुंदेवंवरुणमूतयेभगं ॥ मेदंसादेवावपयायजध्वं ॥ तानोयज्ञमागतंविश्वधेना ॥ प्रजावदु
स्मेद्रविणेहधत्तं ॥ मेदंसादेवावपयायजध्वं ॥ विष्णुंचदेवंवरुणंचरातिं ॥ ४ ॥ तानोअमीवाअपबा
धमानौ ॥ इमंयज्ञंजुषमाणावुपेतं ॥ विष्णूवरुणायुवमध्वरायनः ॥ विशेजनायमहिशर्मयच्छतं ॥
दीर्घप्रयज्यूहविषावृधाना ॥ ज्योतिषारातीर्दहतंतमांसि ॥ ययोरोजसास्कभितारजांसि ॥ वी
र्येभिर्वीरतमाशविष्ठा ॥ यापत्येतेअप्रतीत्तासहोभिः ॥ विष्णूअगन्वरुणापूर्वहूतौ ॥ ५ ॥ विष्णू
वरुणावभिशस्तिपावां ॥ देवायजंतहविषाघृतेनं ॥ अपामीवांसेधतंरक्षसंश्च ॥ अथाधत्तं

यजमानायशंयोः ॥ अꣳहोमुचावृषभासुप्रतूर्ती ॥ देवानांदेवतमाशचिष्ठा ॥ विष्णूवरुणाप्रतिहर्यतंनः ॥ इ
दंनराप्रयतमूतयेहविः ॥ महीनुद्यावापृथिवीइहज्येष्ठे ॥ रुचाभवताꣳशुचयद्भिरर्कैः ॥ ६ ॥ यत्सींवरिष्ठेबृ
हतीविमिन्वन् ॥ नृवद्ध्योक्षापप्रथानेभिरेवैः ॥ प्रपूर्वजेपितरानव्यसीभिः ॥ गीर्भिःकृणुध्वꣳसदनेऋतस्य ॥
आनोद्यावापृथिवीदैव्येन ॥ जनेनयातंमहिवांवरूथं ॥ सइत्स्वपाभुवनेष्वास ॥ यइमेद्यावापृथिवीज
जान ॥ उर्वीगंभीरेरजसीसुमेके ॥ अवꣳशेधीरःशच्यासमैरत् ॥ ७ ॥ भूरिंद्वेअचरंतीचरंतं ॥ पद्वंतं
गर्भमपदीदधाते ॥ नित्यंनसूनुंपित्रोरुपस्थे ॥ तंपिपृतꣳरोदसीसत्यवाचं ॥ इदंद्यावापृथिवीसत्यमस्तु ॥
पितर्मातर्यदिहोपब्रुवेवां ॥ भूतंदेवानामवमेअवोभिः ॥ विद्यामेषंवृजनंजीरदानुं ॥ ऊर्वीपृथ्वीबहुले
दूरेअंते ॥ उपब्रुवेनमसायज्ञेअस्मिन् ॥ दधातेयेसुभगेसुप्रतूर्ती ॥ द्यावारक्षतंपृथिवीनोअभ्वात् ॥ याज
ताओषधयोतिविश्वाःपरिष्ठाः ॥ याओषधयःसोमराज्ञीरश्वावतीꣳसोमवतीं ॥ ओषधीरितिमातरोन्या
वोअन्यामवतु ॥ ८ ॥ हविर्नोदाद्बभूवरातिंपूर्वहूतावर्कैरैरदस्मिन्पंचच ॥ ४ ॥ ॥ शुचिंनुस्तोमꣳश्न
थद्वृत्रं ॥ उभावामिंद्राग्नीप्रचर्षणिभ्यः ॥ आवृत्रहणागीर्भिर्विप्रः ॥ ब्रह्मणस्पतेत्वमस्ययंता ॥ सूक्तस्यबोधि

तनंयंचजिन्व ॥ विश्वंतऋद्रंयदवंतिदेवाः ॥ बृहद्वदेमविदथेसुवीराः॥सईंश्सत्येभिःसखिभिःशुचद्भिः ॥ गोधायसंविधनसैरंतर्द्दत् ॥ ब्रह्मणस्पतिर्वृषभिर्वराहैः॥ १ ॥ घर्मस्वेदेभिर्द्रविणंव्यानट् ॥ ब्रह्मण स्पतेरभवद्यथावशं ॥ सत्योमन्युर्महिकर्माकरिष्यतः ॥ योगाउदाजत्सदिवेविचाभजत् ॥ महीवरी तिःशवसासरत्पृथक् ॥ इंधानोअग्निंवनवद्वनुष्यतः ॥ कृतब्रह्माशूशुचद्रातहव्यइत् ॥ जातेनजा तमतिसृप्रसृंश्सते ॥ यंयंयुजंकृणुतेब्रह्मणस्पतिः ॥ ब्रह्मणस्पतेसुयमस्यविश्वहा ॥ २ ॥ रायस्यां मरथ्योविवस्वतः ॥ वीरेषुवीराश्उपपृङ्धिनस्त्वं ॥ यदीशानोब्रह्मणावेषिमेहवं ॥ सइज्जनेनसावि शासजन्मना ॥ सपुत्रैर्वाजंभरतेधनानृभिः ॥ देवानांयःपितरमाविवासति ॥ श्रद्धामनाहविषाब्र ह्मणस्पतिं ॥ यास्तेपूषन्नावोअंतः ॥ शुक्रंतेअन्यत्पूषेमाआशाः ॥ प्रपथेपथामजनिष्टपूषा ॥ ३ ॥प्र पथेदिवःप्रपथेपृथिव्याः ॥ उभेअभिप्रियतमेसधस्थे ॥ आचपराचचरतिप्रजानन् ॥ पूषासुबंधुर्दिव आपृथिव्याः ॥ इळस्पतिर्मघवादस्मवर्चाः ॥ तंदेवासोअददुःसूर्यायै ॥ कामेनकृतंतवसंस्वंचं॥अजा श्वःपशुपावाजबस्त्यः ॥ धियंजिन्वोविश्वेभुवनेअर्पितः ॥ अष्ट्रांपूषाशिथिरामुद्वरीवृजत् ॥ ४ ॥ सं चक्षाणोभुवनादेवईयते ॥ शुचीवोहव्यामरुतःशुचीनां ॥ शुचिंहिनोम्यध्वरंशुचिभ्यः ॥

ऋतेनंसत्यमृतसापआयन् ॥ शुचिंजन्मानःशुचंयःपावकाः ॥ प्रचित्रमर्कंगृणतेतुरायं ॥
मारुंतायस्वतंवसेभरध्वं ॥ येसहांꣳसिसहंसासहंते ॥ रेजंतेअग्नेपृथिवीमखेभ्यः ॥ अꣳसेष्वामरुतः
खादयोवः ॥ ५ ॥ वक्षःसुरुक्माउपशिश्रियाणाः ॥ विविद्युतोनवृष्टिभीरुचानाः ॥ अनुंस्वधामायुधै
र्यच्छमानाः ॥ यावःशर्मंशशमानायसंति ॥ त्रिधातूंनिदाशुषेयच्छताधिं ॥ अस्मभ्यंतानिमरुतोवियं
त ॥ रयिंनोधत्तवृषणःसुवीरं ॥ इमेतुरंमरुतोरामयंति ॥ इमेसहः सहंसआनमंति ॥ इमेशꣳसंवनुष्य
तोनिपांति ॥ ६ ॥ गुरुद्वेषोअररुषेदधंति ॥ अराइवेदचरमाअहेव ॥ प्रप्रंजायंतेअकंवामहोभिः ॥
पृश्नेःपुत्राउंपमासोरभिष्ठाः ॥ स्वयांमत्यामरुतःसंमिमिक्षुः ॥ अनुंतेदायिमहइंद्रियायं ॥ सत्रातेविश्व
मनुंवृत्रहत्ये ॥ अनुंक्षत्रमनुसहोंयजत्र ॥ इंद्रदेवेभिरनुंतेनृषह्ये ॥ यइंद्रशुष्मोमघवंतेअस्ति ॥ ७ ॥ शि
क्षासखिंभ्यःपुरुहूतनृभ्यः ॥ त्वꣳहिदृढामंघवन्विचेताः ॥ अपांवृधिपरिंवृत्तिंनराधंः ॥ इंद्रोराजाजगत
श्चर्षणीनां ॥ अधिक्षमिविषुंरूपंयदस्तिं ॥ ततोंददातुदाशुषेवसूंनि ॥ चोदद्राधउपंस्तुतश्चिदर्वाक् ॥
तमुंष्टुहियोअभिभूत्योजाः ॥ वन्वन्नवातःपुरुहूतइंद्रः ॥ अषांढमुग्रꣳसहंमानमाभिः ॥ ८ ॥ गीर्भिर्व
र्द्धवृषभंचर्षणीनां ॥ स्थूरस्यंरायोबृहतोयईशे ॥ तमुंष्टवामविदथेष्विंद्रं ॥ योवायुनाजयंतिगोमंतीषु ॥

प्रघृंष्णुयानंयतिवस्योअच्छं ॥ आतेशुष्मोवृषभएतुपश्चात् ॥ ओत्तरादंधरागापुरस्तात् ॥ आविश्वतो
अभिसमेंत्वर्वाङ् ॥ इंद्रद्युम्नꣳसुवर्वद्धेंह्यस्मे ॥ ९ ॥ वराहैर्विश्वहांजनिष्टपूषोद्वरीवृजत्खादयोवःपां
त्यस्त्याभिर्नवंच ॥ ५ ॥ ॥ आदेवोयांतुसवितासुरत्नः ॥ अंतरिक्षप्रावहमानोअश्वैः ॥ हस्तेदधानो
नर्यापुरूणि ॥ निवेशयंचप्रसुवंचभूम ॥ अभीवृतंकृशनैर्विश्वरूपं ॥ हिरंण्यशम्यंयजतोबृहंतं ॥ आ
स्थाद्रथंꣳसविताचित्रभानुः ॥ कृष्णारजांꣳसितविषांदधानः ॥ सघानोदेवःसवितासवायं ॥ आसांवि
षद्वसुंपतिर्वसूंनि ॥ १ ॥ विश्रयमाणोअमंतिमुरूचीं ॥ मर्त्तभोजंनमधंरासतेन ॥ विजनांछ्यावाःशि
तिपादोअरव्यन् ॥ रथꣳहिरंण्यप्रउगंवहंतः ॥ शश्वाद्विशःसवितुर्दैव्यस्य ॥ उपस्थेविश्वाभुवनानितस्थुः
॥ विसुंपर्णोअंतरिक्षाण्यरव्यत् ॥ गभीरवेपाअसुरःसुनीथः ॥ क्वेदानीꣳसूर्यःकश्चिकेत ॥ कतमांद्याꣳर
श्मिरस्यातंतान ॥ २ ॥ भगंधियंवाजयंतःपुरंधिं ॥ नराशꣳसोग्नास्पतिर्नोअव्यात् ॥ आयेवामस्यंसं
गथेरयीणां ॥ प्रियादेवस्यसवितुःस्याम ॥ आनोविश्वेअस्कांगमंतुदेवाः ॥ मित्रोअर्यमावरुंणःसजो
षाः ॥ भुवन्यथानोविश्वेवृधासः ॥ करंन्त्सुषाहांविथुरंनशवः ॥ शंनोदेवाविश्वदेवाभवंतु ॥ शꣳस
रंस्वतीसहधीभिरंस्तु ॥ ३ ॥ शमंभिषाचःशमुरातिषाचः ॥ शंनोदिव्याःपार्थिवाःशंनोअप्याः ॥ येसं

वितुःसत्यसंवस्यविश्वे ॥ मित्रस्यंव्रतेवरुणस्यदेवाः ॥ तेसौभंगंवीरवद्गोमदप्नः ॥ दधातनद्रविणंचित्र
मस्मे ॥ अग्नेयाहिदूत्यंवारिषेण्यः ॥ देवाँ॒अच्छांब्रह्मकृतांगणेन ॥ सरस्वतींमरुतोअश्विना
पः ॥ यक्षिदेवान्रत्नधेयांयविश्वान् ॥ ४ ॥ द्यौःपितःपृथिविमातरध्रुक् ॥ अग्नेभ्रातर्वसवो
मृडतानः ॥ विश्वआदित्याअदितेसजोषाः ॥ अस्मभ्य॒शर्मबहुलंवियंत ॥ विश्वेदेवाःशृणुते
म॒हवंमे ॥ येअंतरिक्षेयउपद्यविष्ठ ॥ येअग्निजिह्वाउतवायजत्राः ॥ आसद्यास्मिन्बर्हिषिमादय
ध्वं ॥ आवांमित्रावरुणाहव्यजुष्टिं ॥ नमसादेवाववसाववृत्यां ॥ ५ ॥ अस्माकंब्रह्मपृतनासुसह्या
अस्माकं ॥ वृष्टिर्दिव्यासुपारा ॥ युवंवस्त्राणिपीवसावसाथे ॥ युवोरच्छिद्रामंतवोहसर्गाः ॥ अवांति
रतमनृतानिविश्वा ॥ ऋतेनमित्रावरुणासचेथे ॥ तत्सुवांमित्रावरुणामहित्वं ॥ ईर्मातस्थुषीरहंभिर्दुदु
हे ॥ विश्वाःपिन्वथस्वसरस्यधेनाः ॥ अनुवामेकःपविरावर्वर्त्ति ॥ ६ ॥ यद्व॒हिष्ठंनातिविदेसुदानू ॥
अच्छिद्र॒शर्मभुवनस्यगोपा ॥ ततोनोमित्रावरुणाववीष्टं ॥ सिषासंतोजीगिवा॒सःस्याम ॥ आनो
मित्रावरुणाहव्यदातिं ॥ घृतैर्गव्यूतिमुक्षतमिडाभिः ॥ प्रतिवामत्रवरमाजनाय ॥ पृणीतमुद्रोदिव्यस्य
चारोः ॥ प्रबाहवासिसृतंजीवसेनः ॥ आनोगव्यूतिमुक्षतंघृतेन ॥ ७ ॥ आनोजनेश्रवयतंयुवाना ॥

श्रुतंमेमित्रावरुणाहवेमा ॥ इमारुद्रायस्थिरधन्वनेगिरः ॥ क्षिप्रेषवेदेवायस्वधाम्ने ॥ अषाढायसहमा
नायमीढुषे ॥ तिग्मायुधायभरताशृणोतन ॥ त्वादत्तेभीरुद्रशंतमेभिः ॥ शतꣳहिमाअशीयभेषजेभिः ॥
व्यस्मद्द्वेषोवितरंव्यꣳहः ॥ व्यमीवाꣳश्चातयस्वाविषूचीः ॥ ८ ॥ अर्हन्बिभर्षिसायकानिधन्वार्हन्निष्कंयजतंविश्वरूपं ॥ अर्हन्निदंदयसेविश्वमभ्वंनवाओजीयोरुद्रत्वदस्ति ॥ आते
पितर्मरुताꣳसुम्नमेतु ॥ मानःसूर्यस्यसंदृशोयुयोथाः ॥ अभिनोवीरोअर्वतिक्षमेत ॥ प्रजायेमहिरु
द्रप्रजाभिः ॥ एवाबभ्रोवृषभचेकिताना ॥ यथादेवनहृणीषेनहꣳसि ॥ हवनश्रून्नोरुद्रेहबोधि ॥ बृ
हद्वदेमविदथेसुवीराः ॥ परिणोरुद्रस्यहेतिःस्तुहिश्रुतं ॥ मीढुष्टमार्हन्बिभर्षि ॥ त्वमग्नेरुद्रआवोराजा
नं ॥ ९ ॥ वसूनिततानास्तुविश्वान्ववृत्यांवर्वर्तिघृतेनविषूचीःश्रुतंद्वेचं ॥ ६ ॥ ॥ सूर्योदे
वीमुषसꣳरोचमानामर्यः ॥ नयोषामभ्येतिपश्चात् ॥ यत्रानरोदेवयंतोयुगानि ॥ वितन्वतेप्रतिभद्राय
भद्रं ॥ भद्राअश्वाहरितःसूर्यस्य ॥ चित्राएदग्वाअनुमाद्यासः ॥ नमस्यंतोदिवआपृष्ठमस्थुः ॥ परिद्या
वापृथिवीयंतिसद्यः ॥ तत्सूर्यस्यदेवत्वंतन्महित्वं ॥ मध्याकर्त्तोर्विततꣳसंजभार ॥ १ ॥ यदेदयुक्त
हरितःसधस्थात् ॥ आद्रात्रीवासस्तनुतेसिमस्मै ॥ तन्मित्रस्यवरुणस्याभिचक्षे ॥ सूर्योरूपंकृणुतेद्योरु
पस्थे ॥ अनंतमन्यद्रुशदस्यपाजः ॥ कृष्णमन्यद्धरितःसंभरंति ॥ अद्यादेवाउदितासूर्यस्य ॥ निरꣳह

सः पिपृतां निरवद्यात् ॥ तन्नो मित्रो वरुणो मामहंतां ॥ अदितिः सिंधुः पृथिवी उत द्यौः ॥ २ ॥ दिवो रुक्म उरुचक्षा उदेति ॥ दूरेअर्थस्तरणिर्भ्राजमानः ॥ नूनं जनाः सूर्येण प्रसूताः ॥ आयन्नर्थानि कृणवन्नपांꣳसि ॥ शंनो भव चक्षसा शन्नो अन्हा ॥ शं भानुना शꣳहिमा शं वृणेन ॥ यथा शमस्मै शमसं दुरोणे ॥ तत्सूर्य द्रविणं धेहि चित्रं ॥ चित्रं देवानामुदगादनीकं ॥ चक्षुर्मित्रस्य वरुणस्याग्नेः ॥ ३ ॥ आप्रा द्यावापृथिवी अंतरिक्षं ॥ सूर्य आत्मा जगतस्तस्थुषश्च ॥ त्वष्टा दधत्तन्नस्तुरीपं ॥ त्वष्टा वीरं पिशंगरूपः ॥ दशेमं त्वष्टुर्जनयंत गर्भं ॥ अतंद्रासो युवतयो बिभर्त्रं ॥ तिग्मानीकꣳस्वयशसं जनेषु ॥ विरोचमानं परिषीं नयंति ॥ आविष्ट्येहां वर्द्धते चारुरासु ॥ जिह्मानामूर्ध्वः स्वयशा उपस्थे ॥ ४ ॥ उभे त्वष्टुर्बिभ्यतुर्जायमानात् ॥ प्रतीची सिꣳहं प्रति जोषयेते ॥ मित्रो जनान्प्रसमित्र ॥ अयं मित्रो नमस्यः सुशेवः ॥ राजा सुक्षत्रो अजनिष्ट वेधाः ॥ तस्य वयꣳसुमतौ याज्ञियस्य ॥ अपि भद्रे सौमनसे स्याम ॥ अनमीवास इडया मदंतः ॥ मितज्ञवो वरिमन्ना पृथिव्याः ॥ आदित्यस्य व्रतमुपक्षयंतः ॥ ५ ॥ वयं मित्रस्य सुमतौ स्याम ॥ मित्रं न ईꣳशिम्या गोषु गव्यवत् ॥ स्वाधियो विदथे अप्स्वजीजनन् ॥ अरेजयताꣳरोदसी पाजसा गिरा ॥ प्रति प्रियं यजतं जनुषामवः ॥ महाꣳआदित्यो नमसोपसद्यः ॥ यातयज्जनो गृणते सुशेवः ॥ तस्मा एतत्पन्यतमाय जुष्टं ॥ अग्नौ मित्राय हु

विराजुंहोत ॥ आवाꣳरथोरोदंसीवद्बधानः ॥ ६ ॥ हिरण्ययोवृषभिर्यात्वश्वैः ॥ घृतवर्त्तनिःपविभीरु
चानः ॥ इषांवोढानृपतिर्वाजिनीवान् ॥ सपप्रथानोअभिपंचभूमं ॥ त्रिवंधुरोमनसायांतुयुक्तः ॥ वि
शोयेनगच्छंथोदेवयंतीः ॥ कुत्राचिद्यामंमश्विनादधाना ॥ स्वश्वांयशसायांतमर्वाक्॥ दस्रानिधिंमधु
मंतंपिबाथः ॥ विवाꣳरथोवध्वांयादमानः ॥ ७ ॥ अंतांदिवोबाधतेवर्त्तनिभ्यां ॥ युवोश्रियंपरियोषांवृ
णीत॥सूरोदुहितापरितक्मियायां॥ यद्देवयंतमवथःशचीभिः॥परिघ्रꣳसवांमनावांवयोगां ॥ योहस्यवांꣳ
रथिरावस्तउस्राः ॥ रथोयुजानःपरियातिवर्तिः ॥ तेननःशंयोरुषसोव्युष्टौ ॥ न्यंश्विनावहतंयज्ञेअ
स्मिन् ॥ युवंभुज्युमवविद्धꣳसमुद्रे ॥ ८ ॥ उदूहथुरर्णसोअस्रिधानैः ॥ पतत्रिभिरश्रमैरव्यथिभिः ॥
दꣳसनाभिरश्विनापारयंता ॥ अग्नीषोमायोअद्यवां॥इदंवचःसपर्यति ॥ तस्मैधत्तꣳसुवीर्यं ॥ गवांपोष
ꣳस्वश्व्यं ॥ योअग्नीषोमाहाविषासपर्यात् ॥ देवद्रीचामनसायोघृतेन ॥ तस्यव्रतꣳरक्षतंपातमꣳहसः
॥ ९ ॥ विशेजनायमहिशर्मयच्छतं ॥ अग्नीषोमायआहुतिं ॥ योवांदाशाद्धविष्कृतिं ॥ सप्रजयासुवी
र्यं ॥ विश्वमायुर्व्यश्नवत् ॥ अग्नीषोमाचेतितद्वीर्यंवां ॥ यदमुष्णीतमवसंपणिंगोः ॥ अवातिरतंप्रथयस्य
शेषः ॥ अविंदतंज्योतिरेकंबहुभ्यः ॥ अग्नीषोमाविमꣳसुमेअग्नीषोमाहविषःप्रस्थितस्य ॥ १० ॥ जभार

द्यौरग्नेरुपस्थंउपक्ष्यंतोबद्धधानोयादमानःसमुद्रेऽहंसःप्रस्थितस्य ॥ ७ ॥ ॥ अहमस्मिप्रथमजा ऋतस्यं ॥ पूर्वंदेवेभ्योअमृतस्यनाभिः ॥ योमाददातिसइदेवमावाः ॥ अहमन्नमन्नमदंतमद्मि ॥ पूर्वं मग्नेरपिदहत्यन्नं ॥ यत्तौहासातेअहमुत्तरेषु ॥ व्यात्तमस्यपशवःसुजंभं॥ पश्यंतिधीराःप्रचरंतिपाकाः ॥ जहाम्यन्यंनजहाम्यन्यं ॥ अहमन्नंवशमिच्चरामि ॥ १ ॥ समानमर्थंपर्येमिभुंजत् ॥ कोमामन्नंमनुष्यो दयेत ॥ पराकेअन्नंनिहितंलोकएतत् ॥ विश्वैर्देवैःपितृभिर्गुप्तमन्नं ॥ यद्द्यतेलुप्यतेयत्परोप्यते ॥ शततमीसातनूर्मेबभूव ॥ महांतौचरूसंकृद्दुग्धेनपप्रौ ॥ दिवंचपृश्निपृथिवींचसाकं ॥ तत्संपिबंतोनामि नंतिवेधसः ॥ नैतद्भूयोभवतिनोकनीयः ॥ २ ॥ अन्नंप्राणमन्नमपानमाहुः ॥ अन्नंमृत्युंतमुजी वातुमाहुः ॥ अन्नंब्रह्माणोजरसंवदंति ॥ अन्नमाहुःप्रजननंप्रजानां ॥ मोघमन्नंविंदतेअप्रचेताः ॥ सत्यंब्रवीमिवधइत्सतस्य ॥ नार्यमणंपुष्यंतिनोसखायं ॥ केवलाघोभवतिकेवलादी ॥ अहंमेघ स्तनयन्वर्षन्नस्मि ॥ मामदंत्यहमद्म्यन्यान् ॥ अहꣳसदमृतोभवामि ॥ मदादित्याअधिसर्वे तपंति ॥ देवींवाचमजनयंतयद्वाग्वदंती ॥ अनंतामंतादधिनिर्मितांमहीं ॥ यस्यांदेवाअदधुर्भो जनानि ॥ एकाक्षरांद्विपदाꣳषट्पदांच ॥ वाचंदेवाउपजीवंतिविश्वे ॥ वाचंदेवाउपजीवंतिविश्वे ॥

वाचंगंधर्वाःपशवोमनुष्याः ॥ वाचीमाविश्वाभुवनान्यर्पिता ॥ ४ ॥ सानोहवंजुषतामिंद्रपत्नी ॥ वा
गक्षरंप्रथमजाऋतस्यं॥ वेदानांमातामृतस्यनाभिः॥ सानोजुषाणोपयज्ञमागात् ॥ अवंतीदेवीसुहवामेअ
स्तु ॥ यामृषयोमंत्रकृतोमनीषिणः ॥ अन्वैच्छंन्देवास्तपसाश्रमेण ॥ तांदेवींवाचंहविषायजामहे ॥
सानोदधातुसुकृतस्यलोके ॥ चत्वारिवाक्परिमितापदानि ॥ ५ ॥ तानिविदुर्ब्राह्मणायेमनीषिणः ॥
गुहात्रीणिनिहितानेंगयंति ॥ तुरीयंवाचोमनुष्यावदंति ॥ श्रद्धयाग्निःसमिध्यते ॥ श्रद्धयाविंदतेहविः॥
श्रद्धांभगस्यमूर्द्धनि ॥ वचसावेदयामसि ॥ प्रियंश्रद्धेददतः ॥ प्रियंश्रद्धेदिदासतः ॥ प्रियंभोजेषु
यज्वसु ॥ ६ ॥ इदंमउदितंकृधि ॥ यथादेवाअसुरेषु ॥ श्रद्धामुग्रेषुचाक्रिरे ॥ एवंभोजेषुयज्वसु
॥ अस्माकमुदितंकृधि ॥ श्रद्धांदेवायजमानाः ॥ वायुगोपाउपासते ॥ श्रद्धांहृदय्ययाकूत्या ॥
श्रद्धयाहूयतेहविः ॥ श्रद्धांप्रातर्हवामहे ॥ ७ ॥ श्रद्धांमध्यंदिनंपरि ॥ श्रद्धांसूर्यस्यनिम्रुचि ॥ श्र
द्धेश्रद्धापयेहमा ॥ श्रद्धादेवानधिवस्ते ॥ श्रद्धाविश्वमिदंजगत् ॥ श्रद्धांकामस्यमातरं ॥ हविषावर्द्ध
यामसि ॥ ब्रह्मजज्ञानंप्रथमंपुरस्तात् ॥ विसीमतःसुरुचोवेनआवः ॥ सबुध्नियाउपमाअस्यविष्टाः ॥ ८॥
सतश्चयोनिमसतश्चविवः ॥ पितावि‍राजामृषभोरयीणां ॥ अंतरिक्षंविश्वरूपआविवेश ॥ तमर्कैरभ्यर्च

तिवत्सं ॥ ब्रह्मसंतंब्रह्मणावर्द्धयंतः ॥ ब्रह्मदेवानंजनयत् ॥ ब्रह्मविश्वमिदंजगत् ॥ ब्रह्मणःक्षत्रंनिर्मितं ॥ ब्रह्मब्राह्मणआत्मना ॥ अंतरस्मिन्निमेलोकाः॥ ९ ॥ अंतर्विश्वमिदंजगत् ॥ ब्रह्मैवभूतानांज्येष्ठं ॥ तेनकोर्हतिस्पर्द्धितुं ॥ ब्रह्मंन्देवास्त्रयस्त्रिꣳशत् ॥ ब्रह्मंन्निंद्रप्रजापती ॥ ब्रह्मंन्हविश्वाभूतानि ॥ नावीवांतःसमाहिता ॥ चतस्रआशाःप्रचरंत्वग्नयः ॥ इमंनोयज्ञंनयतुप्रजानन् ॥ घृतंपिन्वन्नजरꣳसुवीरं ॥ १० ॥ ब्रह्मसमिद्भवत्याहुतीनां ॥ आगावोअग्मन्नुतभद्रमक्रन् ॥ सीदंतुगोष्ठेरणयंत्वस्मे ॥ प्रजावंतीःपुरुरूपाइहस्युः ॥ इंद्रायपूर्वीरुषसोदुहानाः ॥ इंद्रोयज्वनेपृणतेचशिक्षति ॥ उपेद्ददातिनस्वंमुषायति ॥ भूयोभूयोरयिमिदस्यवर्द्धयन् ॥ अभिन्नेखिल्लेनिदधातिदेवयुं ॥ नतानशंतिनताअर्वा ॥ ॥ ११ ॥ गावोभगोगावइंद्रोमेअच्छात् ॥ गावःसोमस्यप्रथमस्यभक्षः ॥ इमायागावःसजनासइंद्रः ॥ इच्छामीद्धृदामनसाचिदिंद्रं ॥ यूयंगावोमेदयथाकृशंचित् ॥ अश्लीलंचित्कृणुथासुप्रतीकं ॥ भद्रंगृहंकृणुथभद्रवाचः ॥ बृहद्वोवयउच्यतेसभासु ॥ प्रजावतीःसूयवसꣳरिशंतीः ॥ शुद्धाअपःसुप्रपाणेपिबंतीः ॥ मावःस्तेनईशतमाघशꣳसः ॥ परिवोहेतीरुद्रस्यवृंज्यात् ॥ उपेदमुपपर्चनं ॥ आसुगोषूपपृच्यतां ॥ उपर्षभस्यरेतसि ॥ उपेंद्रतववीर्ये ॥ १२ ॥ चरामिकनोयोन्यानर्पितापदानियज्वसुह

वामहेविष्टालोकाःसुवीरमर्वांपिबंतीःषट्चं ॥ ८ ॥ तासूर्याचंद्रमसाविश्वभृत्तमामहत् ॥ तेजोवसुमंद्रा
जतोदिवि ॥ सामांत्मानाचरतःसामचारिणां ॥ ययोर्व्रतंनममेजातुदेवयोः ॥ उभावंतौपरियातअर्म्यां ॥
दिवोनरश्मी ऽस्तनुतोव्यर्णवे ॥ उभाभुवंतोभुवनाकविक्रंतू ॥ सूर्यानचंद्राचरंतोहतामंती ॥ पतीद्युमद्वि
श्वविदांउभादिवः ॥ सूर्याउभाचंद्रमसाविचक्षणा ॥ १ ॥ विश्ववारावरिवोभावरेण्या ॥ तानोवतं
मतिमंतामहिव्रता ॥ विश्ववपरीप्रतरणातरंता ॥ सुवर्विदादृशयेभूरिरश्मी ॥ सूर्याहिचंद्रावसुत्वेषद
र्शता ॥ मनस्विनोभानुचरतोनुसंदिवं ॥ अस्यश्रवोनद्यःसप्तबिभ्रति ॥ द्यावाक्षामांपृथिवीदर्शतंवपुः ॥
अस्मेसूर्याचंद्रमसाभिचक्षे ॥ श्रद्धेकमिंद्रचरतोविचर्तुरं ॥ २ ॥ पूर्वापरंचरतोमाययैतौ ॥ शिशूक्री
डंतौपरियातोअध्वरं ॥ विश्वान्यन्योभुवनाभिचष्टे ॥ ऋतूनन्योविदधज्जायतेपुनः ॥ हिरण्य
वर्णाःशुचयःपावकायासुऽराजां ॥ यासांदेवाःशिवेनमाचक्षुषापश्यत ॥ आपोभद्रआदित्पश्यामि ॥
नासदासीन्नोसदासीत्तदानीं ॥ नासीद्रजोनोव्योमापरोयत् ॥ किमावरीवःकुहकस्यशर्मन् ॥ ६ ॥ अंभः
किमासीद्गहनंगभीरं ॥ नमृत्युरमृतंतर्हिन ॥ रात्रियाअह्नआसीत्प्रकेतः ॥ आनीदवातऽस्वधयातदेकं ॥
तस्माद्धान्यन्नपरःकिंचनासं ॥ तमआसीत्तमसागूढमग्रेप्रकेतं ॥ सलिलऽसर्वमाइदं ॥ तुच्छेनाभ्वपिहि

कृ०प० ॥७०॥

तै०ब्रा०

तंयदासीत् ॥ तमसस्तन्महिनाजायतैकं ॥ कामस्तदग्रेसमवर्त्तताधि ॥ ४ ॥ मनसोरेतःप्रथमंयदासीत्
॥ सतोबंधुमसतिनिरविंदन् ॥ हृदिप्रतीष्याकवयोमनीषा ॥ तिरश्चीनोविततोरश्मिरेषां ॥ अधस्विदा
सी ३ दुपरिस्विदासी ३ त् ॥ रेतोधाआसन्महिमानआसन् ॥ स्वधाअवस्तात्प्रयतिःपरस्तात् ॥ को
अद्धावेदकइहप्रवोचत् ॥ कुतआजाताकुतइयंविसृष्टिः ॥ अर्वाग्देवाअस्यविसर्जनाय ॥ ५ ॥ अथाकोवे
दयतआबभूव ॥ इयंविसृष्टिर्यतआबभूव ॥ यदिवादधेयदिवान ॥ योअस्याध्यक्षःपरमेव्योमन् ॥
सोअंगवेदयदिवानवेद ॥ किंस्विद्वनंकउसवृक्षआसीत् ॥ यतोद्यावापृथिवीनिष्टतक्षुः ॥ मनीषिणोमन
सापृच्छतेदुतत् ॥ यदध्यतिष्ठद्भुवनानिधारयन् ॥ ब्रह्मवनंब्रह्मसवृक्षआसीत् ॥ ६ ॥ यतोद्यावापृ
थिवीनिष्टतक्षुः ॥ मनीषिणोमनसाविब्रवीमिवः ॥ ब्रह्माध्यतिष्ठद्भुवनानिधारयन् ॥ प्रातरग्निंप्रातरिंद्रंहवा
महे ॥ प्रातर्मित्रावरुणाप्रातरश्विना ॥ प्रातर्भगंपूषणंब्रह्मणस्पतिं ॥ प्रातःसोममुतरुद्रंहुवेम ॥ प्रातर्जि
तंभगमुग्रंहुवेम ॥ वयंपुत्रमदितेर्योविधर्त्ता ॥ आध्रश्चिद्यंमन्यमानस्तुरश्चित् ॥ ७ ॥ राजा
चिद्यंभगंभक्षीत्याह ॥ भगप्रणेतर्भगसत्यराधः ॥ भगेमांधियमुदवददन्नः ॥ भगप्रणो
जनयगोभिरश्वैः ॥ भगप्रनृभिर्नृवंतःस्याम ॥ उतेदानींभगवंतःस्याम ॥ उतप्रपित्वउतम

॥७०॥

ध्येअह्नां ॥ उतोदितामघवन्त्सूयरयं ॥ वयंदेवानांऽसुमतौस्याम ॥ भगएवभगवांऽअस्तु
देवाः ॥ ८ ॥ तेनवयंभगवंतःस्याम ॥ तंत्वाभगसर्वइज्जोहवीमि ॥ सनोभगपुरएताभवेह॥
॥ समध्वरायोषसोनमंत ॥ दधिक्रावेवशुचयेपदाय ॥ अर्वाचीनंवसुविदंभगंनः ॥ रथमिवाश्वावा
जिनआवहंतु ॥ अश्वावतीर्गोमतीर्नउषासः ॥ वीरवतीस्सदमुच्छंतुभद्राः ॥ घृतंदुहानाविश्वतःप्रपीनाः॥
यूयंपातःस्वस्तिभिःसदानः॥ ९ ॥ विचक्षणाविचतुरऽशर्मन्नधिविसर्जनायब्रह्मवनंब्रह्मसवृक्षआसीत्तु
राश्विद्देवाःप्रपीनाएकंच ॥ ९ ॥ ॥ पीवोअन्नान्तेशुक्रासःसोमोधेनुमिंद्रस्तरस्वान्छाचिमादेवोयातुस्
यांदेवीमहमस्मितासूर्याचंद्रमसानवं ॥ ९ ॥ ॥ पीवोअन्नानग्नेत्वंपारयानाधृष्यःशुचिंतुस्तोमंविश्व
यमाणोदिवोरुक्मोन्नंप्राणंतासूर्याचंद्रमसानवंसप्ततिः ॥ ७९ ॥ ॥ ७ ॥ ॥
हरिॐम् ॥ श्रीगजाननार्पणमस्तु ॥ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

श्रीगणेशायनमः ॥ हरिःॐम् ॥ ॥ अग्निर्नःपातुकृत्तिकाः ॥ नक्षत्रंदेवमिंद्रियं ॥ इदमासांवि
चक्षणं ॥ हविरासंजुहोतन ॥ यस्यभांतिरश्मयोयस्यकेतवः ॥ यस्येमाविश्वाभुवनानिसर्वा ॥ सकृ
त्तिकाभिरभिसंवसानः ॥ अग्निर्नोदेवःसुवितेदधातु ॥ प्रजापतेरोहिणीवेतुपत्नी ॥ विश्वरूपाबृहती
चित्रभानुः ॥ १ ॥ सानोयज्ञस्यसुवितेदधातु ॥ यथाजीवेमशरदःसवीराः ॥ रोहिणीदेव्युदगात्पुरस्ता
त् ॥ विश्वारूपाणिप्रतिमोदमाना ॥ प्रजापतिꣳहविषावर्द्धयंती ॥ प्रियादेवानामुपयातुयज्ञं ॥ सोमो
राजामृगशीर्षेणआगन् ॥ शिवंनक्षत्रंप्रियमस्यधाम ॥ आप्यायमानोबहुधाजनेषु ॥ रेतःप्रजांयजमाने
दधातु ॥ २ ॥ यत्तेनक्षत्रंमृगशीर्षमस्ति ॥ प्रियꣳराजन्प्रियतमंप्रियाणां ॥ तस्मैतेसोमहविषाविधेम
॥ शंनएधिद्विपदेशंचतुष्पदे ॥ आर्द्रयारुद्रःप्रथमानएति ॥ श्रेष्ठोदेवानांपतिरघ्नियानां ॥ नक्षत्रमस्यहवि
षाविधेम ॥ मानःप्रजाꣳरीरिषन्मोतवीरान् ॥ हेतीरुद्रस्यपरिणोवृणक्तु ॥ आर्द्रानक्षत्रंजुषताꣳहविर्नः
॥ ३ ॥ प्रमुंचमानौदुरितानिविश्वा ॥ अपाघशꣳसन्नुदतामरातिं ॥ पुनर्नोदेव्यदितिस्पृणोतु ॥ पुनर्व
सूनःपुनरेतांयज्ञं ॥पुनर्नोदेवाअभियंतुसर्वे ॥ पुनःपुनर्वोहविषायजामः ॥ एवानदेव्यदितिरनर्वा ॥ वि
श्वस्यभर्त्रीजगतःप्रतिष्ठा ॥पुनर्वसूहविषावर्द्धयंती॥ प्रियंदेवानामप्येतुपाथः॥ ४ ॥बृहस्पतिःप्रथमंजा

यमानः ॥ तिष्यंनक्षत्रमभिसंबभूव ॥ श्रेष्ठोदेवानांपृतनासुजिष्णुः ॥ दिशोनुसर्वाअभयंनोअस्तु ॥ ति
ष्यःपुरस्तादुतमध्यतोनः ॥ बृहस्पतिर्नःपरिपातुपश्चात् ॥ बाधेतांद्वेषोअभयंकृणुतां ॥ सुवीर्यस्यपतयः
स्याम ॥ इदꣳसर्पेभ्योहविरस्तुजुष्टं ॥ आश्रेषायेषामनुयंतिचेतः ॥ ५ ॥ येअंतरिक्षंपृथिवींक्षियंति ॥
तेनःसर्पासोहवमागमिष्ठाः ॥ येरोचनेसूर्यस्यापिसर्पाः ॥ येदिवंदेवीमनुसंचरंति ॥ येषामाश्रेषाअनु
यंतिकामं ॥ तेभ्यःसर्पेभ्योमधुमज्जुहोमि ॥ उपहूताःपितरोयेमघासु ॥ मनोजवसःसुकृतःसुकृत्याः ॥
तेनोनक्षत्रेहवमागमिष्ठाः ॥ स्वधाभिर्यज्ञंप्रयतंजुषंतां ॥ ६ ॥ येअग्निदग्धायेनग्निदग्धाः ॥ येमुंलोकं
पितरःक्षियंति ॥ याꣳश्चविद्मयाꣳउंचनप्रविद्म ॥ मघासुयज्ञꣳसुकृतंजुषंतां ॥ गवांपतिःफल्गुनीनाम
सित्वं ॥ तदर्यमन्वरुणमित्रचारु ॥ तंत्वावयꣳसनितारꣳसनीनां ॥ जीवाजीवंतमुपसंविशेम ॥ येनेमा
विश्वाभुवनानिसंजिता ॥ यस्यदेवाअनुसंयंतिचेतः ॥ ७ ॥ अर्यमाराजाजरस्तुविष्मान् ॥ फल्गुनी
नामृषभोरोरवीति ॥ श्रेष्ठोदेवानांभगवोभगासि ॥ तत्त्वाविदुःफल्गुनीस्तस्यवित्तात् ॥ अस्मभ्यंक्षत्रम
जरꣳसुवीर्यं ॥ गोमदश्ववदुपसन्नुदेह ॥ भगोहदाताभगइत्प्रदाता ॥ भगोदेवीःफल्गुनीराविवेश ॥
भगस्येत्तंप्रसवंगमेम ॥ यत्रदेवैःसधमादंमदेम ॥ ८ ॥ आयांतुदेवःसवितोपयातु ॥ हिरण्ययेनसुवृ

तारथेन ॥ वहन्हस्तꣳसुभगंविद्मनापसं॥ प्रयच्छंतंपपुरिंपुण्यमच्छं ॥ हस्तःप्रयच्छत्वमृतंवसीयः ॥ द
क्षिणेनप्रतिगृभ्णीमएनत् ॥ दातारमद्यसवितावि॑देय ॥ योनोहस्तायप्रसुवातियज्ञं ॥ त्वष्टानक्षत्रमभ्ये
तिचित्रां ॥ सुभꣳसंसंयुवतिꣳरोचमानां ॥ ९ ॥ निवेशयन्नमृतान्मर्त्याꣳश्च ॥ रूपाणिपिꣳशन्भुवना
निविश्वा ॥ तंनस्त्वष्टातदुचित्राविचष्टां ॥ तन्नक्षत्रंभूरिदाअस्तुमह्यं ॥ तंनःप्रजांवीरवतीꣳसनोतु ॥
गोभिर्नोअश्वैःसमनक्तुयज्ञं ॥ वायुर्नक्षत्रमभ्येतिनिष्ट्यां ॥ तिग्मशृंगोवृषभोरोरुवाणः ॥ समीरयन्भु
वनामातरिश्वा ॥ अपद्वेषांꣳसिनुदतामरातीः ॥ १० ॥ तंनोवायुस्तदुनिष्ट्याशृणोतु ॥ तन्नक्षत्रंभू
रिदाअस्तुमह्यं ॥ तन्नोदेवासोअनुजानंतुकामं ॥ यथातरेमदुरितानिविश्वा ॥ दूरमस्मच्छत्रवोयंतुभीताः
॥ तदिंद्राग्नीकृणुतांतद्विशाखे ॥ तन्नोदेवाअनुमदंतुयज्ञं ॥ पश्चात्पुरस्तादभयंनोअस्तु ॥ नक्षत्राणाम
धिपत्नीविशाखे ॥ श्रेष्ठाविंद्राग्नीभुवनस्यगोपौ ॥ ११ ॥ विषूचःशत्रूनपबाधमानौ ॥ अपक्षुधंनुद
तामरातिं ॥ पूर्णापश्चादुतपूर्णापुरस्तात् ॥ उन्मध्यतःपौर्णमासीजिगाय ॥ तस्यांदेवाअधिसंवसंतः ॥
उत्तमेनाकइहमादयंतां ॥ पृथ्वीसुवर्चायुवतिःसजोषाः ॥ पौर्णमास्युदगाच्छोभमाना ॥ आप्या

यथंतीदुरितानिविश्वा ॥ उरुंदुहांयजमानाययज्ञं॥ १२॥ चित्रभानुर्यजमानेदधातुहविर्नःपाथश्वेतोजुषंता
चेतोमदेमरोचमानामरातोगोपैायज्ञं ॥ १ ॥ ॥ ऋध्यास्महव्यैर्नमसोपसद्य ॥ मित्रंदेवंमित्रधेयंनो
अस्तु ॥ अनूराधान्हविर्षावर्द्धयंतः ॥ शतंजीवेमशरदःसवीराः ॥ चित्रंनक्षत्रमुदगात्पुरस्तात् ॥ अ
नूराधासइतियद्वदंति ॥ तन्मित्रएतिपथिभिर्देवयानैः॥ हिरण्ययैर्विततैरंतरिक्षे ॥ इंद्रोज्येष्ठामनुनक्षत्रमे
ति ॥ यस्मिन्वृत्रंवृत्रतूर्येततार ॥ १ ॥ तस्मिन्वयममृतंदुहानाः ॥ क्षुधंतरेमदुरितिंदुरिष्टिं ॥ पुरंदराय
वृषभायधृष्णवे ॥ अषाढायसहमानायमीढुषे ॥ इंद्रायज्येष्ठामधुमद्दुहाना ॥ उरुंकृणोतुयजमाना
यलोकं ॥ मूलंप्रजांवीरवतींविदेय ॥ परांच्येतुनिर्ऋतिःपराचा ॥ गोभिर्नक्षत्रंपशुभिःसमक्तं ॥ अहर्भू
याद्यजमानायमह्यं ॥ २ ॥ अहर्नोअद्यसुवितेदधातु ॥ मूलंनक्षत्रमितियद्वदंति ॥ परांचींवाचानिर्ऋ
तिंनुदामि ॥ शिवंप्रजायैशिवमस्तुमह्यं ॥ यादिव्याआपःपयसासंबभूवुः ॥ याअंतरिक्षउतपार्थिवीर्याः ॥
यासामषाढाअनुयंतिकामं ॥ तानआपःशꣳस्योनाभवंतु ॥ याश्चकूप्यायाश्चनाद्याःसमुद्रियाः ॥ याश्चवै
शंतीरुतप्रासचीर्याः ॥ ३ ॥ यासामषाढामधुभक्षयंति ॥ तानआपःशꣳस्योनाभवंतु ॥ तन्नोविश्वेउप

शृण्वंतुदेवाः ॥ तदषाढाअभिसंयंतुयज्ञं ॥ तन्नक्षत्रंप्रथतांपशुभ्यः ॥ कृषिर्वृष्टिर्यजमानायकल्पतां ॥ शुभ्राः
कन्यायुवतयःसुपेशसः ॥ कर्मकृतःसुकृतोवीर्यावतीः ॥ विश्वान्देवान्हविषावर्द्धयंतीः ॥ अषाढाःका
ममुपयांतुयज्ञं ॥ ४ ॥ यस्मिन्ब्रह्माभ्यजयत्सर्वमेतत् ॥ अमुंचलोकमिदमूंचसर्वं ॥ तन्नोनक्षत्रमभि
जिद्विजित्य ॥ श्रियंदधात्वहृणीयमानं ॥ उभौलोकौब्रह्मणासंजितेमौ ॥ तन्नोनक्षत्रमभिजिद्विच
ष्टां ॥ तस्मिन्वयंपृतनाःसंजयेम ॥ तन्नोदेवासोअनुजानंतुकामं ॥ शृण्वंतिश्रोणाममृतस्यगोपां ॥ पु
ण्यामस्याउपशृणोमिवाचं ॥ ५ ॥ महीदेवींविष्णुपत्नीमजूर्यां ॥ प्रतीचीमेनाꣳहविषायजामः ॥
त्रेधाविष्णुरुरुगायोविचक्रमे ॥ महींदिवंपृथिवीमंतरिक्षं ॥ तच्छ्रोणैतिश्रवइच्छमाना ॥ पुण्यꣳश्लोकंय
जमानायकृण्वती ॥ अष्टौदेवावसवःसोम्यासः ॥ चतस्रोदेवीरजराःश्रविष्ठाः ॥ तेयज्ञंपांतुरजसःपु
रस्तात् ॥ संवत्सरीणममृतꣳस्वस्ति ॥ ६ ॥ यज्ञंनःपांतुवसवःपुरस्तात् ॥ दक्षिणतोभियंतुश्रविष्ठाः
॥ पुण्यंनक्षत्रमभिसंविशाम ॥ मानोअरातिरघशꣳसागन् ॥ क्षत्रस्यराजावरुणोधिराजः ॥ नक्षत्रा
णाꣳशतभिषग्वसिष्ठः ॥ तौदेवेभ्यःकृणुतोदीर्घमायुः ॥ शतꣳसहस्राभेषजानिधत्तः ॥ यज्ञंनोराजाव
रुणउपयातु ॥ तन्नोविश्वेअभिसंयंतुदेवाः ॥ ७ ॥ तंनोनक्षत्रꣳशतभिषग्जुषाणं ॥ दीर्घमायुःप्रतिरद्भे

षजानिं ॥ अजएकंपादुदंगात्पुरस्तांत् ॥ विश्वांभूतानिंप्रतिमोदंमानः ॥ तस्यंदेवाःप्रसवंयंतिसर्वें ॥
प्रोष्ठपदासोंअमृतंस्यगोपाः ॥ विभ्राजंमानःसमिधानउग्रः ॥ आंतरिंक्षमरुहदगंद्यां ॥ तꣳसूर्यंदेवम
जमेकंपादं ॥ प्रोष्ठपदासोअनुंयंतिसर्वें ॥ ८ ॥ अहिंर्बुध्नियःप्रथंमानएति ॥ श्रेष्ठोंदेवानांमुतमानुंश
णां ॥ तंब्राह्मणाःसोंमपाःसोम्यासंः ॥ प्रोष्ठपदासोंअभिरंक्षंतिसर्वें ॥ चत्वारएकंमभिकर्मंदेवाः ॥ प्रो
ष्ठपदासइतियान्वदंति ॥ तेबुध्नियंपरिषद्यंꣳस्तुवंतंः ॥ अहिंꣳरक्षंतिनमंसोपसद्यं॥ पूषारेवत्यन्वेंतिपंथां
॥ पुष्टिपतींपशुपावाजंबस्त्यौ ॥ ९ ॥ इमानिंहव्याप्रयंताजुषाणा ॥ सुगैर्नोयानैरुपंयातांयज्ञं ॥ क्षुद्रा
न्पशून्रंक्षतुरेवतींनः ॥ गावोंनोअश्वाꣳअन्वेंतुपूषा ॥ अन्नꣳरक्षंतौबहुधाविरूपं ॥ वाजꣳसनुतांयजमा
नाययज्ञं ॥ तदश्विनांवश्वयुजोपंयातां ॥ शुभंगमिंष्ठौसुयमेंभिरश्वैः ॥ स्वंनक्षत्रꣳहविषायजंतौ ॥ म
ध्वासंपृंक्तौयजुंषासमंक्तौ ॥ १० यौदेवानांभिषजौंहव्यवाहौ ॥ विश्वंस्यदूतावमृतंस्यगोपौ ॥ तौनक्षंत्रं
जुजुषाणोपंयातां ॥ नमोंश्विभ्यांकृणुमोश्वयुग्भ्यां ॥ अपंपाप्मानंभरंणीभरंतु ॥ तद्यमोराजाभगंवान्विच
ष्टां ॥ लोकस्यराजांमहतोमहान्हि ॥ सुगंनःपंथामभंयंकृणोतु ॥ यस्मिन्नक्षंत्रेयमएतिराजां ॥ यस्मिं

कृ०य०

॥ ४ ॥

त्रेनमभ्यषिंचंतदेवाः ॥ तदस्यचित्रꣳहविर्षायजाम ॥ अपपाप्मानंभरणीर्भरंतु ॥ निवेशनीयत्तेदेवाअ
दधुः ॥ ११ ततारमह्यंप्रासचार्यायांतुयज्ञंवाचꣳस्वस्तिदेवाअनुयंतिसर्वेवाजंबस्त्यौसमंकौदेवाश्रोणिंच
॥ २ ॥ ॥ नवोनवोभवतिजायमानोयमादित्याअꣳशुमाप्याययंति ॥ येविरूपेसमनसासंव्ययंती
॥ समानंतंतुंपरितातनाते ॥ विभूप्रभूअनुभूविश्वतोहुवे ॥ तेनोनक्षत्रेहवमागमेतं ॥ वयंदेवीब्रह्मणा
संविदानाः ॥ सुरत्नासोदेववीतिंदधानाः ॥ अहोरात्रेहविषावर्द्धयंतः ॥ अतिपाप्मानमतिमुक्त्यागमे
म ॥ प्रत्युवदृश्यायती ॥ १ ॥ व्युच्छंतीदुहितादिवः ॥ अपोमहीवृणुतेचक्षुषा ॥ तमोज्योतिष्कृणोति
सूनरी ॥ उदुस्रियाःसचतेसूर्यः ॥ सचाउद्यन्नक्षत्रमर्चिमत् ॥ तवेदुषोव्युषिसूर्यस्यच ॥ संभक्तेनगमे
महि ॥ तंनोनक्षत्रमर्चिमत् ॥ भानुमत्तेजउच्चरत् ॥ उपयज्ञमिहागमत् ॥ २ ॥ प्रनक्षत्रायदेवाय ॥
इंद्रायेंदुꣳहवामहे ॥ सनःसवितासुवत्सनिं ॥ पुष्टिदांवीरवत्तमं ॥ उदुत्यंचित्रं ॥आदितिर्नउरुष्यतुमहो
मूषुमातरं ॥ इदंविष्णुःप्रतद्विष्णुः ॥ अग्निर्मूर्धाभुवः ॥ अनुनोद्यानुमतिरन्विदनुमतेत्वं ॥ हव्यवाहꣳ
स्विष्टं ॥ ३ ॥ आयत्यंगमत्स्विष्टं ॥ ३ ॥ ॥ अग्निर्वाअकामयत ॥ अन्नादोदेवानाꣳस्यामिति ॥
सएतमग्नयेकृत्तिकाभ्यःपुरोडाशमष्टाकपालंनिरवपत् ॥ ततोवैसोन्नादोदेवानामभवत् ॥ अग्निर्वैदेवानां



॥ ४ ॥

॥ यउंचैनदेवंवेद ॥ सोत्रंजुहोति ॥ रुद्रायस्वाहाद्रायैस्वाहा ॥ पिन्वमानायैस्वाहापशुभ्यःस्वाहेति ॥ ४ ॥
ऋक्षावाइयमल्लोमकासीत् ॥ साकामयत ॥ ओषधीभिर्वनस्पतिभिःप्रजायेयेति ॥ सैतमदित्यैपुनर्वसु
भ्यांचरुंनिरवपत् ॥ ततोवाइयमोषधीभिर्वनस्पतिभिःप्राजायत ॥ प्रजायतेहवैप्रजयापशुभिः ॥ यए
तेनहविषायजंते ॥ यउंचैनदेवंवेद ॥ सोत्रंजुहोति ॥ आदित्यैस्वाहापुनर्वसुभ्यां ॥ स्वाहाभूत्यैस्वाहा
प्रजात्यैस्वाहेति ॥ ५ ॥ बृहस्पतिर्वाअकामयत ॥ ब्रह्मवर्चसीस्यामिति ॥ सएतंबृहस्पतयेतिष्याय
नैवारंचरुंपयसिनिरवपत् ॥ ततोवैसब्रह्मवर्चस्यभवत् ॥ ब्रह्मवर्चसीहवैभवति ॥ यएतेनंहविषायजंते
॥ यउंचैनदेवंवेद ॥ सोत्रंजुहोति ॥ बृहस्पतयेस्वाहातिष्यायस्वाहा ॥ ब्रह्मवर्चसायस्वाहेति ॥ ६ ॥
देवासुराःसंयत्ताआसन् ॥ तेदेवाःसर्पेभ्यआश्रेषाभ्यआज्येकरंभंनिरवपन् ॥ तानेताभिरेवदेवताभिरुपा
नयन् ॥ एताभिर्हवैदेवताभिर्द्विषंतंभ्रातृव्यमुपनयाति ॥ यएतेनहविषायजंते ॥ यउंचैनदेवंवेद ॥ सो
त्रंजुहोति ॥ सर्पेभ्यःस्वाहाश्रेषाभ्यःस्वाहा ॥ दंदशूकेभ्यःस्वाहेति ॥ ७ ॥ पितरोवाअकामयंत ॥
पितृलोकमृध्नुयामेति ॥ तएतंपितृभ्योमघाभ्यःपुरोडाशंषट्कपालंनिरवपन् ॥ ततोवैतेपितृलोकमाध्नु
वन् ॥ पितृलोकेहवाऋध्नोति ॥ यएतेनहविषायजंते ॥ यउंचैनदेवंवेद ॥ सोत्रंजुहोति ॥ पितृभ्यः
स्वाहामघाभ्यः ॥ स्वाहानघाभ्यःस्वाहागदाभ्यः ॥ स्वाहारुंदतीभ्यःस्वाहेति ॥ ८ ॥ अर्यमावाअका

मन्नादः ॥ यथाह्वाअग्निर्देवानामन्नादः ॥ एवꣳह्वाएषमनुष्याणांभवति ॥ यएतेनह्वविषायजते ॥
यउचैनदेववेद ॥ सोत्रजुहोति ॥ अग्नयेस्वाहाकृत्तिकाभ्यःस्वाहा ॥ अंबायैस्वाहादुलायैस्वाहा॥नित
त्न्यैस्वाहाभ्रयंत्यैस्वाहा॥मेघयंत्यैस्वाहावर्षयंत्यैस्वाहा॥चुपुणीकायैस्वाहेति ॥१॥प्रजापतिःप्रजाअसृ
जत । ताअस्मात्सृष्टाःपराचीरायन् ॥ तासांꣳरोहिणीमभ्यध्यायत् ॥ सोकामयत ॥ उपमावर्त्तेत ॥
समेनयागच्छेयेति ॥ सएतंप्रजापतयेरोहिण्यैचरुंनिरवपत् ॥ ततोवैसातमुपावर्त्तत॥ समेनयागच्छत ॥
उपह्ववाएनंप्रियमावर्त्तते ॥ संप्रियेणगच्छते ॥ यएतेनह्वविषायजते ॥ यउचैनदेववेद ॥ सोत्रजुहोति
॥ प्रजापतयेस्वाहारोहिण्यैस्वाहा ॥ रोचमानायैस्वाहाप्रजाभ्यःस्वाहेति ॥ २ ॥ सोमोवाअकामय
त ॥ ओषधीनाꣳराज्यमभिजयेयमिति ॥ सएतꣳसोमायमृगशीर्षायश्यामाकंचरुंपयसिनिरवपत् ॥
ततोवैसओषधीनाꣳराज्यमभ्यजयत् ॥ समानानाꣳह्ववैराज्यमभिजयति ॥ यएतेनह्वविषायजते ॥ य
उचनदेवंदेवेद ॥ सोत्रजुहोति ॥ सोमायस्वाहामृगशीर्षायस्वाहा ॥ इन्वकाभ्यःस्वाहौषधीभ्यःस्वाहा
॥ राज्यायस्वाहाभिजित्यैस्वाहेति ॥ ३ ॥ रुद्रोवाअकामयत ॥ पशुमान्त्स्यामिति ॥ सएतꣳरुद्राया
र्द्रायैप्रैय्यंगवंचरुंपयसिनिरवपत् ॥ ततोवैसपशुमानभवत् ॥ पशुमान्ह्ववैभवति ॥ यएतेनह्वविषायजते

मयत ।। पशुमान्त्स्यामिति ॥ सएतमर्यम्णेफल्गुनीभ्यांचरुंनिरवपत् ॥ ततोवैसपशुमानभवत् ॥ पशु
मान्हवैभवति ।।यएतेनहविषायजते॥यउचैनदेवंवेद॥सोत्रंजुहोति॥अर्यम्णेस्वाहाफल्गुनीभ्याꣳस्वाहा॥
पशुभ्यःस्वाहेति ॥ ९ ॥ भगोवाअकामयत ॥ भगीश्रेष्ठीदेवानाꣳस्यामिति ॥ सएतंभगायफल्गुनी
भ्यांचरुंनिरवपत् ॥ ततोवैसभगीश्रेष्ठीदेवानामभवत् ॥ भगीहवैश्रेष्ठीसमानानांभवति॥ यएतेनहविषा
यजते ॥ यउचैनदेवंवेद ॥ सोत्रंजुहोति ॥ भगायस्वाहाफल्गुनीभ्याꣳस्वाहा ॥ श्रैष्ठ्यायस्वाहेति
॥ १० सवितावाअकामयत ॥ श्रन्मेदेवादधीरन् ॥ सवितास्यामिति ॥ सएतꣳसवित्रेहस्तायपुरोडाशं
द्वादशकपालंनिरवपदाशूनांव्रीहीणां ॥ ततोवैतस्मैश्रद्देवाअदधत ॥ सविताभवत् ॥ श्रद्धवाअस्मैमनु
ष्यादधते ॥ सवितासमानानांभवति ॥ यएतेनहविषायजते ॥ यउचैनदेवंवेद ॥ सोत्रंजुहोति ॥
सवित्रेस्वाहाहस्ताय ॥ स्वाहाददतेस्वाहापृणते ॥ स्वाहाप्रयच्छतेस्वाहाप्रतिगृभ्णतेस्वाहेति ॥ ११ ॥
त्वष्टावाअकामयत ॥ चित्रंप्रजांविन्देयेति ॥ सएतंत्वष्ट्रेचित्रायैपुरोडाशमष्टाकपालंनिरवपत् ॥ ततोवैस
चित्रंप्रजामविन्दत ॥ चित्रꣳहवैप्रजांविन्दते ॥ यएतेनहविषायजते ॥ यउचैनदेवंवेद ॥ सोत्रंजुहोति
॥ त्वष्ट्रेस्वाहाचित्रायैस्वाहा ॥ चैत्रायस्वाहाप्रजायैस्वाहेति ॥ १२ ॥ वायुर्वाअकामयत ॥ कामचारंमे

पुलोकेष्वभिजयेयमिति ॥ सएतद्वायवेनिष्ठर्यायैगृष्टचैदुग्धंपयोनिरवपत्॥ ततोवैसकामचारमेषुलोकेष्व
भ्यंजयत् ॥ कामचारंह्वाएषुलोकेष्वभिजयति ॥ यएतनंहविषायजते ॥ यउचैनदेवंवेद ॥ सोत्रजुहो
ति ॥ वायवेस्वाहानिष्टर्यायैस्वाहा ॥ कामचारायस्वाहाभिजित्यैस्वाहेति ॥ १३ ॥ इंद्राग्नीवाअका
मयेतां ॥ श्रैष्ठ्यंदेवानामभिजयेवेति ॥ तावेतमिंद्राग्निभ्यांविशाखाभ्यांपुरोडाशमेकादशकपालंनिरवप
तां ॥ ततोवैतौश्रैष्ठ्यंदेवानामभ्यंजयतां ॥ श्रैष्ठ्यंह्वैसमानानामभिजयति ॥ यएतेनंहविषायजते ॥
यउचैनदेवंवेद ॥ सोत्रजुहोति ॥ इंद्राग्निभ्यांस्वाहाविशाखाभ्यांस्वाहा ॥ श्रैष्ठ्यायस्वाहाभिजि
त्यैस्वाहेति ॥ १४ ॥ अथैतत्पौर्णमास्याआज्यंनिर्वपति ॥ कामोवैपौर्णमासी ॥ कामआज्यं ॥ कामं
नैवकामंसमर्द्धयति ॥ क्षिप्रमेनंसकामउपनमति ॥ येनकामेनयजते ॥ सोत्रजुहोति ॥ पौर्णमास्यै
स्वाहाकामायस्वाहागत्यैस्वाहेति ॥ १५ ॥ मित्रोवाअकामयत ॥ मित्रधेयमेषुलोकेष्वभिजयेयमिति ॥
सएतंमित्रायानूराधेभ्यश्चरुंनिरवपत् ॥ ततोवैसमित्रधेयमेषुलोकेष्वभ्यंजयत् ॥ मित्रधेयंह्वाएषुलोके
ष्वभिजयति ॥ यएतेनंहविषायजते ॥ यउचैनदेवंवेद ॥ सोत्रजुहोति ॥ मित्रायस्वाहानूराधेभ्यःस्वा
हा ॥ मित्रधेयायस्वाहाभिजित्यैस्वाहेति ॥ १ ॥ इंद्रोवाअकामयत ॥ ज्यैष्ठ्यंदेवानामभिजयेयमि
ति॥ सएतमिंद्रायज्येष्ठायैपुरोडशमेकादशकपालंनिरवपन्महाव्रीहीणां ॥ ततोवैसज्यैष्ठ्यंदेवानामभ्य

जयत् ॥ ज्यैष्ठ्यंꣳह वै समानानामभिजयति ॥ य एतेन हविषा यजंते ॥ य उ चैनदेवं वेद ॥ सोत्र जुहोति ॥ इंद्राय स्वाहा ज्येष्ठाय स्वाहा ॥ ज्यैष्ठ्याय स्वाहाभिजित्यै स्वाहेति ॥ २ ॥ प्रजापतिर्वा अकामयत ॥ मूलं प्रजां विंदेयेति ॥ स एतं प्रजापतये मूलाय चरुं निरवपत् ॥ ततो वै स मूलं प्रजामविंदत ॥ मूलꣳह वै प्रजां विंदते ॥ य एतेन हविषा यजंते ॥ य उ चैनदेवं वेद ॥ सोत्र जुहोति ॥ प्रजापतये स्वाहा मूलाय स्वाहा ॥ प्रजायै स्वाहेति ॥ ३ ॥ आपो वा अकामयंत ॥ समुद्रं काममभिजयेमेति ॥ ता एतमद्भ्योषाढाभ्यश्चरुं निरवपन् ॥ ततो वै ताः समुद्रं काममभ्यजयन् ॥ समुद्रꣳह वै काममभिजयति ॥ य एतेन हविषा यजंते ॥ य उ चैनदेवं वेद ॥ सोत्र जुहोति ॥ अद्भ्यः स्वाहाषाढाभ्यः स्वाहा ॥ समुद्राय स्वाहा कामाय स्वाहा ॥ अभिजित्यै स्वाहेति ॥ ४ ॥ विश्वे वै देवा अकामयंत ॥ अनपजय्यं जयेमेति ॥ त एतं विश्वेभ्यो देवेभ्योषाढाभ्यश्चरुं निरवपन् ॥ ततो वै तेनपजय्यमजयन् ॥ अनपजय्यꣳह वै जयति ॥ य एतेन हविषा यजंते ॥ य उ चैनदेवं वेद ॥ सोत्र जुहोति ॥ विश्वेभ्यो देवेभ्यः स्वाहाषाढाभ्यः स्वाहा ॥ अनपजय्याय स्वाहाजित्यै स्वाहेति ॥ ५ ॥ ब्रह्म वा अकामयत ॥ ब्रह्मलोकमभिजयेयमिति ॥ तदेतं ब्रह्मणेभिजिते चरुं निरवपत् ॥ ततो वै तद्ब्रह्मलोकमभ्यजयत् ॥ ब्रह्मलोकꣳह वा अभिजयति ॥ य एतेन हविषा यजंते ॥ य उ चैनदेवं वेद ॥ सोत्र जुहोति ॥ ब्रह्मणे स्वाहाभिजिते स्वाहा ॥ ब्रह्मलोकाय स्वाहाभिजित्यै स्वाहेति ॥ ६ ॥ विष्णुर्वा अकामयत ॥ पुण्यꣳश्लोक

ꣳशृण्वीय ॥ नमांपापीकीर्तिरागच्छेदिति ॥ सएतंविष्णवेश्रोणायैपुरोडाशंत्रिकपालंनिरवपत् ॥ ततोवैस
पुण्यꣳश्लोकमशृणुत ॥ नैनंपापीकीर्तिरागच्छत् ॥ पुण्यꣳहवैश्लोकꣳशृणुते ॥ नैनंपापीकीर्तिरागच्छति॥
यएतेनंहविषायजंते॥ यउचैनदेवंवेद ॥ सोत्रजुहोति ॥ विष्णवेस्वाहाश्रोणायैस्वाहा ॥ श्लोकायस्वाहा
श्रुतायस्वाहेति ॥ ७ ॥ वसवोवाअकामयंत ॥ अग्रंदेवतानांपरीयामेति ॥ तएतंवसुभ्यःश्रविष्ठाभ्यः
पुरोडाशमष्टाकपालंनिरवपन् ॥ ततोवैतेग्रंदेवतानांपर्यायन् ॥ अग्रꣳहवैसमानानांपर्येति ॥ यएतेनंह
विषायजंते ॥ यउचैनदेवंवेद ॥ सोत्रजुहोति ॥ वसुभ्यःस्वाहाश्रविष्ठाभ्यःस्वाहा ॥ अग्रायस्वाहाप
रीत्यैस्वाहेति ॥ ८ ॥ इंद्रोवाअकामयत ॥ दृढोशिथिलस्यामिति ॥ सएतंवरुणायशतभिषजेभेषजेभ्यः
पुरोडाशंदशकपालंनिरवपत्कृष्णानांव्रीहीणां ॥ ततोवैसदृढोशिथिलोभवत् ॥ दृढोहवाअशिथिलोभव
ति ॥ यएतेनंहविषायजंते ॥ यउचैनदेवंवेद ॥ सोत्रजुहोति ॥ वरुणायस्वाहाशतभिषजेस्वाहा ॥ भे
षजेभ्यःस्वाहेति ॥ ९ अजोवाएकपादकामयत ॥ तेजस्वीब्रह्मवर्चसीस्यामिति ॥ सएतमजायैकपदे
प्रोष्ठपदेभ्यश्चरुंनिरवपत् ॥ ततोवैसतेजस्वीब्रह्मवर्चस्यभवत् ॥ तेजस्वीहवैब्रह्मवर्चसीभवति ॥ यएते
नंहविषायजंते ॥ यउचैनदेवंवेद ॥ सोत्रजुहोति ॥ अजायैकपदेस्वाहाप्रोष्ठपदेभ्यःस्वाहा ॥ तेजसे
स्वाहाब्रह्मवर्चसायस्वाहेति ॥ १० ॥ अहिर्वैबुध्नियोकामयत ॥ इमांप्रतिष्ठांविंदेयेति ॥ सएतमहयेबु

ध्नियायप्रोष्टपदेभ्यःपुरोडाशंभूमिकपालंनिरवपत् ॥ ततोवैसइमांप्रतिष्ठामविंदत ॥ इमाꣳह्ववैप्रतिष्ठांविंद
ते ॥ यएतेनंहविषायजंते ॥ यउचैनदेववेद ॥ सोत्रजुहोति ॥ अहयेबुध्नियायस्वाहाप्रोष्ठपदेभ्यःस्वाहा
प्रतिष्ठायैस्वाहेति ॥ ११ ॥ पूषावाअकामयत ॥ पशुमान्स्यामिति ॥ सएतंपूष्णेरेवत्यैचरुंनिरवपत् ॥
ततोवैसपशुमानभवत् ॥ पशुमान्हवैभवति ॥ यएतेनंहविषायजंते ॥ यउचैनदेववेद ॥ सोत्रजुहो
ति ॥ पूष्णस्वाहारेवत्यैस्वाहा ॥ पशुभ्यःस्वाहेति ॥ १२ ॥ आश्विनौवाअकामयेतां ॥ श्रोत्रस्विना
ववधिरौस्यावेति ॥ तावेतमश्विभ्यामश्वयुग्भ्यांपुरोडाशंद्विकपालंनिरवपतां ॥ ततोवैतौश्रोत्रस्विनावब
धिरावभवतां ॥ श्रोत्रस्वीहवाअवधिरोभवति ॥ यएतेनंहविषायजंते ॥ यउचैनदेववेद ॥ सोत्रजुहो
ति ॥ अश्विभ्याꣳस्वाहाश्वयुग्भ्याꣳस्वाहा ॥ श्रोत्रायस्वाहाश्रुत्यैस्वाहेति ॥ १३ ॥ यमोवाअकाम
यत ॥ पितृणाꣳराज्यमभिजयेयमिति ॥ सएतंयमायापभरणीभ्यश्चरुंनिरवपत् ॥ ततोवैसपितृणाꣳरा
ज्यमभ्यजयत् ॥ समानानाꣳहवैराज्यमभिजयति ॥ यएतेनंहविषायजंते ॥ यउचैनदेववेद ॥ सोत्रजु
होति ॥ यमायस्वाहापभरणीभ्यःस्वाहा ॥ राज्यायस्वाहाभिजित्यैस्वाहेति ॥ १४ ॥ अथैतदमावा
स्यायाआज्यंनिर्वपति ॥ कामोवाअमावास्या ॥ कामआज्यं ॥ कामेनैवकामꣳसमर्द्धयति ॥ क्षिप्रमेनꣳसका
मउपनमति ॥ येनकामेनयजंते ॥ सोत्रजुहोति ॥ अमावास्यायैस्वाहाकामायस्वाहागत्यैस्वाहेति ॥

॥ १५ ॥ ॥ चंद्रमावाअंकामयत ॥ अहोरात्रानंर्द्धमासान्मासांनृतून्त्संवत्सरमाप्त्वा ॥ चंद्रमंसः सा
युज्यꣳसलोकतांमाप्नुयामितिं ॥ सएतंचंद्रमंसेप्रतीदृश्यायैपुरोडाशंपंचदशकपालंनिरंवपत् ॥ ततोवैसो
होरात्रानंर्द्धमासान्मासांनृतून्त्संवत्सरमाप्त्वा ॥ चंद्रमंसःसायुंज्यꣳसलोकतांमाप्नोत् ॥ अहोरात्रान्हृवा
अंर्धमासान्मासांनृतून्त्संवत्सरमाप्त्वा ॥ चंद्रमंसःसायुंज्यꣳसलोकतांमाप्नोति ॥ यएतेनंहृविषायजंते ॥
यउंचैनदेवंवेदं ॥ सोत्रंजुहोति ॥ चंद्रमंसेस्वाहांप्रतीदृश्यायैस्वाहां ॥ अहोरात्रेभ्यःस्वाहार्द्धमासेभ्यः
स्वाहां ॥ मासेभ्यःस्वाहर्त्तुभ्यःस्वाहां ॥ संवत्सरायस्वाहेतिं ॥ १ ॥ अहोरात्रेवाअंकामयेतां ॥ अ
त्यंहोरात्रेमुंच्येवहि ॥ ननांवहोरात्रेआंन्पुयातामितिं ॥ तेएतमंहोरात्राभ्यांचरुंनिरंवपतां ॥ द्वयानांव्रीहि
णां ॥ शुक्लानांचकृष्णानांच ॥ सवात्योर्दुग्धे ॥ श्वेतायैंचकृष्णायैंच ॥ ततोवैतेअत्यंहोरात्रेअमुच्येते ॥
नैनेंअहोरात्रेआंप्नुतां ॥ अतिंहवाअंहोरात्रेमुंच्यते ॥ नैनंमहोरात्रेआंप्नुतः ॥ यएतेनंहविषायजंते ॥ य
उंचैनदेवंवेदं ॥ सोत्रंजुहोति ॥ अन्हेस्वाहारात्रियैस्वाहां ॥ अतिमुंक्त्यैस्वाहेतिं ॥ २ ॥ उषावाअंका
मयत ॥ प्रियादित्यस्यंसुभगांस्यामितिं ॥ सैतमुषसेंचरुंनिरंवपत् ॥ ततोवैसाप्रियादित्यस्यसुभगांभव
त् ॥ प्रियोहवैसंमानानांꣳसुभगोंभवति ॥ यएतेनंहविषायजंते ॥ यउंचैनदेवंवेदं ॥ सोत्रंजुहोति ॥

उषसेस्वाहाव्युष्ट्यैस्वाहा ॥ व्यूषुष्यैस्वाहाव्युच्छंत्यैस्वाहा ॥ व्युष्टायैस्वाहेति ॥ ३ ॥ अथैतस्मैनक्षत्रा
यचरुंनिर्वपति ॥ यथात्वंदेवानामसि ॥ एवमहंमनुष्याणांभूयासमिति ॥ यथाहवाएतद्देवानां ॥ एव
ꣳहवाएवमनुष्याणांभवति ॥ यएतेनहविषायजंते ॥ यउचैनदेवंवेद ॥ सोत्रंजुहोति ॥ नक्षत्रायस्वा
होदेष्यतेस्वाहा ॥ उद्यतेस्वाहोदितायस्वाहा ॥ हरसेस्वाहाभरसेस्वाहा ॥ भ्राजसेस्वाहातेजसेस्वाहा
॥ तपसेस्वाहाब्रह्मवर्चसायस्वाहेति ॥ ४ ॥ सूर्योवाअकामयत ॥ नक्षत्राणांप्रतिष्ठास्यामिति ॥ सएत
ꣳसूर्यायनक्षत्रेभ्यश्चरुंनिरवपत् ॥ ततोवैसनक्षत्राणांप्रतिष्ठाभवत् ॥ प्रतिष्ठाहवैसमानानांभवति ॥ यए
तेनहविषायजंते ॥ यउचैनदेवंवेद ॥ सोत्रंजुहोति ॥ सूर्यायस्वाहानक्षत्रेभ्यःस्वाहा ॥ प्रतिष्ठायैस्वाहे
ति ॥ ५ ॥ अथैतमदित्यैचरुंनिर्वपति ॥ इयंवाअदितिः ॥ अस्यामेवप्रतितिष्ठति ॥ सोत्रंजुहोति ॥
अदित्यैस्वाहाप्रतिष्ठायैस्वाहेति ॥ ६ ॥ अथैतंविष्णवेचरुंनिर्वपति ॥ यज्ञोवैविष्णुः ॥ यज्ञएवांततःप्रति
तिष्ठति ॥ सोत्रंजुहोति ॥ विष्णवेस्वाहायज्ञायस्वाहा ॥ प्रतिष्ठायैस्वाहेति ॥ ७ ॥ ॥ अग्निः
पंचदशप्रजापतिः षोडशसोमएकादशरुद्रोदशर्क्षैकादशबृहस्पतिर्दशदेवासुरानवपितरएकादशार्यमाभगो
दशदशसविताचतुर्दशत्वष्टावायुरिंद्राग्नीदशदशपौर्णमास्याअष्टौपंचदश ॥ मित्रइंद्रःप्रजापतिर्दशदशाप्

एकादशाविश्वेब्रह्मदशदशविष्णुस्त्रयोदशवसवइंद्रोजोहिर्वैबुध्नियःपूषाश्विनौयमोदशदशामावास्यायाअ
ष्टौपंचदश ॥ चंद्रमाःपंचदशाहोरात्रेसप्तदशोषाएकादशाथैतस्मैनक्षत्रायत्रयोदशसूर्योदशादित्यैपंचवि
ष्णवेषट्सप्त ॥ ॥ अग्निर्नऋध्यास्मनवोनवोग्निर्मित्रश्चंद्रमाःषट् ॥ ६ ॥ ॥ अग्निर्नस्तन्नावायुरहिं
र्बुध्नियंऋक्षावाङ्यमथैतत्पौर्णमास्याअजोवाएकपात्सूर्यस्त्रिषष्टिः ॥ ६२ ॥ ॥ हरिःॐम् ॥ ॥
तृतीयस्यामितोदिविसोमआसीत् ॥ तंगायत्र्याहरत् ॥ तस्यपर्णमच्छिद्यत ॥ तत्पर्णोभवत् ॥ तत्पर्ण
स्यपर्णत्वं ॥ ब्रह्मवैपर्णः ॥ यत्पर्णशाखयावत्सानपाकरोति ॥ ब्रह्मणैवैनानपाकरोति ॥ गायत्रोवैपर्णः
गायत्राःपशवः ॥ १ ॥ तस्मात्त्रीणित्रीणिपर्णस्यपलाशानि ॥ त्रिपदागायत्री ॥ यत्पर्णशाखयागाप्रार्पय ॥
ति ॥ स्वयैवैनादेवतयाप्रार्पयति ॥ यंकामयेतापशुःस्यादिति ॥ अपर्णातस्मैशुष्कांग्रामाहरेत् ॥ अपशुरेवभ
वति ॥ यंकामयेतपशुमान्त्स्यादिति ॥ बहुपर्णातस्मैबहुशाखामाहरेत् ॥ पशुमंतमेवैनंकरोति ॥ २ ॥ यत्प्रा
चीमाहरेत् ॥ देवलोकमभिजयेत् ॥ यदुदीचींमनुष्यलोकं ॥ प्राचीमुदीचीमाहरति ॥ उभयोर्लोकयोरभि
जित्यै ॥ इषेत्वोर्जेत्वेत्याह ॥ इषमेवोर्जयजमानेदधाति ॥ वायवस्थेत्याह ॥ वायुर्वाअंतरिक्षस्याध्ये
क्षाः अंतरिक्षदेवत्याःखलुवैपशवः ॥ ३ ॥ वायवएवैनान्परिददाति ॥ प्रवाएनानेतदाकरोति ॥ यदा

हं ॥ वायवः स्थेत्युपायवः स्थेत्याह ॥ यजमानायैव पशूनुपह्वयते ॥ देवो वः सविता प्रार्पयत्वित्याह प्रसू
त्यै ॥ श्रेष्ठतमाय कर्मण इत्याह ॥ यज्ञो हि श्रेष्ठतमं कर्म ॥ तस्मादेवमाह ॥ आप्यायध्वमघ्निया देवभाग
मित्याह ॥ ४ ॥ वत्सेभ्यश्च वा एताः पुरा मनुष्येभ्यश्चाप्यायंत ॥ देवेभ्य एवैना इंद्रायाप्याययति ॥ ऊर्ज
स्वतीः पयस्वतीरित्याह ॥ ऊर्ज हि पयः संभरंति ॥ प्रजावतीरनमीवा अयक्ष्मा इत्याह प्रजात्यै ॥ मा वं
स्तेन ईशत माघशंस इत्याह गुप्त्यै ॥ रुद्रस्य हेतिः परि वो वृणक्त्वित्याह ॥ रुद्रादेवैनास्त्रायते ॥ ध्रुवा अ
स्मिन्गोपतौ स्यात बह्वीरित्याह ॥ ध्रुवा एवास्मिन्बह्वीः करोति ॥ ५ ॥ यजमानस्य पशून्पाही
त्याह ॥ पशूनां गोपीथाय ॥ तस्मात्सायं पशव उपसमावर्त्तंते ॥ अनधः सादयति ॥ गर्भाणां
धृत्या अप्रपादाय ॥ तस्माद्गर्भाः प्रजानामप्रपादुकाः ॥ उपरीव निदधाति ॥ उपरीव हि सुवर्गो
लोकः ॥ सुवर्गस्य लोकस्य समष्ट्यै ॥ ६ ॥ पशवः करोति पशवो देवभागमित्याह करोति नव च ॥ १ ॥
देवस्य त्वा सवितुः प्रसव इत्यश्वपर्शुमादत्ते प्रसूत्यै ॥ अश्विनोर्बाहुभ्यामित्याह ॥ अश्विनौ हि देवाना
मध्वर्यू आस्तां ॥ पूष्णो हस्ताभ्यामित्याह यत्यै ॥ यो वा ओषधीः पर्वशो वेद ॥ नैनाः स हिनस्ति ॥ प्रजा
पतिर्वा ओषधीः पर्वशो वेद ॥ स एना न हिनस्ति ॥ अश्वपर्श्वा बर्हिरच्छैति ॥ प्राजापत्यो वा अश्वः स

योनित्वाय ॥ १ ओषधीनामहिꣳसायै ॥ यज्ञस्य घोषदसीत्याह ॥ यजमानएवरयिंदधाति ॥ प्रत्युष्टꣳर
क्षः प्रत्युष्टाअरातयइत्याह ॥ रक्षसामपहत्यै ॥ प्रेयमगाद्धिषणाबर्हिरच्छेत्याह ॥ विद्यावैधिषणा ॥ विद्य
यैवैनदच्छैति ॥ मनुनाकृतास्वधयावितष्टेत्याह ॥ मानवोह्येषपर्शुःस्वधाकृता ॥ २ ॥ तआवहंतिकवयःपुरस्ता
दित्याह ॥ शुश्रुवाꣳसोवैकवयः ॥ यज्ञ पुरस्तात् ॥ मुखतएवयज्ञमारभते ॥ अथोयदेतदुच्छायतःकुत
श्चाहरति ॥ तत्प्राच्याएवदिशोभवति ॥ देवेभ्योजुष्टमिहबर्हिरासदइत्याह ॥ बर्हिषःसमृध्यै ॥ कर्मणो
नपराधाय ॥ देवानांपरिषूतमसीत्याह ॥ ३ ॥ यद्वाइदंकिंच ॥ तद्देवानांपरिषूतं ॥ अथोयथावस्यसेप्र
तिप्रोच्याहेदंकरिष्यामीति ॥ एवमेवतदध्वर्युर्देवेभ्यःप्रतिप्रोच्यबर्हिर्दाति ॥ आत्मनोहिꣳसायै ॥ यावंत
स्तंबान्परिदिशेत् ॥ यत्तेषामुच्छिꣳष्यात् ॥ अतितद्यज्ञस्यरेचयेत् ॥ एकꣳस्तंबंपरिदिशेत् ॥ तꣳसर्वंदाया
त् ॥ ४ ॥ यज्ञस्यानतिरेकाय ॥ वर्षवृद्धमसीत्याह ॥ वर्षवृद्धावाओषधयः ॥ देवबर्हिरित्याह ॥ देवेभ्यएवैन
त्करोति ॥ मात्वान्वङ्मातिर्यगित्याह ॥ अहिꣳसायै ॥ पर्वतेराध्यासमित्याहऋध्यै ॥ आच्छेत्तातेमारिषमित्याह ॥
नास्यात्मनोमीयते ॥ यएवंवेद ॥ ५ ॥ देवबर्हिःशतवल्शंविरोहेत्याह ॥ प्रजावैबर्हिः ॥ प्रजानांप्रजनना
य ॥ सहस्रवल्शाविवयꣳरुहेमेत्याह ॥ आशिषमेवैतामाशास्ते ॥ पृथिव्याःसंपृचःपाहीत्याहप्रतिष्ठित्यै ॥
अयुंगायुंगान्मुष्टींलुनोति ॥ मिथुनत्वायप्रजात्यै ॥ सुसंभृतात्वासंभरामीत्याह ॥ ब्रह्मणैवैनत्संभरति

॥ ६ ॥ अदित्यैरास्नासीत्याह ॥ इयंवाअदितिः ॥ अस्याएवैनदास्नांकरोति ॥ इंद्राण्यैसन्नहनमि
त्याह ॥ इंद्राणीवाअग्रेदेवतानाᳫंसमनह्यत ॥ सार्ध्नोत् ॥ ऋध्यैसंनह्यति ॥ प्रजावैबर्हिः ॥ प्रजान
मपरावापाय ॥ तस्मात्स्नावसंतताप्रजाजायंते ॥ ७ ॥ पूषातेग्रंथिंग्रथ्नात्वित्याह ॥ पुष्टिमेवयजमाने
दधाति ॥ सतेमास्थादित्याहाहिᳫंसायै ॥ पश्चात्प्रांचमुपगूहति ॥ पश्चाद्वैप्राचीनᳫंरेतोधीयते ॥
पश्चादेवास्मैप्राचीनᳫंरेतोदधाति ॥ इंद्रस्यत्वाबाहुभ्यामुद्यच्छइत्याह ॥ इंद्रियमेवयजमानेदधाति ॥ बृ
हस्पतेर्मूर्ध्नाहरामीत्याह ॥ ब्रह्मवैदेवानांबृहस्पतिः ॥ ८ ॥ ब्रह्मणैवैनद्धरति ॥ उर्वंतरिक्षमन्विहीत्या
हगत्यै ॥ देवंगममसीत्याह ॥ देवानेवैनद्गमयति ॥ अनधःसादयति ॥ गर्भाणांधृत्याअप्रपादाय ॥
तस्माद्गर्भाःप्रजानामप्रपादुकाः ॥ उपरीवनिदधाति ॥ उपरीवहिसुवर्गोलोकः ॥ सुवर्गस्यलोकस्य
समष्ट्यै ॥ ९ ॥ सयोनित्वायंस्वधाकृतासीत्याहदार्वद्धेदंभरतिजायंतेबृहस्पतिःसमष्ट्यै ॥ २ ॥ ॥
पूर्वेद्युरिध्माबर्हिःकरोति ॥ यज्ञमेवारभ्यगृहीत्वोपवसति ॥ प्रजापतिर्यज्ञमसृजत ॥ तस्योखेअस्रᳫंसे
तां ॥ यज्ञोवैप्रजापतिः ॥ यत्सांनाय्योखेभवतः ॥ यज्ञस्यैवतदुखेउपदधात्यप्रस्रᳫंसाय ॥ शुंध
ध्वंदैव्यायकर्मणेदेवयज्यायाइत्याह ॥ देवयज्यायाएवैनानिशुंधति ॥ मातरिश्वनोघर्मोसीत्याह ॥

॥ १ ॥ अंतरिक्षंवैमातरिश्वनोघर्मः ॥ एषांलोकानांविधृत्यै ॥ द्यौरसिपृथिव्यसीत्याह ॥ दिवश्च
ह्येषापृथिव्याश्चसंभृता ॥ यदुखा ॥ तस्मादेवमाह ॥ विश्वधायाआसिपरमेणधाम्नेत्याह ॥ वृष्टिर्वैवि
श्वधायाः ॥ वृष्टिमेवावरुंधे ॥ दृꣳहस्वमाह्वारित्याहधृत्यै ॥ २ ॥ वसूनांपवित्रमसीत्याह ॥ प्राणावैव
सवः ॥ तेषांवाएतद्भागधेयं ॥ यत्पवित्रं ॥ तेभ्यएवैनत्करोति ॥ शतधारꣳसहस्रधारमित्याह ॥ प्राणे
ष्वेवायुर्दधातिसर्वत्वाय ॥ त्रिवृत्पलाशशाखायांदर्भमयंभवति ॥ त्रिवृद्वैप्राणः ॥ त्रिवृतमेवप्रा
णंमध्यतोयजमानेदधाति ॥ ३ ॥ सौम्यःपर्णःसंयोनित्वाय ॥ साक्षात्पवित्रंदर्भाः ॥ प्राक्सायमधि
निदधाति ॥ तत्प्राणापानयोरूपं ॥ तिर्यक्प्रातः ॥ तद्दर्शस्यरूपं ॥ दार्श्यꣳह्येतदहः ॥ अन्नंवैचंद्रमाः
॥ अन्नंप्राणाः ॥ उभयमेवोपैत्यजामित्वाय ॥ ४ ॥ तस्मादयꣳसर्वतःपवते ॥ हुतःस्तोकोहुताद्रप्स
इत्याहप्रतिष्ठित्यै ॥ हविषोस्कंदाय ॥ नहिहुतꣳस्वाहाकृतꣳस्कंदति ॥ दिविनाकोनामाग्निः ॥ तस्यं
विप्रुषोभागधेयं ॥ अग्नयेबृहतेनाकायेत्याह ॥ नाकमेवाग्निंभागधेयेनसमर्द्धयति ॥ स्वाहाद्यावापृथिवीभ्या
मित्याह ॥ द्यावापृथिव्योरेवैनत्प्रतिष्ठापयति ॥ ५ ॥ पवित्रवत्यानयति ॥ अपांचैवौषधीनांचरसꣳस
ꣳसृजति ॥ अथोओषधीष्वेवपशून्प्रतिष्ठापयति ॥ अन्वारभ्यवाचंयच्छति ॥ यज्ञस्यधृत्यै ॥ धारयन्ना

स्ते ॥ धारयंतइवहिदुहंति ॥ कामंधुक्षइत्याहातृतीयंस्यै ॥ त्रयंइमेल्लोकाः ॥ इमानेवल्लोकान्यजमानो
दुहे ॥ ६ ॥ अमूमितिनामंगृह्णाति ॥ भद्रमेवासांकर्माविष्कंरोति ॥ साविश्वायुःसाविश्वाव्यंचासा
विश्वकर्मेत्यांह ॥ इयंवैविश्वायुः ॥ अंतरिक्षंविश्वव्यंचाः ॥ असौविश्वकर्मा ॥ इमानेवैताभिर्ल्लोका
न्यथापूर्वंदुहे ॥ अथोयथांप्रदात्रेपुण्यंमाशास्ते ॥ एवमेवैनांएतदुपंस्तौति ॥ तस्मात्प्रादादित्युन्नीयवंदं
मानाउपस्तुवंतःपशून्दुहंति ॥ ७ ॥ वहदुग्धींद्रांयदेवेभ्योंहविरिति वाचंविसृंजते॥ यथादेवतमेवप्रसौंति ॥
दैव्यंस्यचमानुषस्यंचव्यावृत्त्यै ॥ त्रिरांह ॥ त्रिषंत्याहिदेवाः ॥ अवाचंयमोनंन्वारभ्योत्तंराः ॥ अपरिमितमे
वावंरुंधे ॥ नदांरुपात्रेणंदुह्यात् ॥ अग्निवद्वैदांरुपात्रं ॥ यद्दांरुपात्रेणंदुह्यात् ॥ ८ ॥ यातयां
म्नाहविषांयजेत ॥ अथोखल्वांहुः ॥ पुरोडाशमुखानिवैहवीꣳषि ॥ नेतइंतःपुरोडाशꣳहविषोया
मोस्तीतिं ॥ काममेवदांरुपात्रेणंदुह्यात् ॥ शूद्रएवनदुंह्यात् ॥ असंतोवाएषसंभूंतः ॥ यच्छू
द्रः ॥ अहविरेवतदित्यांहुः ॥ यच्छूद्रोदोग्धीतिं ॥ ९ ॥ अग्निहोत्रमेवनदुंह्याच्छूद्रः ॥ त
द्धिनोत्पुनंतिं ॥ यदाखलुवैपवित्रंमत्येतिं ॥ अथतद्धविरिति ॥ संपृंच्यध्वमृतावरीरित्यांह ॥ अपां

चैवौषधीनांचरसꣳसꣳसृजति ॥ तस्मादपांचौषधीनांचरसमुपजीवामः ॥ मंद्राधनस्यसातयइत्या
ह ॥ पुष्टिमेवयजमानेदधाति ॥ सोमेनत्वातनच्मींद्रायदधीत्याह ॥ १० ॥ सोममेवैनत्करोति ॥ यो
वैसोमंभक्षयित्वा ॥ संवत्सरꣳसोमंनपिबति ॥ पुनर्भक्ष्योस्यसोमपीथोभवति ॥ सोमःखलुवैसांना
य्यं ॥ यएवंविद्वान्त्सांनायंपिबति ॥ अपुनर्भक्ष्योस्यसोमपीथोभवति ॥ नमृन्मयेनापिदध्यात् ॥ यन्मृ
न्मयेनापिदध्यात् ॥ पितृदेवत्यꣳस्यात् ॥ ११ ॥ अयस्पात्रेणवादारुपात्रेणवापिदधाति ॥ तद्धिसदे
वं ॥ उदन्वद्भवति ॥ आपोवैरक्षोघ्नीः ॥ रक्षसामपहत्यै ॥ अदस्तमसिविष्णवेत्वेत्याह ॥ यज्ञोवैवि
ष्णुः ॥ यज्ञायैवैनददस्तंकरोति ॥ विष्णोहव्यꣳरक्षस्वेत्याहगुप्त्यै ॥ अनधःसादयति ॥ गर्भाणांधृत्या
अप्रपादाय ॥ तस्माद्गर्भाःप्रजानामप्रपादुकाः ॥ उपरीवनिदधाति ॥ उपरीवहिसुवर्गोल्लोकः ॥ सुव
र्गस्यलोकस्यसमष्ट्यै ॥ १२॥ असीत्याहधृत्यैयजमानेदधात्यजामित्वायस्थापयतिदुहेदुहंतिदुह्याद्दोग्धी
तिदधीत्याहस्यात्सादयतिपंचच ॥ ३ ॥ ॥ कर्मणेवांदेवेभ्यःशकेयमित्याहशक्त्यै ॥ यज्ञस्यवैसंततिमनु
प्रजाःपशवोयजमानस्यसंतायंते ॥ यज्ञस्यविच्छित्तिमनुप्रजाःपशवोयजमानस्यविछिद्यंते ॥ यज्ञस्यसं
ततिरसियज्ञस्यत्वासंतत्यैस्तृणामिसंतत्यैत्वायज्ञस्येत्याहवनीयात्संतनोति ॥ यजमानस्यप्रजायैपशूनाꣳ

संतत्यै ॥ अपःप्रणयति ॥ श्रद्धावाआपः ॥ श्रद्धामेवारभ्यप्रणीयप्रचरति ॥ अपःप्रणयति ॥ यज्ञो
वाआपः॥ १ ॥ यज्ञमेवारभ्यप्रणीयप्रचरति ॥ अपःप्रणयति ॥ वज्रोवाआपः ॥ वज्रमेवभ्रातृव्येभ्यः
प्रहृत्यप्रणीयप्रचरति ॥ अपःप्रणयति ॥ आपोवैरक्षोघ्नीः ॥ रक्षसामपहत्यै ॥ अपःप्रणयति ॥ आपोवै
देवानांप्रियंधाम ॥ देवानामेवप्रियंधामप्रणीयप्रचरति ॥ २ ॥ अपःप्रणयति ॥ आपोवैसर्वादेवताः ॥
देवताएवारभ्यप्रणीयप्रचरति ॥ वेषायत्वेत्याह ॥ वेषायह्येनदादत्ते ॥ प्रत्युष्टꣳरक्षःप्रत्युष्टाअरातयइत्या
ह ॥ रक्षसामपहत्यै ॥ धूरसीत्याह ॥ एषवैधुर्योग्निः ॥ तंयदनुपस्पृश्यातीयात् ॥ ३ ॥ अध्वर्युंचय
जमानंचप्रदहेत् ॥उपस्पृश्यात्येति ॥ अध्वर्योश्चयजमानस्यचाप्रदाहाय ॥ धूर्वंतंयोस्मान्धूर्वतितंधूर्वयं
वयंधूर्वामइत्याह ॥ द्वौवावपुरुषौ ॥ यंचैवधूर्वति ॥ यश्चैनंधूर्वति ॥ तावुभौशुचार्पयति ॥ त्वंदेवाना
मसिसस्नितमंपप्रितमंजुष्टतमंवह्नितमंदेवहूतममित्याह ॥ यथायजुरेवैतत् ॥ ४ ॥ अह्रुतमसिहविर्द्धा
नमित्याहानार्त्यै ॥ दृꣳहस्वमाह्वारित्याहधृत्यै ॥ मित्रस्यत्वाचक्षुषाप्रेक्षइत्याहमित्रत्वाय ॥ माभेर्मासं
विक्थामात्वाहिꣳसिषमित्याहाहिꣳसायै ॥ यद्वैकिंचवातोनाभिवाति ॥ तत्सर्वंवरुणदेवत्यं ॥ उरुवाता
येत्याह ॥अवारुणमेवैनंत्करोति ॥ देवस्यत्वासवितुःप्रसवइत्याहप्रसूत्यै॥अश्विनोर्बाहुभ्यामित्याह॥ ५ ॥
अश्विनौहिदेवानामध्वर्यूआस्तां ॥ पूष्णोहस्ताभ्यामित्याहयत्यै ॥अग्नयेजुष्टंनिर्वपामीत्याह ॥ अग्नयं

एवैनांजुष्टंनिर्वपति ॥ त्रिर्यजुंषा ॥ त्रयइमेलोकाः ॥ एषांलोकानामाप्त्यै ॥ तूष्णींचंतुर्थं ॥ अपरिमित
मेवावरुंधे ॥ सएवमेवानुपूर्वंहवीꣳषिनिर्वपति ॥ ६ ॥ इदंदेवानांमिदमुनःसहेत्यांहव्यावृत्त्यै ॥ स्फा
त्यैत्वानारात्याइत्यांहगुप्त्यै ॥ तमसीववाएषौंतश्चंरति ॥ यःपरीणहिं ॥ सुवंरभिविख्येषंवैश्वानरंज्योति
रित्यांह ॥ सुवंरेवाभिविपंश्यतिवैश्वानरंज्योतिः ॥ द्यावांपृथिवीहविषिंगृहीतउदंवेपेतां ॥ दृꣳहंतांदु
र्यांद्यावांपृथिव्योरित्यांह ॥ गृहाणांद्यावांपृथिव्योर्धृत्यै ॥ उर्वंतरिक्षमन्विहीत्यांहगत्यै ॥ अदिंत्यास्त्वो
पस्थेसादयामीत्यांह ॥ इयंवाअदितिः ॥ अस्याएवैनंदुपस्थेसादयति ॥ अग्नेहव्यꣳरक्षस्वेत्यांहगुप्त्यै ॥
॥ ७ ॥ यज्ञोवाआपोधामंप्रणीयप्रचंरत्यंतीयादेतद्वाहुभ्यामित्यांहहवीꣳषिनिर्वपतिगत्यैचत्वारिंच ॥
॥ ४ ॥ ॥ इंद्रोवृत्रमहन् ॥ सोपः ॥ अभ्यंम्रियत ॥ तासांयन्मेध्यंयज्ञियꣳसदेवमासीत् ॥ तदपो
दंक्रामत् ॥ तेदर्भाअंभवन् ॥ यद्दर्भैरपउत्पुनाति ॥ याएवमेध्यायज्ञियाःसदेवाआपः ॥ ताभिरेवैनाउ
त्पुनातिद्वाभ्यामुत्पुनाति ॥ १ द्विपाद्यजंमानःप्रतिंष्ठित्यै ॥ देवोवंःसवितोत्पुनात्वित्यांह ॥ सवितृप्रसूत
एवैनाउत्पुनाति ॥ अच्छिंद्रेणपवित्रेणेत्यांह ॥ असौवाआदित्योच्छिंद्रंपवित्रं ॥ तेनैवैनाउत्पुनाति ॥ व
सोःसूर्यस्यरश्मिभिरित्यांह ॥ प्राणावाआपः ॥ प्राणावसंवः ॥ प्राणारश्मयंः ॥ २ ॥ प्राणैरेवप्राणान्त्संपृणक्ति ॥

सावित्रियर्चा ॥ सवितृप्रसूतंमेकर्मासदिति ॥ सवितृप्रसूतमेवास्यकर्मभवति ॥ पच्छोगायत्रियात्रिष्ट्यमृद्ध
त्वाय ॥ आपोदेवीरग्रेपुवोअग्रेगुवइत्याह ॥ रूपमेवासामेतन्महिमानंव्याचष्टे ॥ अग्रइमंयज्ञंनयताग्रेयज्ञ
पतिमित्याह ॥ अग्रएवयज्ञंनयंति ॥ अग्रेयज्ञपतिं ॥ ३ ॥ युष्मानिंद्रोवृणीतवृत्रतूर्येयूयमिंद्रमवृणीध्वं
वृत्रतूर्यइत्याह ॥ वृत्रꣳहंहनिष्यन्निंद्रआपोववे ॥ आपोहेंद्रंवव्रिरे ॥ संज्ञामेवासामेतत्सामानंव्याचष्टे
॥ प्रोक्षिताःस्थेत्याह ॥ तेनापःप्रोक्षिताः ॥ अग्नयेवोजुष्टंप्रोक्षाम्यग्नीषोमाभ्यामित्याह ॥ यथादेवतमेवै
नान्प्रोक्षति ॥ त्रिःप्रोक्षति ॥ त्र्यावृद्धियज्ञः ॥ ४ ॥ अथोरक्षसामपहत्यै ॥ शुंधध्वंदैव्यायकर्मणेदेव
यज्यायाइत्याह ॥ देवयज्यायाएवैनानिशुंधति ॥ त्रिःप्रोक्षति ॥ त्र्यावृद्धियज्ञः ॥ अथोमेध्यत्वाय ॥
अवधूतꣳरक्षोवधूताअरातयइत्याह ॥ रक्षसामपहत्यै ॥ अदित्यास्त्वगसीत्याह ॥ इयंवाअदितिः ॥
॥ ६ ॥ अस्याएवैनत्त्वचंकरोति ॥ प्रतित्वापृथिवीवेत्त्वित्याहप्रतिष्ठित्यै ॥ पुरस्तात्प्रतीचीनग्रीवमुत्तर
लोमोपस्तृणातिमेध्यत्वाय ॥ तस्मात्पुरस्तात्प्रत्यंचःपशवोमेधमुपतिष्ठंते ॥ तस्मात्प्रजामृगंग्राहुकाः ॥
यज्ञोदेवेभ्योनिलायत ॥ कृष्णोरूपंकृत्वा ॥ यत्कृष्णाजिनेहविरध्यवहंति ॥ यज्ञादेवतद्यज्ञंप्रयुंक्ते ॥ ह
विषोस्कंदाय ॥ ६ ॥ अधिषवणमसिवानस्पत्यमित्याह ॥ अधिषवणमेवैनत्करोति ॥ प्रतित्वादित्या

स्त्वग्वेत्वित्यांहसयत्वायं ॥ अग्नेस्तनूरसीत्यांह ॥ अग्नेर्वाएषातनूः ॥ यदोषंधयः ॥ वाचोविसर्जनमि
त्यांह ॥ यदाहिप्रजाओषंधीनामश्नंति ॥ अथवाचंविसृजंतेदेववीतयेत्वागृह्णामीत्यांह ॥ ७ देवताभि
रेवैनत्समर्द्धयति ॥ अद्रिरसिवानस्पत्यइत्यांह ॥ ग्रावाणमेवैनंत्करोति ॥ सइदंदेवेभ्योहव्यꣳसुशमि
शमिष्वेत्यांहशांत्यै ॥ हविष्कृदेहीत्यांह ॥ यएवदेवानाꣳहविष्कृतः ॥ तान्ह्वयति ॥ त्रिर्ह्वयति ॥ त्रिषत्याहिदेवाः
इषमावदोर्जमावदेत्यांह ॥ ८ ॥ इषमेवोर्जंयजमानेदधाति ॥ द्युमद्वदतवयꣳसंघातंजेष्मेत्यांहभ्रा
तृव्याभिभूत्यै ॥ मनोश्रद्धादेवस्ययजमानस्यासुरघ्नीवाक् ॥ यज्ञायुधेषुप्रविष्टासीत् ॥ तेषुरायावंतोय
ज्ञायुधानामुद्वदंतामुपाशृण्वन् ॥ तेपराभवन् ॥ तस्मात्स्वानांमध्येवसायंयजेत ॥ यावंतोस्यभ्रातृव्या
यज्ञायुधानामुद्वदंतामुपशृण्वंति ॥ तेपराभवंति ॥ उच्चैःसमाहंतवाआंहविजित्यै ॥ ९ ॥ वृक्कएषामि
द्रियंवीर्यं ॥ श्रेष्ठएषाभवाति ॥ वर्षवृद्धमसिप्रतित्वावर्षवृद्धंवेत्वित्यांह ॥ वर्षवृद्धावाओषधयः ॥ व
र्षवृद्धाइषीकाःसमृध्यै ॥ यज्ञꣳरक्षाꣳस्यनुप्राविशन् ॥ तान्यस्नापशुभ्योनिरवादयंत ॥ तुषैरोषधी
भ्यः ॥ परापूतꣳरक्षः परापूताअरातयइत्यांह ॥ रक्षसामपहत्यै ॥ १० ॥ रक्षसांभागोसीत्यांह
॥ तुषैरेवरक्षाꣳसिनिरवदयते ॥ अपउपस्पृशतिमेध्यत्वायं ॥ वायुर्वोविविनक्त्वित्यांह ॥ पवित्रंवै व

युः ॥ पुनात्येवैनान् ॥ अंतरिक्षादिववाएतेप्रस्कंदंति ॥ येशूर्पात् ॥ देवोवःसावितााहिरण्यपा
णिःप्रतिगृह्णात्वित्यांहप्रतिष्ठित्यै ॥ हविषोस्कंदाय ॥ त्रिष्फलीकर्त्तवा आंह ॥ त्र्यावृद्धिय
ज्ञः ॥ अथोमेध्यत्वाय ॥ ११ ॥ द्वाभ्यामुत्पुनातिरश्मयोनयंत्यग्रेयज्ञपतिंयज्ञोदितिरस्कंदाय
गृह्णामीत्यांहवदेत्यांहविजित्याअपहत्यात्प्रस्कंदायत्रोणिंच ॥ ५ ॥ ॥ अवधूतःरक्षोवधूता
अरातयइत्यांह ॥ रक्षसामपहत्यै ॥ अदित्यास्त्वगसीत्यांह ॥ इयंवाअदितिः ॥ अस्याएवैनत्वचंकरो
ति ॥ प्रतित्वापृथिवीवेत्वित्यांहप्रतिष्ठित्यै ॥ पुरस्तात्प्रतीचीनंग्रीवमुत्तरलोमोपस्तृणातिमेध्यत्वाय ॥
तस्मात्पुरस्तात्प्रत्यंचःपशवोमेधमुपतिष्ठंते ॥ तस्मात्प्रजामृगंग्राहुकाः ॥ यज्ञोदेवेभ्योनिलायत ॥ १ ॥
कृष्णोरूपंकृत्वा ॥ यत्कृष्णाजिनेहविरधिपिनष्टि ॥ यज्ञादेवतद्यज्ञंप्रयुंक्ते ॥ हविषोस्कंदाय ॥ द्यावा
पृथिवीसहास्तां ॥ तेशम्यामात्रमेकमहर्व्यैतांशम्यामात्रमेकमहः ॥ दिवस्कंभनिरसिप्रातित्वाादित्यास्त्व
ग्वेत्वित्यांह ॥ द्यावापृथिव्योर्वीत्यै ॥ धिषणासिपर्वत्याप्रतित्वादिवस्कंभनिर्वेत्वित्यांह ॥ द्यावापृ
थिव्योर्विधृत्यै ॥ २ ॥ धिषणासिपार्वतेयीप्रतित्वापर्वतिर्वेत्वित्यांह ॥ द्यावापृथिव्योर्धृत्यै ॥ देवस्यं
त्वासवितुःप्रसवइत्यांहप्रसूत्यै ॥ अश्विनोर्बाहुभ्यामित्यांह ॥ अश्विनौहिदेवानांमध्वर्यूआस्तां ॥

पूष्णोहस्ताभ्यामित्याहयत्यै ॥ अधिवपामीत्याह ॥ यथादेवतमेवैनानधिवपति ॥ धान्यमसिधिनु
हिदेवानित्याह ॥ एतस्ययजुषोवीर्येण ॥ ३ ॥ यावदेकांदेवताकामयंतेयावदेका ॥ तावदाहु
ति.प्रथते ॥ नहितदस्ति ॥ यत्तावदेवस्यात् ॥ यावज्जुहोति ॥ प्राणायत्वापानायत्वेत्याह ॥ प्राणा
नेवयजमानेदधाति ॥ दीर्घामनुप्रसितिमायुषेधामित्याह ॥ आयुरेवास्मिन्दधाति ॥ अंतरिक्षादिववा
एतानिप्रस्कंदंति ॥ यानिदृषदः ॥ देवोवःसविताहिरण्यपाणिःप्रतिगृह्णात्वित्याहप्रतिष्ठित्यै ॥ हवि
षोस्कंदाय ॥ असंवपंतोपिश्षाणूनिकुरुतादित्याहमेध्यत्वाय ॥ ४ ॥ निलायतविधृत्यैवीर्येणस्कंद
तिचत्वारिंच ॥ ६ ॥ धृष्टिरसिब्रह्मयच्छेत्याहधृत्यै ॥ अपाग्नेग्निमामादंजहिनिष्क्रव्यादंसेधादेवयजंव
हेत्याह ॥ यएवामात्क्रव्यात् ॥ तमपहत्य ॥ मेध्येग्नौकपालमुपदधाति ॥ निर्दग्धंरक्षोनिर्दग्धाअरा
तयइत्याह ॥ रक्षांस्येवनिर्दहति ॥ अग्निवत्युपदधाति ॥ अस्मिन्नेवलोकेज्योतिर्द्धत्ते ॥ अंगारमाधि
वर्त्तयति ॥ १ ॥ अंतरिक्षएवज्योतिर्धत्ते ॥ आदित्यमेवामुष्मिंल्लोकेज्योतिर्धत्ते ॥ ज्योतिष्मंतोस्माउ
मेलोकाभवंति ॥ यएवंवेद ॥ ध्रुवमसिपृथिवींदृंहेत्याह ॥ पृथिवीमेवैतेनदृंहति ॥ धर्त्रमस्यंतरिक्षं
दृंहेत्याह ॥ अंतरिक्षमेवैतेनदृंहति ॥ धरुणमसिदिवंदृंहेत्याह ॥ दिवमेवैतेनदृंहति ॥ २ ॥

घर्मासिदिशोदृꣳहेत्याह ॥ दिशएवैतेनदृꣳहति ॥ इमानेवैतैर्लोकान्दृꣳहति ॥ दृꣳहंतेस्माइमेलोकाः
प्रजयापशुभिः ॥ यएवंवेद ॥ त्रीण्यग्रेकपालान्युपदधाति ॥ त्रयइमेलोकाः ॥ एषांलोकानामाप्त्यै ॥
एकमग्रेकपालमुपदधाति ॥ एकंवाअग्रेकपालंपुरुषस्यसंभवति ॥ ३ ॥ अथद्वे ॥ अथत्रीणि ॥ अथ
चत्वारि ॥ अथाष्टौ ॥ तस्मादष्टाकपालंपुरुषस्यशिरः ॥ यदेवंकपालान्युपदधाति ॥ यज्ञोवैप्रजाप
तिः ॥ यज्ञमेवप्रजापतिꣳसꣳस्करोति ॥ आत्मानमेवतत्सꣳस्करोति ॥ तꣳसꣳस्कृतमात्मानं ॥ ४ ॥
अमुष्मिंल्लोकेनुपरैति ॥ यदष्टावुपदधाति ॥ गायत्रियातत्संमितं ॥ यन्नव ॥ त्रिवृतातत् ॥ यद्दश ॥
विराजातत् ॥ यदेकादश ॥ त्रिष्टुभातत् ॥ यद्द्वादश ॥ ५ ॥ जगत्यातत् ॥ छंदःसंमितानिसउपदध
त्कपालानि ॥ इमान्लोकाननुपूर्वंदिशोविधृत्यैदृꣳहति ॥ अथायुःप्राणान्प्रजांपशून्यजमानेद
धाति ॥ सजातानस्माअभितोबहुलान्करोति ॥ चितस्थेत्याह ॥ यथायजुरेवैतत् ॥ भृगूणामंगिरसां
तपसातप्यध्वमित्याह ॥ देवतानामेवैनानितपसातपति ॥ तानिततःसꣳस्थिते ॥ यानिघर्मेकपाला
न्युपचिन्वंतिवेधसइतिचतुष्पदयर्चाविमुंचति ॥ चतुष्पादःपशवः ॥ पशुष्वेवोपरिष्टात्प्रतितिष्ठति ॥ ६ ॥
वर्तयतिदिवमेवैतेनदृꣳहतिसंभवानिसꣳस्कृतमात्मानंद्वादशसꣳस्थिनेत्रीणिच ॥ ७ ॥ ॥ देवस्य
त्वासवितुःप्रसवइत्याहप्रसूत्यै ॥ अश्विनोर्बाहुभ्यामित्याह ॥ अश्विनौहिदेवानामध्वर्यूआस्तां ॥

पूष्णोहस्ताभ्यामित्याहयत्यै ॥ संवपामीत्याह ॥ यथादेवतमेवैनानिसंवपति ॥ समापोअद्भिरग्मत
समोषधयोरसेनेत्याह ॥ आपोवाओषधीर्जिन्वंति ॥ ओषधयोपोजिन्वंति ॥ अन्यावाएतासामन्या
जिन्वंति ॥ १ ॥ तस्मादेवमाह ॥ सꣳरेवतीर्जगतीभिर्मधुमतीर्मधुमतीभिःसृज्यध्वमित्याह ॥ आपोवै
रेवतीः ॥ पशवोजगतीः ॥ ओषधयोमधुमतीः ॥ आपओषधीःपशून् ॥ तानेवास्माएकधासꣳसृज्य ॥
मधुमतःकरोति ॥ अद्भ्यःपरिप्रजाताःस्थसमद्भिःपृच्यध्वमितिपर्याप्लावयति ॥ यथासुवृष्टइ
मामनुविसृत्य ॥ २ आपओषधीर्महयंति ॥ तादृगेवतत् ॥ जनयत्यैत्वासंयौमीत्याह ॥ प्रजाएवैते
नंदाधार ॥ अग्नयेत्वाग्नीषोमाभ्यामित्याहव्यावृत्यै ॥ मखस्यशिरोसीत्याह ॥ यज्ञोवैमखः ॥ तस्यैत
च्छिरः ॥ यत्पुरोडाशः ॥ तस्मादेवमाह ॥ ३ ॥ घर्मोसिविश्वायुरित्याह ॥ विश्वमेवायुर्यजमानेद
धाति ॥ उरुप्रथस्वोरुतेयज्ञपतिःप्रथतामित्याह ॥ यजमानमेवप्रजयापशुभिःप्रथयति ॥ त्वचंगृह्णी
ष्वेत्याह ॥ सर्वमेवैनꣳसतनुंकरोति ॥ अथापआनीयपरिमार्ष्टि ॥ माꣳसएवतत्त्वचंदधाति ॥ तस्मा
त्वचामाꣳसंछन्नं ॥ घर्मोवाएषोशांतः ॥ ४ ॥ अर्धमासेर्धमासेप्रवृज्यते ॥ यत्पुरोडाशः ॥ सईश्व
रोयजमानꣳशुचाप्रदहः ॥ पर्यग्निकरोति ॥ पशुमेवैनमकः ॥ शांत्याअप्रदाहाय ॥ त्रिःपर्यग्निकरो
ति ॥ त्र्यावृद्धियज्ञः ॥ अथोरक्षसामपहत्यै ॥ अंतरितꣳरक्षोंतरिताअरातयइत्याह ॥ ५ ॥ रक्षसाम

तार्ह्यै ॥ पुरोडाशंवाआधिश्रितꣳरक्षांꣳस्यजिघाꣳसन् ॥ दिविनाकोनामाग्नीरक्षोहा ॥ सएवास्मा द्रक्षाꣳस्यपाहन् ॥ देवस्त्वांसविताश्रंपयत्वित्याह ॥ सवितृप्रसूतएवैनꣳश्रपयति ॥ वर्षिष्ठेअधिनाक इत्याह ॥ रक्षसामपहत्यै ॥ अग्निस्तेतनुवंमातिधागित्याहानतिदाहाय ॥ अग्नेहव्यꣳरक्षस्वेत्या हगुप्त्यै ॥ ६ ॥ अविदहंतश्रपयतेतिवाचंविसृजते ॥ यज्ञमेवहवोꣳश्यंभिव्याहृत्यप्रतनुते ॥ पुरो रुचमविदाहायशृत्यैकरोति ॥ मस्तिष्कोवैपुरोडाशः ॥ तंयन्नाभिवासयेत् ॥ आविर्मस्तिष्कः स्यात् ॥ अभिवासयति ॥ तस्माद्गुहामस्तिष्कः ॥ भस्मनाभिवासयति ॥ तस्मान्माꣳसेनास्थिछन्नं ॥ ७ ॥ वेदे नाभिवासयति ॥ तस्मात्केशैःशिरश्छन्नं ॥ अखलतिभावुकोभवति ॥ यएवंवेद ॥ पशोर्वैप्रतिमापुरो डाशः ॥ सनायजुष्कमभिवास्यः ॥ वृथेवस्यात् ॥ ईश्वरायजमानस्यपशवःप्रमेतोः ॥ संब्रह्मणापृच्य स्वेत्याह ॥ प्राणावैब्रह्म ॥ ८ ॥ प्राणाःपशवः ॥ प्राणैरेवपशून्त्संपृणक्ति ॥ नप्रमायुकाभवंति ॥ य जमानोवैपुरोडाशः ॥ प्रजापशवःपुरीषं ॥ यदेवमभिवासयति ॥ यजमानमेवप्रजयापशुभिःस मर्द्धयति ॥ देवावैहविर्भृत्वाब्रुवन् ॥ कस्मिन्निदंम्रक्ष्यामहइति ॥ सोग्निरब्रवीत् ॥ ९ ॥ मयितनूःसं निधध्वं ॥ अहंवस्तंजनयिष्यामि ॥ यस्मिन्म्रक्ष्यध्वइति ॥ तदेवाअग्नौतनूसन्यदधत ॥ तस्मा दाहुः ॥ अग्निःसर्वादेवताइति ॥ सोंगारेणापः ॥ अभ्यपातयत् ॥ ततएकतोजायत ॥ सद्वितो

यमभ्यपातयत् ॥ १० ॥ ततोद्वितोजायत ॥ सतृतीयमभ्यपातयत् ॥ ततस्त्रितोजायत ॥ यदद्भ्योजायत ॥ तदाप्त्यानामाप्त्यत्वं ॥ यदात्मभ्योजायंत ॥ तदात्म्यानामात्म्यत्वं ॥ तेदेवाआप्त्येष्वमृजत ॥ आप्त्याअमृजतसूर्याभ्युदिते ॥ सूर्याभ्युदितःसूर्याभिनिम्रुक्ते ॥ १ ॥ सूर्याभिनिम्रुक्तःकुनखिनि । कुनखीश्यावदति ॥ श्यावदन्नग्रदिधिषौ ॥ अग्रदिधिषुःपरिवित्ते ॥ परिवित्तोवीरहणि ॥ वीरहाब्रह्महणि ॥ तद्ब्रह्महणंनात्यच्यवत ॥ अंतर्वेदिनिनयत्यवरुध्यै ॥ उल्मुकेनाभिगृह्णातिशृतत्वाय ॥ शृतकामाइवहिदेवाः ॥ १२ ॥ अन्याजिन्वंस्यनुविसृत्यैवमाहाशांतआहगुप्त्यैयच्छन्नंब्रह्मांब्रवीद्धितीयमभ्यपातयत्सूर्याभिनिम्रुक्तेदेवाः ॥ ८ ॥

॥ देवस्यत्वासवितुःप्रसवइतिस्फ्यमादत्तेप्रसूत्यै ॥ अश्विनोर्बाहुभ्यामित्याह ॥ अश्विनौहिदेवानामध्वर्यूआस्तां ॥ पूष्णोहस्ताभ्यामित्याहयत्यै ॥ आददइंद्रस्यबाहुरसिदक्षिणइत्याह ॥ इंद्रियमेवयजमानेदधाति ॥ सहस्रभृष्टिःशततेजाइत्याह ॥ रूपमेवास्यैतन्महिमानंव्याचष्टे ॥ वायुरसितिग्मतेजाइत्याह ॥ तेजोवैवायुः ॥ १ ॥ तेजएवास्मिन्दधाति ॥ विषाद्वैनामासुरआसीत् ॥ सोबिभेत् ॥ यज्ञेनमादेवाअभिभविष्यंतीति ॥ सपृथिवीमभ्यवमीत् ॥ सामेध्याभवत् ॥ अथोयदिंद्रोवृत्रमहन् ॥ तस्यलोहितंपृथिवीमनुव्यधावत् ॥ सामेध्याभवत् ॥ पृथिविदेवय

जनीत्याह ॥ २ ॥ मेध्यामेवैनांदेवयजनींकरोति ॥ ओषध्यास्तेमूलंमाहिंसिषमित्याह ॥ आष
धीनामहिंसायै ॥ व्रजंगच्छगोस्थानमित्याह ॥ छंदांसिवैव्रजोगोस्थानः ॥ छंदांस्येवास्यैव्र
जंगोस्थानंकरोति ॥ वर्षतुतेद्यौरित्याह ॥ वृष्टिर्वैद्यौः ॥ वृष्टिमेवावरुंधे ॥ बधानदेवसवितःपर
मस्यांपरावतीत्याह ॥ ३ ॥ द्वौवावपुरुषौ ॥ यंचैवद्वेष्टि ॥ यश्चैनंद्वेष्टि ॥ तावुभौबध्नातिपरमस्यां
परावतिंशतेनपाशैः ॥ योस्मान्द्वेष्टियंचवयंद्विष्मस्तमतोमामौगित्यहानिर्मुक्त्यै ॥ अररुर्वैना
मासुरआसीत् ॥ सपृथिव्यामुपम्लुप्तोशयत् ॥ तंदेवाअपहतोररुः पृथिव्याइतिपृथिव्याअपाघ्न
न् ॥ भ्रातृव्योवाअररुः ॥ अपहतोररुःपृथिव्याइतियदाह ॥ ४ ॥ भ्रातृव्यमेवपृथि
व्याअपहंति ॥ तेमन्यंत ॥ दिवंवाअयमितःपतिष्यतीति ॥ तमररुस्तेदिवंमास्कानितिदि
वःपर्यबाधंत ॥ भ्रातृव्योवाअररुः ॥ अररुस्तेदिवंमास्कानितियदाह ॥ भ्रातृव्यमेवादिवःपरिबाधते ॥
स्तंवयजुर्हरति ॥ पृथिव्याएवभ्रातृव्यमपहंति ॥ द्वितीयंहरति ॥ ५ ॥ अंतरिक्षादेवैनमपहंति ॥
तृतीयंहरति ॥ दिवएवैनमपहंति ॥ तूष्णींचतुर्थंहरति ॥ अपरिमितादेवैनमपहंति ॥ असुराणांवा
इयमग्रआसीत् ॥ यावदासीनःपरापश्यति ॥ तावद्देवानां ॥ तेदेवाअब्रुवन् ॥ अस्त्वेवनोस्यामपि

तिं ॥ ६ ॥ क्यंन्नोदास्यथेतिं ॥ यावंत्स्वयपारिगृह्णीयेतिं ॥ तेवसंवस्त्वेतिंदक्षिणतःपर्यंगृह्णन् ॥ रु
द्रास्त्वेतिंपश्चात् ॥ आदित्यास्त्वेत्युत्तरतः ॥ तेंग्निनाप्राचोंजयन् ॥ वसुंभिर्दक्षिणा ॥ रुद्रैःप्रत्यंचंः ॥
आदित्यैरुदंचः ॥ यस्यैवंविदुषोवेदिंपरिगृह्णंतिं ॥ ७ ॥ भवंत्यात्मनां ॥ परांस्यभ्रातृंव्योभवति ॥ दे
वस्यंसवितुःसवइत्यांहप्रसूंत्यै ॥ कर्मकृण्वंतिवेधसइत्यांह ॥ इषितश्ंहिकर्मक्रियते ॥ पृथिव्यैमेध्यं
चोमध्यंचव्युदंक्रामतां ॥ प्राचोनमुदीचोनंमेध्यं ॥ प्रतीचीनंदक्षिणामेध्यं ॥ प्राचोमुदीचींप्रवणांकरो
ति । मेध्यांमेवैनांदेवयजनींकरोति ॥ ८ ॥ प्रांचैविंद्यश्ंसावुन्नंयाति ॥ आहवनोयस्यपारिगृहीत्यै ॥
प्रतीचीश्रोणीं ॥ गार्हंपत्यस्यपरिंगृहीत्यै ॥ अथोमिथुनत्वायं ॥ उद्धंति ॥ यदेवास्यांअमेध्यं॥ तदपंहं
ति ॥ उद्धंति ॥ तस्मादोषंधयःपरांभवंति ॥ ९ ॥ मूलंछिनात्ति ॥ भ्रातृंव्यस्यैवमूलंछिनात्ति ॥ मूलंवा
अंतितिष्ठद्रक्षाश्ंस्यनूत्पिंपते ॥ यद्धस्तेनछिंद्यात् ॥ कुनखिनीःप्रजास्युः ॥ स्फ्येनंछिनत्ति ॥ वज्रोवै
स्फ्यः ॥ वज्रेणैवयज्ञाद्रक्षाश्ंस्यपंहंति ॥ पितृदेवत्यातिंखाता ॥ इयंतींखनति ॥ १० ॥ प्रजापंतिना
यज्ञमुखेनसंमितां ॥ वेदिर्देवेभ्योनिलांयत ॥ तांचतुरंगुलेन्वंविंदन् ॥ तस्मांच्चतुरंगुलंखेयां ॥ चतुरंगु
लंखनाति ॥ चतुरंगुलेह्योषंधयःप्रतितिष्ठंति ॥ आप्रंतिष्ठायैंखनाति ॥ यजंमानमेवप्रंतिष्ठांगमयति ॥

दक्षिणतोवर्षीयसींकरोति ॥ देवयजनस्यैवरूपमकः ॥ ११ ॥ पुरीषवर्तींकरोति ॥ प्रजावैपशवःपुरीषं ॥
प्रजयैवैनंपशुभिःपुरीषवंतंकरोति ॥ उत्तरंपरिग्राहंपरिगृह्णाति ॥ एतावतीवैपृथिवी ॥ यावतीवेदिः ॥
तस्याएतावंतएवभ्रातृव्यंनिर्भज्य ॥ आत्मनउत्तरंपरिग्राहंपरिगृह्णाति ॥ ऋतमस्यृतसदनमस्यृतश्री
रसीत्याह ॥ यथायजुरेवैतत् ॥ १२ ॥ क्रूरमिववाएतत्करोति ॥ यद्वेदिंकरोति ॥ धाअसिस्व
धाअसीतियोयुप्यतेशांत्यै ॥ उर्वीचासिवस्वीचासीत्याह ॥ उर्वीमेवैनांवस्वींकरोति ॥ पुराक्रूरस्य
विसृपोविरप्शिन्नित्याहमेध्यत्वाय ॥ उदादायपृथिवींजीरदानुर्यामैरयन्चंद्रमसिस्वधाभिरित्याह ॥ य
देवस्याअमेध्यं ॥ तदपहत्य ॥ मेध्यांदेवयजनींकृत्वा ॥ १३ ॥ यददश्चंद्रमसिमेध्यं ॥ तदस्यामेरयति
॥ तांधीरासोअनुदृश्ययजंतइत्याहानुख्यात्यै ॥ प्रोक्षणीरासादय ॥ इध्माबर्हिरुपसादय ॥ स्रुवंचस्रु
चश्चसंमृड्ढि ॥ पत्नीꣳसन्नह्य ॥ आज्येनोदेहीत्याहानुपूर्वतायै ॥ प्रोक्षणीरासादयति आपोवैरक्षोघ्नीः
॥ १४ ॥ रक्षसामपहत्यै ॥ स्फ्यस्यवर्त्मन्त्सादयति ॥ यज्ञस्यसंतत्यै ॥ उवाचहासितोदेवलः ॥ एतावतीर्वा अ
मुष्मिँल्लोकआपआसन् ॥ यावतीःप्रोक्षणीरिति ॥ तस्माद्बह्वीरासाद्याः ॥ स्फ्यमुदस्यन् ॥ यंद्विष्यात्तंध्या
येत् ॥ शुचैवैनमर्पयति ॥ १५ ॥ वैवायुराहपरावतीत्याहाद्वितीयश्हरतीतिपरिगृह्णंतिदेवयजनीक

 

 

रोतिभवंतिखनत्यकरेतत्कृत्वारक्षोघ्नींरंपयाति ॥ ९ ॥ ॥ वज्रोवैस्फ्यः॥ यदन्वंचंधारयेत् ॥ वज्रेणंनुयुः
क्षंण्वीत ॥ पुरस्तांत्तिर्यंचंधारयाति ॥ वज्रोवैस्फ्यः ॥ वज्रेणैवयज्ञस्यंदक्षिणतोरक्षाꣳस्यपंहंति ॥ अग्नि
भ्यांप्राचंश्चप्रतीचंश्च ॥ स्फ्यनोदीचश्चाधराचंश्च ॥ स्फ्येनवाएषवज्रेणास्यैपाप्मानंभ्रातृंव्यमपहत्यं ॥
उत्करेधिप्रवृश्चति ॥ १ ॥ यथोंपधायंवृश्चंत्येवं ॥ हस्तावर्वनेनिक्ते ॥ आत्मानंमेवपंवयते ॥ स्फ्यंप्र
क्षांलयतिमेध्यत्वायं ॥ अथोंपाप्मनंएवभ्रातृंव्यस्यंन्यगंछिनाति॥ इध्माबर्हिरुपंसादयतियुक्त्यै ॥ यज्ञस्यं
मिथुनत्वायं ॥ अथोंपुरोरुचंमेवैतांदंधाति ॥ उत्तरस्यकर्मणोनुख्यात्यै ॥ नपुरस्तांत्प्रत्यगुपंसादयेत् ॥
॥ २ ॥ यत्पुरस्तांत्प्रत्यगुंपसादयेत् ॥ अन्यत्रांहुतिपथादिध्मंप्रतिंपादयेत् ॥ प्रजावैबर्हिः ॥ अपंरा
ध्नुयाद्बर्हिषांप्रजानांप्रजननं ॥ पश्चात्प्रागुपंसादयाति ॥ आहुतिपथेनेध्मंप्रतिंपादयाति ॥ संप्रत्यंवबर्हि
षांप्रजानांप्रजननंनमुपैंति ॥ दक्षिणमिध्मं ॥ उत्तरंबर्हिः ॥ आत्मावाइध्मः ॥ प्रजाबर्हिः ॥ प्रजाह्या
त्मनउत्तरतरातीर्थे॥ ततोमेधंमुपनीयं ॥ यथादेवतमेवैनत्प्रतिंष्ठापयाति ॥ प्रतिंतिष्ठतिप्रजायांपशुभिर्यं
जमानः ॥ ३ ॥ वृश्चतिसादयेदिध्मःपंचंच ॥ १० ॥ ॥ तृतीयंस्यांदेवस्यांश्वपर्शुंयोवैपूर्वेद्युःकर्मं
णेवाभिंद्रोवृत्रमंहन्त्सोंपोवधूतंधूष्टिर्देवस्येत्यांहसंवंपामिदेवस्यस्फ्यमादत्तेवज्रोवैस्फ्योदशं ॥ १० ॥

तृतीयस्यायज्ञस्यानंतिरेकायपविर्त्रवत्यध्वर्युचाधिषवणमस्यंतरिक्ष एवज्योतीरक्षसामंतर्हित्यैद्यौवावपुरुषीय

ददश्चंद्रमंसिमेध्यंपंचाशीतिः ॥ ८५ ॥ ॥ हरिःॐ ॥ ॥ प्रत्युष्टश्रक्षःप्रत्युष्टाअरातयइ

त्याह ॥ रक्षसामपंहत्यै ॥ अग्नेर्वस्तेजिंष्टेनतेजसानिष्टपामीत्याहमेध्यत्वाय ॥स्रुचःसंमार्ष्टि॥ स्रुवमग्रे

॥ पुमांस्समेवाभ्यःसश्श्यंतिमिथुनत्वाय ॥ अथजुहूं ॥ अथोपभृतं ॥ अथध्रुवां ॥ असौवैजुहूः ॥

॥ १ ॥ अंतरिक्षमुपभृत् ॥ पृथिवीध्रुवा ॥ इमेवैलोकःस्रुचः ॥ वृष्टिःसंमार्जनानि ॥ वृष्टिर्वाइमा

न्लोकाननुपूर्वंकल्पयति॥ तेततःक्लृप्ताःसमेधंते॥समेधंतेस्माइमेलोकाःप्रजयापशुभिः ॥यएवंवेद॥यदिंका

मयेतवर्षुकःपर्जन्यःस्यादिति ॥ अग्रतःसंमृंज्यात् ॥ २ ॥ वृष्टिमेवानियच्छाति॥ अवाचीनांग्राहिवृष्टिः

॥ यदिंकामयेतावर्षुकःस्यादिति ॥ मूलतःसंमृंज्यात् ॥ वृष्टिमेवोद्यच्छति ॥ तदुवाआहुः ॥ अग्रतए

वोपरिष्टात्संमृंज्यात् ॥ मूलतोधस्तात्॥ तदनुपूर्वंकल्पते ॥ वर्षुकोभवतीति ॥ ३ ॥ प्राचीमभ्याका

रं ॥ अग्नेरंतरतः ॥ एवमिंवह्यन्नमद्यते ॥ अथोअग्राद्वाओषधीनामूर्जंप्रजाउपजीवंति ॥ ऊर्जएवान्नाद्य

स्यावरुध्यै ॥ अधस्तात्प्रतीचीं ॥ दंडमुत्तमतः ॥ मूलेनमूलंप्रतिष्ठित्यै ॥ तस्मादरत्नौप्रांच्युपरिष्टाह्लो

मा॑नि ॥ प्र॒त्यं॑च्या॒धस्ता॑त् ॥ ४॥ स्रुग्ध्ये॑षा ॥ प्राणोवैस्रु॒वः॥ जु॒हू॒र्दक्षि॑णो॒हस्तः॑ ॥ उ॒प॒भृत्स॒व्यः ॥ आ॒त्माध्रु॒वा ॥ अन्नꣳस॒म्मार्जनानि ॥ मु॒ख॒तोवैप्रा॒णो॑पा॒नोभू॒त्वा ॥ आ॒त्मान॒मन्नं॑प्रवि॒श्यं ॥ बा॒ह्य॒तस्त॒नुवꣳ॑शु॒भयति ॥ तस्मा॑त्स्रु॒वमे॒वाग्रे॒सम्मा॑र्ष्टि ॥ मु॒ख॒तोहि॑प्रा॒णो॑पा॒नोभू॒त्वा ॥ आ॒त्मान॒मन्न॑मावि॒शति॑ ॥ तौप्रां॑णापा॒नौ ॥ अव्य॑र्धुकः॒प्राणापा॒नाभ्यां॑भवति ॥ यए॒वंवेद॑ ॥ ५ ॥ जु॒हूमृ॒॑ज्याद्ध्व॒तीति॒॑प्र॒त्यंच्य॒धस्ता॑न्मा॒र्ष्टि॒पंचं॑च ॥ १॥ ॥ दि॒व शि॒ल्पम॑वं॒ततं ॥ पृ॒थि॒व्याः॒क॒कु॒भिः॒श्रि॒तं ॥ तेनं॑व॒यꣳस॒ह॒स्रव॑ल्शेन ॥ स॒पत्नं॑नाश॒यामा॒सि॒स्वाहे॒ति॑स्रु॒क्स॒म्मार्जनान्य॒ग्नौप्रह॑रति ॥ आपो॒वैद॒र्भाः ॥ रू॒पमे॒वैषा॑मे॒तन्म॑हि॒मान॒॑व्याच॑ष्टे ॥ अ॒नु॒ष्टु॒भ॒र्चा ॥ आनु॑ष्टु॒भः॒प्र॒जाप॑तिः ॥ प्रा॒जा॒प॒त्यो॑वे॒दः ॥ वे॒दस्या॒ग्रꣳ॑स्रु॒क्स॒म्मा॒र्जनानि। १ ॥ स्वेनै॒वै॒नां॒नि॒च्छंद॑सा॥ स्वयां॑दे॒वत॑या॒सम॑र्द्धयति ॥ अथो॒ऋग्वाव॒योषा॑ ॥ द॒र्भोवृषा॑ ॥ तन्मि॑थु॒नं ॥ मि॒थु॒नमे॒वास्य॒तद्य॒ज्ञेकं॑रोतिप्र॒जन॑नाय ॥ प्रजा॑यतेप्र॒जया॑प॒शु॒भि॒र्यज॑मानः ॥ तान्येके॑वृ॒थै॒वापा॑स्यं॒ति ॥ तत्तथा॒न॒का॒र्यं ॥ आर॑ब्धस्यय॒ज्ञि॒यस्य॒कर्म॑णः॒सवि॒॑दो॒हः ॥ २ यद्येना॑निप॒शवो॑भि॒ति॒ष्ठेयुः ॥ नतत्प॒शुभ्य॒ःकं ॥ अ॒द्भिर्मा॑र्जयि॒त्वोत्क॒रे॒न्यं॑स्येत् ॥ यद्वै॒य॒ज्ञि॒यंस्य॒कर्म॑णोन्य॒त्राहु॑तीभ्यः॒सं॒तिष्ठ॑ते॥ उ॒त्क॒रोवाव॒तस्य॒प्रा॒ति॒ष्ठा ॥ ए॒ताꣳहि॒तस्मै॒प्रा॒ति॒ष्ठां॒दे॒वाःस॒मभ॑रन् ॥ यद॒॑द्भिर्मा॒र्जयं॑ति ॥ तेन॒शां॒तं ॥ यदु॒त्क॒रे॒न्यस्य॑ति ॥ प्र॒ति॒ष्ठामे॒वै

नानितद्गमयति ॥ ३ ॥ प्रतितिष्ठतिप्रजयापशुभिर्यजमानः ॥ अथास्तंबस्यवाएतद्रूपं ॥ यत्स्रुक्संमा
र्जनानि ॥ स्तंबशोवाओषधयः ॥ तासांजरत्कक्षेपशवोनरमंते ॥ अप्रियोह्येषांजरत्कक्षः ॥ या
वंदाप्रियोहवैजरत्कक्षःपशूनां ॥ तावदप्रियःपशूनांभवति ॥ यस्यैतान्यन्यत्राग्नेर्दधति ॥ नवदाव्यासुवा
ओषधीषुपशवोरमंते ॥ ४ ॥ नवदावोह्येषांप्रियः ॥ यावत्प्रियोहवैनवदावःपशूनां ॥ तावत्प्रियःपशू
नांभवति ॥ यस्यैतान्यग्नौप्रहरंति ॥ तस्मादेतान्यग्नावेवप्रहरेत् ॥ यनरस्मिन्त्संमृज्यात् ॥ पशूनांधृत्यै ॥
योभूतानामधिपतिः ॥ रुद्रस्तंतिचरोवृषा ॥ पशूनस्माकंमाहिंसीः ॥ एतदस्तुहुतंतवस्वाहेत्यग्नि
संमार्जनान्यग्नौप्रहरति ॥ एषावाएतेषांयोनिः ॥ एषाप्रतिष्ठा ॥ स्वामेवैनानियोनिं ॥ स्वांप्रतिष्ठांगमयति
॥ प्रतितिष्ठतिप्रजयापशुभिर्यजमानः ॥ ५ ॥ वेदस्याग्रंस्रुक्संमार्जनानिविदोहोगमयतिपशवोरनंते
हिंसीःषट्च ॥ २ ॥ ॥ अयज्ञोवाएषः ॥ योपत्नीकः ॥ नप्रजाःप्रजायेरन् ॥ पत्न्यन्वास्ते ॥
यज्ञमेवाकः ॥ प्रजानांप्रजननाय ॥ यत्तिष्ठंतीसंनह्येत ॥ प्रियंज्ञातिंरुंध्यात् ॥ आसीनासंनह्यते ॥
आसीनाह्येषावीर्यंकरोति ॥ १ ॥ यत्पश्चात्प्राच्यन्वासीत ॥ अनयासमदंदधीत ॥ देवा
नांपत्नीयासमदंदधीत ॥ देशाद्दक्षिणतउदीच्यन्वास्ते ॥ आत्मनोगोपीथाय ॥ आशा

संनासौमनसमित्याह ॥ मेध्यामैवनांकेवलींकृत्वा ॥ आशिषासमर्द्धयति ॥ आग्नेरनुव्रताभूत्वा
सनंह्येसुकृतायकमित्याह ॥ एतद्वैपत्नियैव्रतोपनयनं ॥ २ ॥ तेनैवैनांव्रतमुपनयति
॥ तस्मादाहुः ॥ यश्चैवंवेदयश्चन ॥ योक्त्रमेवयुंते ॥ यमन्वास्ते ॥ तस्यामुष्मिंल्लोकेभवतो
नियोक्त्रेण ॥ यद्योक्त्रं ॥ सयोगः ॥ यदास्ते ॥ सक्षेमः ॥ ३ ॥ योगक्षेमस्यक्लृप्त्यै ॥ युक्तांक्रियाताआशीः
कामेयुज्याताइति ॥ आशिषःसमृध्यै ॥ ग्रंथिंग्रन्थाति ॥ आशिषएवास्यांपरिगृह्णाति ॥ पुमान्वैग्रंथिः ॥
स्त्रीपत्नी ॥ तन्मिथुनं ॥ मिथुनमेवास्यतद्यज्ञेकरोतिप्रजननाय ॥ प्रजायतेप्रजयापशुभिर्यजमानः
॥ ४ ॥ अथोअर्द्धोवाएषआत्मनः ॥ यत्पत्नी ॥ यज्ञस्यधृत्याअशिथिलंभावाय ॥ सुप्रजसंस्त्वावयꣳसु
पत्नीरुपसेदिमेत्याह ॥ यज्ञमेवतन्मिथुनीकरोति ॥ ऊनेतिरिक्तंधीयाताइतिप्रजात्यै ॥ महीनांपयोस्योष
धीनाꣳरसइत्याह ॥ रूपमेवास्यैतन्महिमानंव्याचष्टे ॥ तस्यतेक्षीयमाणस्यनिर्वपामिदेवयज्यायाइत्या
ह ॥ आशिषमेवैतामाशास्ते ॥ ५ ॥ करोतिव्रतोपनयनंक्षेमोयजमानःशास्ते ॥ ३ ॥ ॥ घृतंचवै
मधुचप्रजापतिरासीत् ॥ यतोमध्वासीत् ॥ ततःप्रजाअसृजत ॥ तस्मान्मधुषिप्रजननमिवास्ति ॥ त
स्मान्मधुषानप्रचरंति ॥ यातयामंहि ॥ आज्येनप्रचरंति ॥ यज्ञोवाआज्यं ॥ यज्ञेनैवयज्ञंप्रचरंत्ययातयामत्वाय ॥

पत्न्यवेक्षते॥१ ॥मिथुनत्वायप्रजात्यै ॥ यद्वैपत्नीयज्ञस्यकरोति॥ मिथुनंतत्॥अथोपत्नियाएवैषयज्ञस्या
न्वारंभोनवच्छित्यै ॥ अमेध्यंवाएतत्करोति । यत्पत्न्यवेक्षते ॥ गार्हपत्येधिश्रयतिमेध्यत्वाय ॥ आह
वनीयमभ्युद्द्रवति ॥ यज्ञस्यसंतत्यै ॥ तेजोसितेजोनुप्रेहीत्याह ॥ २॥ तेजोवाअग्निः ॥ तेजआज्यं
तेजसैवतेजःसमर्द्धयति ॥ अग्निस्तेतेजोमाविनैदित्याहाहिंश्सायै ॥ स्फ्यस्यवर्त्मन्त्सादयति ॥ यज्ञ
स्यसंतत्यै॥ अग्नेर्जिह्वासिसुभूर्देवानामित्याह॥यथायजुरेवैतत्॥धाम्नेधाम्नेदेवेभ्योयजुषेयजुषेभवेत्याह॥
आशिषमेवैतामाशास्ते ॥३॥ तद्वाअतःपवित्राभ्यामेवोत्पुनाति ॥ यजमानोवाआज्यं ॥ प्राणापानौप
वित्रे ॥ यजमानएवप्राणापानौदधाति ॥ पुनराहारं ॥ एवमिवहिप्राणापानौसंचरतः ॥ शुक्रमसि
ज्योतिरसितेजोसीत्याह ॥ रूपमेवास्यैतन्महिमानंव्याचष्टे ॥ त्रियजुषा ॥ त्रयइमेलोकाः ॥ ४ ॥
एषांलोकानामाप्त्यैत्रिः ॥ त्र्यावृद्धियज्ञः ॥ अथोमेध्यत्वाय ॥ अथाज्यवतीभ्यामपः ॥ रूपमेवासामेत
द्वर्णंदधाति ॥ अपिवाउताहुः ॥ यथाहवैयोषासुवर्णश्हिरण्यंपेशलंबिभ्रतीरूपाण्यास्ते ॥ एवमेता
एतर्हीति ॥ आपोवैसर्वादेवताः॥५ ॥एषाहिविश्वेषांदेवानांतनूः॥ यदाज्यं ॥ तत्रोभयोर्मीमाश्सा ॥
जामिस्यात् ॥ यद्यजुषाज्यंयजुषापउत्पुनीयात् ॥छंदसापउत्पुनात्यजामित्वाय॥ अथोमिथुनत्वाय॥ सा

विंत्रियर्चा ॥ सवितृप्रसूतमेकर्मासदिति ॥ सवितृप्रसूतमेवास्यकर्मभवति ॥ पच्छोगायत्रियात्रिष्वमृद्धत्वाय ॥ अद्भिरेवौषधीःसंनयति ॥ ओषधीभिःपशून् ॥ पशुभिर्यजमानं ॥ शुक्रंत्वाशुक्रायांज्योतिस्त्वाज्योतिष्यर्चिस्त्वार्चिषीत्याहसर्वत्वाय ॥ पर्याप्त्याअनंतरायाय ॥ ६ ॥ ईक्षन्नआहुशास्तेलोकादेवताभवतिषड्च ॥ ४ ॥ ॥ देवासुराःसंयत्ताआसन् ॥ सएतमिंद्रआज्यस्यावकाशमपश्यत् ॥ तेनावैक्षत ॥ ततोदेवाअभवन् ॥ परासुराः ॥ यएवंविद्वानाज्यमवेक्षते ॥ भवत्यात्मना ॥ परास्यभ्रातृव्योभवति ॥ ब्रह्मवादिनोवदंति ॥ यदाज्येनान्यानिहवीꣳष्यभिघारयंति ॥ १ ॥ अथकेनाज्यमिति ॥ सत्येनेतिब्रूयात् ॥ चक्षुर्वैसत्यं ॥ सत्येनैवैनदभिघारयति ॥ ईश्वरोवाएषोंधोभवितोः ॥ यश्चक्षुषाज्यमवेक्षते ॥ निमील्यावेक्षेत ॥ दाधारात्मन्चक्षुः ॥ अभ्याज्यंघारयति ॥ आज्यंगृह्णाति ॥ २ ॥ च्छंदाꣳसिवाआज्यं ॥ च्छंदाꣳस्येवप्रीणाति ॥ चतुर्जुह्वांगृह्णाति ॥ चतुष्पादःपशवः ॥ पशूनेवावरुंधे ॥ अष्टावुपभृति ॥ अष्टाक्षरागायत्री ॥ गायत्रःप्राणः ॥ प्राणमेवपशुषुदधाति ॥ चतुर्ध्रुवायां ॥ ३ ॥ चतुष्पादःपशवः ॥ पशुष्वेवोपरिष्टात्प्रतितिष्ठति ॥ यजमानदेवत्यावैजुहूः ॥ भ्रातृ

न्यदेवत्योपभृत् ॥ चतुर्जुह्वांगृह्णन् ॥ भूयोगृह्णीयात् ॥ अष्टावुपभृतिंगृह्णन्कनीयः ॥ यजमानायैव
भ्रातृव्यमुपस्तिंकरोति ॥ गौर्वैस्रुचः ॥ चतुर्जुह्वांगृह्णाति ॥ तस्माच्चतुष्पदी ॥ ४ ॥ अष्टावुपभृति ॥
तस्मादष्टाशफा ॥ चतुर्ध्रुवायां ॥ तस्माच्चतुस्तनी ॥ गामेवतत्सꣳस्करोति ॥ सास्मैसꣳस्कृतेषमूर्जंदु
हे ॥ यज्जुह्वांगृह्णाति ॥ प्रयाजेभ्यस्तत् ॥ यदुपभृति ॥ प्रयाजानूयाजेभ्यस्तत् ॥ सर्वस्मैवाएतद्यज्ञा
यगृह्यते ॥ यद्ध्रुवायामाज्यं ॥ ५ ॥ अभिघारयतिगृह्णातिध्रुवायांचतुष्पदीप्रयाजानूयाजेभ्यस्तद्द्वेचं
॥ ५ ॥ ॥ आपोदेवीरग्रेपुवोअग्रेगुवइत्याह ॥ रूपमेवासामेतन्महिमानंव्याचष्टे ॥ अग्रइमंयज्ञंनं
यताग्रेयज्ञपतिमित्याह ॥ अग्रएवयज्ञंनयंति ॥ अग्रेयज्ञपतिं ॥ युष्मानिंद्रोवृणीतवृत्रतूर्येयूयमिंद्रमवृणी
ध्वंवृत्रतूर्यइत्याह ॥ वृत्रꣳहहनिष्यन्निंद्रआपोवव्रे ॥ आपोहेंद्रंविव्रिरे ॥ संज्ञामेवासामेतत्सामानंव्याच
ष्टे ॥ प्रोक्षितास्थेत्याह ॥ १ ॥ तेनापःप्रोक्षिताः ॥ अग्निर्देवेभ्योनिलायत ॥ कृष्णोरूपंकृत्वा ॥
सवनस्पतीन्प्राविशत् ॥ कृष्णोस्याखरेष्ठोग्नयेत्वास्वाहेत्याह ॥ अग्नयएवैनंजुष्टंकरोति ॥ अ
थोअग्नेरेवमेधमवरुंधे ॥ वेदिरसिबर्हिषेत्वास्वाहेत्याह॥ प्रजावैबर्हिः ॥ पृथिवीवेदिः ॥ २ ॥ प्रजा

एवपृथिव्यांप्रतिष्ठापयति ।। बर्हिरसिस्रुग्भ्यस्त्वास्वाहेत्याह ।। प्रजावैबर्हिः ।। यजमानःस्रुचः ।।यजमा
नमेवप्रजासुप्रतिष्ठापयति ॥ दिवेत्वांतरिक्षायत्वापृथिव्यैत्वेतिबर्हिरासाद्यप्रोक्षति ॥ एभ्यएवैनंल्लोकेभ्यः
प्रोक्षति ॥ अथततःसहस्रुचापुरस्तात्प्रत्यंचंग्रंथिंप्रत्युक्षति ।। प्रजावैबर्हिः ॥ यथासूत्यैकालआपःपुरस्ता
द्यंति ॥ ३ ।। तादृगेवतत् ।। स्वधापितृभ्यइत्याह ।। स्वधाकारोहिपितृणा ॥ उर्ग्भवबर्हिषद्भ्यइति
दक्षिणायैश्रोणेरोत्तरस्यैनिनयतिसंतत्यै ॥ मासावैपितरोबर्हिषदः ॥मासानेवप्रीणाति ॥ मासावाओष
धीर्वर्द्धयंति ॥ मासाःपचंतिसमृध्यै ॥ अनातिस्कंदन्हपर्जन्योवर्षति ॥ यत्रैतदेवंक्रियते ॥ ४ ॥ ऊर्जा
पृथिवींगच्छतेत्याह ॥ पृथिव्यामेवोर्जंदधाति ॥ तस्मात्पृथिव्याऊर्जाभुंजते ॥ ग्रंथिंविस्रंस्रसयति ॥
प्रजनयत्येवतत् ॥ ऊर्ध्वंप्रांचमुद्गृढंप्रत्यंचमायच्छति ॥ तस्मात्प्राचीनंरेतोधीयते ॥ प्रतीचीःप्रजाजायं
ते ॥ विष्णोःस्तूपोसीत्याह ॥ यज्ञोवैविष्णुः ॥ ५ ॥ यज्ञस्यधृत्यै ॥ पुरस्तात्प्रस्तरंगृह्णाति॥ मुख्यमेवै
नंकरोति ॥ इयंतंगृह्णाति ॥ प्रजापतिनायज्ञमुखेनसंमितं ॥ इयंतंगृह्णाति ॥ यज्ञपरुषासंमितं ॥ इयं
तंगृह्णाति ॥ एतावद्वैपुरुषेवीर्यं ॥ वीर्यसंमितं ॥ ६ ॥ अपरिमितंगृह्णाति ॥ अपरिमितस्यावरुध्यै ॥
तस्मिंन्पवित्रेअपिसृजति ॥ यजमानोवैप्रस्तरः ॥ प्राणापानौपवित्रे ॥ यजमानएवप्राणापानौदधाति ॥

ऊर्णाम्रदसंत्वास्तृणामीत्याह ॥ यथायजुरेवैतत् ॥ स्वासस्थंदेवेभ्यइत्याह ॥ देवेभ्यएवैनंत्स्वासस्थंक
रोति ॥ ७ ॥ बर्हिस्तृणाति ॥ प्रजावैबर्हिः ॥ पृथिवीवेदिः ॥ प्रजाएवपृथिव्यांप्रतिष्ठापयति ॥ अनं
तिदृश्नꣳस्तृणाति ॥ प्रजयैवैनंपशुभिरनंतिदृश्नंकरोति ॥ धारयन्प्रस्तरंपरिधीन्परिदधाति ॥ यजमानोवै
प्रस्तरः ॥ यजमानएवतत्स्वयंपरिधीन्परिदधाति ॥ गंधर्वोसिविश्वावसुरित्याह ॥ ८ ॥ विश्वं
मेवायुर्यजमानेदधाति ॥ इंद्रस्यबाहुरसिदक्षिणइत्याह ॥ इंद्रियमेवयजमानेदधाति ॥ मित्रा
वरुणौत्वोत्तरतःपरिधत्तामित्याह ॥ प्राणापानौमित्रावरुणौ ॥ प्राणापानावेवास्मिंन्दधाति ॥ सू
र्यस्त्वापुरस्तात्पात्वित्याह ॥ रक्षसामपहत्यै ॥ कस्याश्चिदभिशस्त्याइत्याह ॥ अपरिमितादेवैनंपाति
॥ ९ ॥ वीतिहोत्रंत्वाकवइत्याह ॥ अग्निमेवहोत्रेणसमर्द्धयति ॥ द्युमंतꣳसमिधीमहीत्याहसमिध्यै ॥अ
ग्नेबृहंतमध्वरइत्याहवृध्यै ॥ विशोयंत्रेस्थइत्याह ॥ विशांयत्यै ॥ उदीचीनाग्रेनिदधातिप्रतिष्ठि
त्यै ॥ वसूनाꣳरुद्राणामादित्यानाꣳसदसिसीदेत्याह ॥ देवतानामेवसदनेप्रस्तरꣳसादयति ॥
जुहूरसिघृताचीनाम्नेत्याह ॥ १० ॥ असौवैजुहूः ॥ अंतरिक्षमुपभृत् ॥ पृथिवीध्रुवा ॥ तासामेतदेव
प्रियंनाम ॥ यद्घृताचीति ॥ यद्घृताचीत्याह ॥ प्रियेणैवैनानाम्नासादयति ॥ एताअसदन्त्सुकृतस्यलो

कइत्याह ॥ सत्यंवैसुकृतस्यंलोकः ॥ सत्यएवैनाःसुकृतस्यंलोकेसादयति ॥ ताविंष्णोपाहीत्याह ॥
यज्ञोवैविष्णुः ॥ यज्ञस्यधृत्यै ॥ पाहियज्ञंपाहियज्ञपतिंपाहिमांयंज्ञनियमित्याह ॥ यज्ञाययजमानाया
त्मने ॥ तेभ्यंएवाशिषमाशास्तेनार्त्यै ॥ ११ ॥ स्थेत्याहपृथिवीवेदिर्यतिक्रियनेविष्णुर्वीर्यसंमितंकरो
त्याहपातिनाम्नेत्याहलोकेसादयतिषट्च ॥ ६ ॥ ॥ अग्निनावैहोत्रा ॥ देवाअसुरानभ्यंभवन् ॥ अ
ग्नयेसमिध्यमानायानुब्रूहीत्याहभ्रातृव्याभिभूत्यै ॥ एकविंशतिमिध्मदारूणिंभवंति ॥ एकविंशोवै
पुरुषः ॥ पुरुषस्याप्त्यै ॥ पंचदशेध्मदारूण्यभ्यादधाति ॥ पंचदशवाअर्धमासस्यरात्रयः ॥ अर्धमासशः
संवत्सरआप्यते ॥ त्रीन्परिधीन्परिदधाति ॥ १ ॥ ऊर्ध्वेसमिधावादधाति ॥ अनूयाजेभ्यःसमिधमति
शिनष्टि ॥ षट्संपद्यंते ॥ षड्वाऋतवः ॥ ऋतूनेवप्रीणाति ॥ वेदेनोपवाजयति ॥ प्राजापत्योवैवेदः ॥
प्राजापत्यःप्राणः ॥ यजमानआहवनीयः ॥ यजमानएवप्राणंदधाति ॥ २ ॥ त्रिरुपवाजयति ॥ त्रयो
वैप्राणाः ॥ प्राणानेवास्मिन्दधाति ॥ वेदेनोपयत्यस्रुवेणप्राजापत्यमाघारमाघारयति ॥ यज्ञोवैप्रजाप
तिः ॥ यज्ञमेवप्रजापतिंमुखतआरंभते ॥ अथोप्रजापतिःसर्वादेवताः ॥ सर्वाएवदेवताःप्रीणाति ॥ अ
ग्निमग्नीत्रिस्त्रिःसंमृड्ढीत्याह ॥ त्र्यावृद्धियज्ञः ॥ ३ ॥ अथोरक्षसामपहत्यै ॥ परिधीन्त्संमार्ष्टि ॥ पुनात्ये

वैनान् ॥ त्रिस्त्रिःसंमार्ष्टि ॥ त्र्यावृद्धियज्ञः ॥ अथोमेध्यत्वाय ॥ अथोएतेवैदेवाश्वाः ॥ देवाश्वानेवत
त्संमार्ष्टि ॥ सुवर्गस्यलोकस्यसमष्ट्यै ॥ आसीनोन्यमाघारमाघारयति ॥ ४ ॥ तिष्ठन्नन्यं ॥ यथानोंव
रथंवायुंज्यात् ॥ एवमेवतदध्वर्युर्यज्ञंयुनक्ति ॥ सुवर्गस्यलोकस्याभूत्यै ॥ वहंत्यनंग्राम्याःपशवः ॥
यएवंवेद ॥ भुवनमसिविप्रथस्वेत्याह ॥ यज्ञोवैभुवनं ॥ यज्ञएवयजमानंप्रजयापशुभिःप्रथयति ॥
अग्नेयष्टरिदंनमइत्याह ॥ ५ ॥ अग्निर्वैदेवानांयष्टा ॥ यएवदेवानांयष्टा ॥ तस्माएवनमस्क
रोति ॥ जुह्वेह्यग्निस्त्वाह्वयतिदेवयज्यायाउपभृदेहिदेवस्त्वासविताह्वयतिदेवयज्यायाइत्याह ॥ आ
ग्नेयीवैजुहूः ॥ सावित्र्युपभृत् ॥ ताभ्यामेवैनेप्रसूतआदत्ते ॥ अग्नाविष्णूमावामवक्रमिषमि
त्याह ॥ अग्निःपुरस्तात् ॥ विष्णुर्यज्ञःपश्चात् ॥ ६ ॥ ताभ्यामेवप्रतिप्रोच्यात्याक्रामति ॥ विजिहाथां
मामासंताप्तमित्याहाहिंस्सायै ॥ लोकंमेलोककृतौकृणुतमित्याह ॥ आशिषमेवैतामाशास्ते ॥ विष्णोः
स्थानमसीत्याह । यज्ञोवैविष्णुः ॥ एतत्खलुवैदेवानामपराजितमायतनं ॥ यद्यज्ञः ॥ देवानामेवाप
राजितआयतनेतिष्ठति ॥ इतइंद्रोअकृणोद्वीर्याणीत्याह ॥ ७ ॥ इंद्रियमेवयजमानेदधाति ॥ समा
रभ्योर्ध्वोअध्वरोदिविस्पृशमित्याहवृध्यै ॥ आघारमाघार्यमाणमनुसमारभ्य ॥ एतस्मिन्कालेवेदाः

सुवर्गंलोकमायन् ॥ साक्षादेवयजमानःसुवर्गंलोकमेति ॥ अथोसमृद्धेनैवयज्ञेनयजमानःसुवर्गंलोकमेति ॥ अहुंतोयज्ञोयज्ञपतेरित्याहानार्त्यै ॥ इंद्रावान्त्स्वाहेत्याह ॥ इंद्रियमेवयजमानेदधाति ॥ बृहद्भा इत्याह ॥ ८ ॥ सुवर्गोवैलोकोबृहद्भाः ॥ सुवर्गस्यलोकस्यसमंष्ट्यै ॥ यजमानदेवत्यावैजुहूः ॥ भ्रातृव्यदेवत्योपभृत् ॥ प्राणआघारः ॥ यत्संस्पर्शयेत् ॥ भ्रातृव्येस्यप्राणंदध्यात् ॥ असंस्पर्शयन्नत्याक्रामति ॥ यजमानएवप्राणंदधाति ॥ पाहिमाग्नेदुश्चरितादामासुचरितेभजेत्याह ॥ ९ ॥ अग्निर्वाव पवित्रं ॥ वृजिनमनृतंदुश्चरितं ॥ ऋजुकर्मसत्यसुचरितं ॥ अग्निरेवैनंवृजिनादनृताद्दुश्चरितात्पाति ॥ ऋजुकर्मेसत्येसुचरितेभजाति ॥ तस्मादेवमाशास्ते ॥ आत्मनोगोपीथाय ॥ शिरोवाएतद्यज्ञस्य ॥ यदाघारः ॥ आत्माध्रुवा ॥ १० ॥ आघारमाघार्यध्रुवासमनक्ति ॥ आत्मन्नेवयज्ञस्यशिरः प्रतिदधाति ॥ द्विःसमनक्ति ॥ द्वौहिप्राणापानौ ॥ तदाहुः ॥ त्रिरेवसमंज्यात् ॥ त्रिधातुहिशिरइति ॥ शिरइवैतद्यज्ञस्य ॥ अथोत्रयोवैप्राणाः ॥ प्राणानेवास्मिन्दधाति ॥ मखस्यशिरोसिसंज्योतिषाज्योतिरङ्क्तामित्याह ॥ ज्योतिरेवास्माउपरिष्टाद्दधाति ॥ सुवर्गस्यलोकस्यानु

स्यात्यै ॥ ११ ॥ परिदधातिप्राणंदधातिहियज्ञोधारयतिनमइत्याहपश्चाद्वीर्याणित्याहभाइत्याहभ
जेत्याहध्रुवैवारिमंन्दधातित्रीणिच ॥ ७ ॥ ॥ धिष्णियावाएतेन्युप्यंते ॥ यद्ब्रह्मा ॥ य
द्धोता ॥ यदध्वर्युः ॥ यदग्नीत् ॥ यद्यजमानः ॥ तान्यदंतरेयात् ॥ यजमानस्यप्राणान्त्संकर्षेत् ॥
प्रमायुकःस्यात् ॥ पुरोडाशमपगृह्यसंचरत्यध्वर्युः ॥ १ ॥ यजमानायैवतल्लोकंशिंषति ॥ नास्य
प्राणान्त्संकर्षति ॥ नप्रमायुकोभवति ॥ पुरस्तात्प्रत्यङ्ङासीनः ॥ इडायाइडामादधाति ॥ ह
स्त्यांहोत्रे ॥ पशवोवाइडा ॥ पशवःपुरुषः ॥ पशुष्वेवपशून्प्रतिष्ठापयति ॥ इडायैवाएषाप्रजातिः
॥ २ ॥ तांप्रजातिंयजमानोनुप्रजायते ॥ द्विरंगुलावनक्तिपर्वणोः ॥ द्विपाद्यजमानःप्रतिष्ठित्यै ॥ स
कृदुपस्तृणाति ॥ द्विरादधाति ॥ सकृदभिघारयति ॥ चतुःसंपद्यते ॥ चत्वारिवैपशोःप्रतिष्ठानानि
॥ यावानेवपशुः ॥ तमुपह्वयते ॥ ३ ॥ मुखमिवप्रत्युपह्वयेत ॥ संमुखानेवपशूनुपह्वयते ॥
पशवोवाइडा ॥ तस्मात्सान्वारभ्या ॥ अध्वर्युणाचयजमानेनच ॥ उपहूतःपशुमानसानीत्याह ॥
उपहूतेनौह्वयंतेहोता ॥ इडायैदेवतानामुपहवे ॥ उपहूतःपशुमान्भवति ॥ यएवंवेद ॥ ४ ॥ यांवै
हस्त्यामिडामादधाति ॥ वाचःसाभागधेयं ॥ यामुपह्वयंते ॥ प्राणानांसा ॥ वाचंचैवप्राणांश्चाव

रुंधे ॥ अथवाएतर्ह्युपहूतायामिडायां ॥ पुरोडाशस्यैवबर्हिषदोमीमाꣳसा ॥ यजमानंदेवाअब्रुवन् ॥ हविर्नोनिर्वपेति ॥ नाहमभागोनिर्वप्स्यामीत्यब्रवीत् ॥ ५ ॥ नमयाभागयानुवक्ष्यथेतिवागब्रवीत् ॥ नाहमभागापुरोनुवाक्याभविष्यामीतिपुरोनुवाक्या ॥ नाहमभागायाज्याभविष्यामीतियाज्या ॥ न मयाभागेनवषट्करिष्यथेतिवषट्कारः ॥ यद्यजमानभागंनिधायपुरोडाशंबर्हिषदंकरोति ॥ तानेव तद्भागिनःकरोति ॥ चतुर्द्धाकरोति ॥ चतस्रोदिशः ॥ दिक्ष्वेवप्रतितिष्ठति ॥ बर्हिषदंकरोति ॥ ॥ ६ ॥ यजमानोवैपुरोडाशः ॥ प्रजाबर्हिः ॥ यजमानमेवप्रजासुप्रतिष्ठापयति ॥ तस्मादस्थनान्याः प्रजाःप्रतितिष्ठंति ॥ माꣳसेनान्याः ॥ अथोखल्वाहुः ॥ दक्षिणावाएताहविर्यज्ञस्यांतर्वेद्यव रुध्यंते ॥ तत्पुरोडाशंबर्हिषदंकरोतीति ॥ चतुर्द्धाकरोति ॥ चत्वारोह्येतेहविर्यज्ञस्यर्त्विजः ॥ ७ ॥ ब्र ह्माहोताध्वर्युरग्नीत् ॥ तमभिमृशेत् ॥ इदंब्रह्मणः ॥ इदꣳहोतुः ॥ इदमध्वर्योः ॥ इदमग्नीधइति ॥ यथैवादःसौम्येध्वरे ॥ आदेशमृत्विग्भ्योदक्षिणानीयंते ॥ तादृगेवतत् ॥ अग्नीधेप्रथमायादधाति ॥ ॥ ८ ॥ अग्निमुखाह्यृद्धिः ॥ अग्निमुखामेवर्द्धियजमानऋध्नोति ॥ सकृदुपस्तीर्यद्विरादधत् ॥ उपस्ती र्यद्विरभिघारयति ॥ षट्संपद्यंते ॥ षड्वाऋतवः ॥ ऋतूनेवप्रीणाति ॥ वेदेनब्रह्मणेब्रह्मभागंपरिहर

ति ॥ प्राजापत्योवैवेदः ॥ प्राजापत्योब्रह्मा ॥ ९ ॥ सवितायज्ञस्यप्रसूत्यै ॥ अथकाममन्येन ॥
ततोहोत्रे ॥ मध्यंवाएतद्यज्ञस्यं ॥ यद्धोता ॥ मध्यतएवयज्ञंप्रीणाति ॥ अथाध्वर्यवे ॥ प्रतिष्ठावाएषा
यज्ञस्यं ॥ यदध्वर्युः ॥ तस्माद्धविर्यज्ञस्यैतामेवावृतमनु ॥ १० ॥ अन्यादक्षिणानीयंते ॥ यज्ञस्यप्रति
ष्ठित्यै ॥ अग्निमग्नीत्सकृत्संकृत्संमृड्ढीत्याह ॥ पराङिवह्येतर्हियज्ञः ॥ इषितादैव्याहोतारइत्याह ॥ इ
षितश्हिकर्मक्रियते ॥ भद्रवाच्यायप्रेषितोमनुषःसूक्तवाकायसूक्ताब्रूहीत्याह ॥ आशिषमेवैतामाशा
स्ते ॥ स्वगादैव्याहोतृभ्यइत्याह ॥ यज्ञमेवतत्स्वगाकरोति ॥ स्वस्तिर्मानुषेभ्यइत्याह ॥ आशिषमे
वैतामाशास्ते ॥ शंयोर्ब्रूहीत्याह ॥ शंयुमेवबार्हस्पत्यंभागधेयेनसमर्धयति ॥ ११ ॥ चरत्यध्वर्युःप्रजा
तिर्ह्वयतेवेदाब्रवीद्बर्हिषदंकरोत्यृत्विजोदधातिब्रह्मानुकरोतिचत्वारिच ॥ ८ ॥ अथस्रुचावनुष्टुग्भ्यां
वाजवतीभ्यांव्यूहति ॥ प्रतिष्ठावाअनुष्टुक् ॥ अन्नंवाजःप्रतिष्ठित्यै ॥ अन्नाद्यस्यावरुध्यै ॥ प्राचीजुहू
मूहति ॥ जातानेवभ्रातृव्यान्प्रणुदते ॥ प्रतीचीमुपभृतं ॥ जनिष्यमाणानेवप्रतिनुदते ॥ सविषूचए
वापोह्यसपत्नान्यजमानः ॥ अस्मिन्लोकेप्रतितिष्ठति ॥ १ ॥ द्वाभ्यां ॥ द्विप्रतिष्ठोहि ॥ वसुभ्यस्त्वा
रुद्रेभ्यस्त्वादित्येभ्यस्त्वेत्याह ॥ यथायजुरेवैतत् ॥ स्रुक्षुप्रस्तरमनक्ति ॥ इमेवैलोकाःस्रुचः ॥ यजमा

नःप्रस्तरः ॥ यजमानमेवतेजसानक्ति ॥ त्रेधानक्ति ॥ त्रयइमेलोकाः ॥ २ ॥ एभ्यएवैनंलोकेभ्योन
क्ति ॥ अभिपूर्वमनक्ति ॥ अभिपूर्वमेवयजमानंतेजसानक्ति ॥ अक्तꣳरिहाणाइत्याह ॥ तेजोवाआ
ज्यं ॥ यजमानःप्रस्तरः ॥ यजमानमेवतेजसानक्ति ॥ वियंतुवयइत्याह ॥ वयएवैनंकृत्वा
॥ सुवर्गंलोकंगमयति ॥ ३ ॥ प्रजांयोनिंमानिर्मृक्षामित्याह ॥ प्रजायैगोपीथाय ॥ आप्यायंतामाप
ओषधयइत्याह ॥ आपएवौषधीराप्याययति ॥ मरुतांपृषतयःस्थेत्याह ॥ मरुतोवैवृष्ट्याईशते ॥ वृ
ष्टिमेवावरुंधे ॥ दिवंगच्छततोनोवृष्टिमेरयेत्याह ॥ वृष्टिर्वैद्यौः ॥ वृष्टिमेवावरुंधे ॥ ४ ॥ यावद्वाअध्वर्युः
प्रस्तरंप्रहरति ॥ तावदस्यायुर्मीयत ॥ आयुष्पाअग्नेस्यायुर्मेपाहीत्याह ॥ आयुरेवात्मन्धत्ते ॥ यावद्वा
अध्वर्युःप्रस्तरंप्रहरति ॥ तावदस्यचक्षुर्मीयते ॥ चक्षुष्पाअग्नेसिचक्षुर्मेपाहीत्याह ॥ चक्षुरेवात्मन्धत्ते ॥
ध्रुवासीत्याहप्रतिष्ठित्यै ॥ यंपरिधिंपर्यधत्थाइत्याह ॥ ५ ॥ यथायजुरेवैतत् ॥ अग्नेदेवपणिभिर्वीयमाणइ
त्याह ॥ अग्नयएवैनंजुष्टंकरोति ॥ तंतएतमनुजोषंभरामीत्याह ॥ सजातानेवास्माअनुकान्करोति ॥
नेदेषत्वदपचेतयाताइत्याहानुख्यात्यै ॥ यज्ञस्यपाथउपसमितमित्याह ॥ भूमानमेवोपैति ॥ परिधी
न्प्रहरति ॥ यज्ञस्यसमिष्ट्यै ॥ ६ ॥ स्रुचौसंप्रस्रावयति ॥ यदेवतत्रक्रूरं ॥ तत्तेनशमयति ॥ जुह्वामु

पभृतं ॥ यजमानदेवत्यांवैजुहूः ॥ भ्रातृव्यदेवत्योपभृत् ॥ यजमानायैवभ्रातृव्यमुपस्तिंकरोति ॥ सꣳ
स्रावभागाःस्थेत्याह ॥ वसवोवैरुद्राआदित्याःसꣳस्रावभागाः ॥ तेषांतद्भागधेयं ॥ ७ ॥ तानेवतेन
प्रीणाति ॥ वैश्वदेव्यर्चा ॥ एतेहिविश्वेदेवाः ॥ त्रिष्टुग्भवति ॥ इंद्रियंवैत्रिष्टुक् ॥ इंद्रियमेवयजमाने
दधाति ॥ अग्नेर्वामपन्नगृहस्यसदसिसादयामीत्याह ॥ इयंवाअग्निरपन्नगृहः ॥ अस्याएवैनेसदनेसाद
यति ॥ सुम्नायसुम्निनीसुम्नेमाधत्तमित्याह ॥ ८ ॥ प्रजावैपशवःसुम्नं ॥ प्रजामेवपशूनात्मन्धत्ते ॥ धु
रिधुर्यौपातमित्याह ॥ जायापत्योर्गोपीथाय ॥ अग्नेदब्धायोशीततनोइत्याह ॥ यथायजुरेवैतत् ॥ पा
हिमाद्यदिवःपाहिप्रसित्यैपाहिदुरिष्ट्यैपाहिदुरद्मन्यैपाहिदुश्चरितादित्याह ॥ आशिषमेवैतामाशास्ते ॥
अविषन्नःपितुंकृणुसुषदायोनिःस्वाहेतीध्मसंवृश्चनान्यन्वाहार्यपचनेभ्याधायफलीकरणहोमंजुहोति ॥
अतिरिक्तानिवाइध्मसंवृश्चनानि ॥ ९ ॥ अतिरिक्ताःफलीकरणाः ॥ अतिरिक्तमाज्योच्छेषणं ॥ अति
रिक्तएवातिरिक्तंदधाति ॥ अथोअतिरिक्तेनैवातिरिक्तमाप्त्वावरुंधे ॥ वेदिर्देवेभ्योनिलायत ॥ तांवेदेना
न्वविंदन् ॥ वेदेनवेदिंविविदु पृथिवीं ॥ साप्रथेपृथिवीपार्थिवानि ॥ गर्भंबिभर्तिभुवनेष्वंतः ॥ ततो
यज्ञोजायतेविश्वदानिरितिपुरस्तात्स्तंबयजुषोवेदेनवेदिꣳसंमार्ष्ट्यनुषित्यै ॥ १० ॥ अथोयद्वेदश्च

वेदिंश्चभवंतः ॥ मिथुनत्वायप्रजात्यै ॥ प्रजापतेर्वाएतानिश्मश्रूणि ॥ यद्वेदः ॥ पत्निंयाउपस्थआस्यं
ति ॥ मिथुनमेवकरोति ॥ विंदतेप्रजां ॥ वेदश्होताहवनीयात्स्तृणन्नेति ॥ यज्ञमेवतत्संतनोत्योत्तर
स्मादर्द्धमासात् ॥ तत्संततमुत्तरेर्द्धमासआलंभते ॥ ११ ॥ तंकालेकालआगतेयजते ॥ ब्रह्मवादि
नोवदंति ॥ सत्वाअध्वर्युःस्यात् ॥ योयतोयज्ञंप्रयुंक्ते ॥ तदेनंप्रतिष्ठापयतीति ॥ वाताद्वाअध्वर्युर्यज्ञंप्र
युंक्ते ॥ देवागातुविदोगातुवित्वागातुमितेत्याह ॥ यतएवयज्ञंप्रयुंक्ते ॥ तदेनंप्रतिष्ठापयति ॥ प्रतितिष्ठ
तिप्रजयापशुभिर्यजमानः ॥ १२ ॥ तिष्ठतीमेलोकागमयन्तिद्यौर्वृष्टिमेवावरुंधेपुर्यधंत्थाइत्याहसामि
ष्टचैभागधेयंधत्तमित्याहवाइध्मसंवृश्चंनान्यनुवित्यैलभतेयजमानः ॥ १ ॥ ॥ योवाअयथादेवतंयज्ञमु
पचरति ॥ आदेवताभ्योवृश्च्यते ॥ पापीयान्भवति ॥ योयथादेवतं ॥ नदेवताभ्यआवृश्च्यते ॥ व
सीयान्भवति ॥ वारुणोवैपाशः ॥ इमंविष्यामिवरुणस्यपाशमित्याह ॥ वरुणपाशादेवैनंमुंचति ॥
सवितृप्रसूतोयथादेवतं ॥ १ ॥ नदेवताभ्यआवृश्च्यते ॥ वसीयान्भवति ॥ धातुश्चयोनौसुकृतस्यलो
कइत्याह ॥ अग्निर्वैधाता ॥ पुण्यंकर्मसुकृतस्यलोकः ॥ अग्निरेवैनंधाता ॥ पुण्येकर्मणिसुकृतस्यलो
केदधाति ॥ स्योनंमेसहपत्याकरोमीत्याह ॥ आत्मनश्चयजमानस्यचानार्त्यैसंत्वाय ॥ समायु

षासंप्रजयेत्याह ॥ २ ॥ आशिषमेवैतामाशास्तेपूर्णपात्रे ॥ अंततोनुष्टुभा ॥ चतुष्पदाएतच्छंदःप्रतिष्ठि
तपत्निंयैपूर्णपात्रेभवति ॥ अस्मिन्लोकेप्रतितिष्ठानोति ॥ अस्मिन्नेवलोकेप्रतितिष्ठति ॥ अथोवाग्वाअ
नुष्टुक् ॥ वाङ्मिथुनं ॥ आपोरेतःप्रजननं ॥ एतस्माद्वैमिथुनाद्वियोतंमानःस्तनयन्वर्षति ॥ रेतःसि
चन् ॥ ३ ॥ प्रजाःप्रजनयन् ॥ यद्वैयज्ञस्यब्रह्मणायुज्यते ॥ ब्रह्मणावैतस्यविमोकः ॥ अद्भिःशा
तिः ॥ विमुक्तंवाएतर्हियोक्रंब्रह्मणा ॥ आदायैनत्पत्नीसहापउपगृह्णातिशांत्यै ॥ अंजलौपूर्णपात्रमान
यति ॥ रेतएवास्यांप्रजांदधाति ॥ प्रजयाहिमनुष्यःपूर्णः ॥ मुखंविमृष्टे ॥ अवभृथस्यैवरूपंकृत्वोत्ति
ष्ठति॥ ४ ॥ सवितृप्रसूतोयथादेवतंप्रजयेत्याहस्तिचन्मृष्टएकंच ॥ १० ॥ ॥ परिवेषोवाएषवनस्प
तीनां ॥ यदुपवेषः ॥ यएववेद ॥ विंदतेपरिवेष्टारं ॥ तमुत्करे ॥ यंदेवामनुष्येषु ॥ उपवेषमधा
रयन् ॥ येअस्मदपचेतसः ॥ तानस्मभ्यमिहाकुरु ॥ उपवेषोपविद्धिनः ॥ १ ॥ प्रजांपुष्टिमथो
धनं ॥ द्विपदोनश्चतुष्पदः ॥ ध्रुवाननपगान्कुर्विति पुरस्तात्प्रत्यंचमुपगूहति ॥ तस्मात्पुरस्तात्प्रत्यं
चःशूद्राअवस्यंति ॥ स्थविमतउपगूहति ॥ अप्रतिवादिनएवैनान्कुरुते ॥ धृष्टिर्वाउपवेषः ॥ शुचर्तो
वक्त्रोब्रह्मणासंशितः ॥ योपवेषेशुक् ॥ सामृमृच्छतुयंद्विष्मइति ॥ २ ॥ अथास्मैनामगृह्यप्रहं

रति ॥ निरमुन्नुंदओकसः ॥ सपत्नोयःपृतन्यति ॥ निर्बाध्येनहविषा ॥ इंद्रएणंपराशरीत् ॥ इ
हितिस्रःपरावतः ॥ इहिपंचजनाँ अति ॥ इहितिस्रोतिरोचनायावंत् ॥ सूर्योअसंद्दिवि ॥ पर
मांत्वांपरावतं ॥ ३ ॥ इंद्रोनयतुवृत्रहा ॥ यतोनपुनरायसि ॥ शश्वतीभ्यःसमाभ्यइति ॥ त्रि
द्धाएषवज्रोब्रह्मणासंशितः ॥ शुचैवैनंविध्वा ॥ एभ्योलोकेभ्योनिर्णुद्य ॥ वज्रंगब्रह्मणास्तृणुते ॥ ह
तोसाववंधिष्मामुमित्याहस्तृत्यै ॥ यंद्विष्यात्तंध्यायेत् ॥ शुचैवैनमर्पयति ॥ ४ ॥ नोद्विष्मइतिप
रावतमर्पयति ॥ ११ ॥ प्रत्युष्टंदिवःशिल्पमयंज्ञोधृतंचदेवासुराःसएतमिंद्रआदेदेवारग्निनाविष्णयाअ
थस्रुचौयोवाअयंथादेवतंपरिवेषोवाएकादश ॥ ११ ॥ प्रत्युष्टमयंज्ञएषाहिविश्वेषांदेवानामूर्जापृथि
वीमथोरक्षसांतांप्रजातिंद्वाभ्यांतंकालेकालेनवंसप्ततिः ॥ ७१ ॥ ॥ हरिःॐ ॥ ॥ ब्रह्मणेब्राह्मण
मालभते ॥ क्षत्रायराजन्यं ॥ मरुद्भ्योवैश्यं ॥ तपसेशूद्रं ॥ तमसेतस्करं ॥ नारकायवीरहणं ॥
पाप्मनेक्लीबं ॥ आक्रयायायोगूं ॥ कामायपुंश्चलूं ॥ अतिक्रुष्टायमागधं ॥ १ ॥ गीतायसूतं ॥ नृ
त्तायशैलूषं ॥ धर्मायसभाचरं ॥ नर्मायरेभं ॥ नरिष्ठायैभीमलं ॥ हसायकारिं ॥ आनंदायस्त्रीषखं ॥
प्रमुदेकुमारीपुत्रं ॥ मेधायैरथकारं ॥ धैर्यायतक्षाणं ॥ २ ॥ श्रमायकौलालं ॥ मायायैकार्मारं ॥ रू

पायमणिकारं॥शुभेवपं॥शरव्यायाइषुकारं ॥ हेत्यैधन्वकारं ॥ कर्मणेज्याकारं॥ दिष्टायरज्जुसर्गं ॥ मृ
त्यवेमृगयुं ॥ अंतकायश्वनितं ॥ ३ ॥ संधयेजारं ॥ गेहायोपपतिं ॥ निर्ऋत्यैपरिवित्तं ॥ आर्त्यैप
रिविविदानं ॥ अराध्यैदिधिषूपतिं ॥ पवित्रायभिषजं ॥ प्रज्ञानायनक्षत्रदर्शं ॥ निष्कृत्यैपेशस्कारीं ॥
बलायोपदां ॥ वर्णायानूरुधं ॥ ४ ॥ नदीभ्यःपौंजिष्टं ॥ ऋक्षीकाभ्योनैषादं ॥ पुरुषव्याघ्रायदुर्मदं
॥ प्रयुद्भ्यउन्मत्तं ॥ गंधर्वाप्सराभ्योव्रात्यं ॥ सर्पदेवजनेभ्योप्रतिपदं ॥ अवेभ्य कितवं ॥ इर्यतायाअ
कितवं ॥ पिशाचेभ्योविदलकारं॥यातुधानेभ्य कंटककारं॥५॥उत्सादेभ्यःकुब्जं ॥ प्रमुदेवामनं ॥ द्वा
र्भ्यस्स्रामं ॥ स्वप्नायांधं ॥ अधर्मायबधिरं ॥ संज्ञानायस्मरकारीं ॥ प्रकामोद्यायोपसदं ॥ आशिक्षायै
प्रश्निनं ॥ उपशिक्षायाअभिप्रश्निनं ॥ मर्यादायैप्रश्नविवाकं ॥ ६ ॥ ऋत्यैस्तेनहृदयं ॥ वैरहत्यायपि
शुनं ॥ विविक्त्यैक्षत्तारं ॥ औपद्रष्टायसंग्रहीतारं ॥ बलायानुचरं ॥ भूम्नेपरिष्कंदं ॥ प्रियायप्रियवा
दिनं ॥ अरिष्ट्याअश्वसादं ॥ मेधायवासःपल्पूलीं ॥ प्रकामायरजयित्रीं ॥ ७ ॥ भायैदार्वाहारं ॥
प्रभायाआग्नेंधं ॥ नाकस्यपृष्ठायाभिषेक्तारं ॥ ब्रध्नस्यविष्टपायपात्रनिर्णेगं ॥ देवलोकायपेशितारं ॥ म
नुष्यलोकायप्रकरितारं ॥ सर्वेभ्योलोकेभ्यउपसेक्तारं ॥ अवऋत्यैवधायोपमंथितारं ॥ सुवर्गायलोकाय

भागदुघं ॥ वर्षिष्ठायनाकायपरिवेष्टारं ॥ ८ ॥ अर्मेभ्योहस्तिपं ॥ जवायाश्वपं ॥ पुष्ट्यैगोपालं ॥ तेजसेजपालं ॥ वीर्यायाविपालं ॥ इरायैकीनाशं ॥ कीलालायसुराकारं ॥ भद्रायगृहपं ॥ श्रेयसे वित्तधं ॥ अध्यक्षायानुक्षत्तारं ॥ ९ ॥ मन्यवेयस्तापं ॥ क्रोधायनिसरं ॥ शोकायाभिसरं ॥ उत्कूल विकूलाभ्यांत्रिस्थिनं ॥ योगाययोक्तारं ॥ क्षेमायविमोक्तारं ॥ वपुषेमानस्कृतं ॥ शीलायांजनीकारं ॥ निर्ऋत्यैकोशकारीं ॥ यमायासूं ॥ १० ॥ यम्यैयमसूं ॥ अथर्वभ्योवतोकां ॥ संवत्सरायपर्यायिरि णीं ॥ परिवत्सरायाविजातां ॥ इदावत्सरायापस्कद्वरीं ॥ इद्वत्सरायातीत्वरीं ॥ वत्सरायविजर्जरां ॥ संवत्सरायपलिक्नीं ॥ वनायवनपं ॥ अन्यतोरण्यायदावपं ॥ ११ ॥ सरोभ्योधैवरं ॥ वेशंताभ्यो दाशं ॥ उपस्थावरीभ्योबैंदं ॥ नड्वलाभ्यःशौष्कलं ॥ पार्यायकैवर्तं ॥ अवार्यायमार्गारं ॥ तीर्थेभ्य आंदं ॥ विषमेभ्योमैनालं ॥ स्वनेभ्यःपर्णकं ॥ गुहाभ्यःकिरातं ॥ सानुभ्योजंभकं ॥ पर्वतेभ्यःकिंपूरु षं ॥ १२ ॥ प्रतिश्रुत्कायाऋतुलं ॥ घोषायभषं ॥ अंतायबहुवादिनं ॥ अनंतायमूकं ॥ महसेवी णावादं ॥ क्रोशायतूणवध्मं ॥ आक्रंदायदुंदुभ्याघातं ॥ अवरस्परायशंखध्मं ॥ ऋभुभ्योजिनसंधायं ॥ साध्येभ्यश्चर्मम्णं ॥ १३ ॥ बीभत्सायैपौल्कसं ॥ भूत्यैजागरणं ॥ अभूत्यैस्वपनं ॥ तुलायैवाणिजं ॥ वर्णायहिरण्यकारं ॥ विश्वेभ्योदेवेभ्यःसिध्मलं ॥ पश्चाद्दोषायग्लावं ॥ ऋत्यैजनवादिनं ॥ व्यृध्याअ

गल्भं ॥ सशरायप्रच्छिदं ॥ १४ ॥ हसायपुंश्चलूमालभते ॥ वीणावादंगणकंगीताय ॥ यादसे शाबुल्यां ॥ नर्मायभद्रवतीं ॥ तूणवध्मंग्रामण्यंपाणिसंघातंनृत्ताय ॥ मोदायानुकोशंकं ॥ आनंदाय तलवं ॥ १५ ॥ अक्षराजायकितवं ॥ कृतायसभाविनं ॥ त्रेतायाआदिनवदर्शं ॥ द्वापरायबहिःसदं ॥ कलयेसभास्थाणुं ॥ दुष्कृतायचरकाचार्यं ॥ अध्वनेब्रह्मचारिणं ॥ पिशाचेभ्यःसैलगं ॥ पिपासा यैगोव्यच्छं ॥ निर्ऋत्यैगोघातं ॥ क्षुधेगोविकर्त्तं ॥ क्षुत्तृष्णाभ्यांतं ॥ योगाविकृंततंमांसंभिक्षमाण उपतिष्ठते ॥ १६ ॥ भूम्यैपीठसर्पिणमालभते ॥ अग्नयेंसलं ॥ वायवेंचांडालं ॥ अंतरिक्षाय वंशनर्तिनं ॥ दिवेखलतिं ॥ सूर्यायहर्यक्षं ॥ चंद्रमसेकिर्मिरं ॥ नक्षत्रेभ्य किलासं ॥ अह्नेशुक्लं पिंगलं ॥ रात्र्यैकृष्णंपिंगाक्षं ॥ १७ ॥ वाचेपुरुषमालभते ॥ प्राणमपानंव्यानमुदानंसमानं तान्वायवे ॥ सूर्यायचक्षुरालभते ॥ मनश्चंद्रमसे ॥ दिग्भ्यःश्रोत्रं ॥ प्रजापतयेपुरुषं ॥ १८ ॥ अ थैतानरूपेभ्यआलभते ॥ अतिह्रस्वमतिदीर्घं ॥ अतिकृशमत्यंसलं ॥ अतिशुक्लमतिकृष्णं ॥ अति श्लक्ष्णमतिलोमशं ॥ अतिकिरीटमतिदंतुरं ॥ अतिमिर्मिरमतिमेमिषं ॥ आशायैजामिं ॥ प्र तीक्षायैकुमारीं ॥ १९ ॥ ॥ ब्राह्मणेगीतायश्रमायसंधयेनदीभ्यंउत्सादेभ्यऋत्यैभायाअर्मेभ्यो

मन्यवेयम्यैदशंदशसरोभ्योद्वादशप्रतिश्रुत्कायैबीभत्सायैदशंदशहसायसमाक्षराजायत्रयोदशभूम्यैदशंत्रा
चेषडथनवैकान्नविंशशातिः ॥ १९ ॥ ॥ ब्रह्मणेयम्यैनवदश ॥ १९ ॥ ॥ हरिःॐ ॥ ॥
सत्यंप्रपद्ये ॥ ऋतंप्रपद्ये ॥ अमृतंप्रपद्ये ॥ प्रजापतेःप्रियांतनुवमनार्त्तांप्रपद्ये ॥ इदमहंपंचदशे
नवज्रेण ॥ द्विषंतंभ्रातृव्यमवक्रामामि ॥ योस्मान्द्वेष्टि ॥ यंचवयंद्विष्मः ॥ भूर्भुवःसुवः ॥
हिं ॥ १ ॥ सत्यंदश ॥ १ ॥ ॥ प्रवोवाजाअभिद्यवः ॥ हविष्मंतोघृताच्या ॥ देवाञ्जिगा
तिसुम्नयुः ॥ अग्नआयाहिवीतये ॥ गृणानोहव्यदातये ॥ निहोतासत्सिबर्हिषि ॥ तंत्वास
मिद्भिरंगिरः ॥ घृतेनवर्द्धयामसि ॥ बृहच्छोचायविष्ठच ॥ सनःपृथुश्रवाय्यं ॥ १ ॥ अच्छादेववि
वाससि ॥ बृहदग्नेसुवीर्यं ॥ ईडेन्योनमस्यास्तिरः ॥ तमांसिदर्शतः ॥ समग्निरिध्यतेवृषा ॥ वृ
षोअग्निःसमिध्यते ॥ अश्वोनदेववाहनः ॥ तंहविष्मंतईडते ॥ वृषणंत्वावयंवृषन् ॥ वृषाणःसमिधी
महि ॥ २ ॥ अग्नेदीद्यंतंबृहत् ॥ अग्निंदूतंवृणीमहे ॥ होतारंविश्ववेदसं ॥ अस्ययज्ञस्यसुक्रतुं ॥
समिध्यमानोअध्वरे ॥ अग्निःपावकईड्यः ॥ शोचिष्केशस्तमीमहे ॥ समिद्धोअग्नआहुत ॥ देवान्यक्षि
स्वध्वर ॥ त्वꣳहिहव्यवाडसि ॥ आजुहोतदुवस्यत ॥ अग्निंप्रयत्यध्वरे ॥ वृणीध्वꣳहव्यवाहनं ॥

त्वंवरुणउतमित्रोअग्ने ॥ त्वांवर्द्धंतिमतिभिर्वसिष्ठाः ॥ त्वेवसुसुषणनानिसंतु ॥ यूयंपातस्वस्तिभिःस
दानः ॥ ३ ॥ श्रवाय्यमिधीमह्यसिंसमचं ॥ २ ॥ ॥ अग्नेमहाꣳअंसिब्राह्मणभारत ॥ असाव
सौ ॥ देवेद्धोमन्विद्धः ॥ ऋषिष्टुतोविप्रानुमादितः ॥ कविशस्तोब्रह्मसꣳशितोघृताहवनः ॥ प्रणीर्यज्ञा
नां ॥ रथीरध्वराणां ॥ अतूर्त्तोहोता ॥ तूर्णिर्हव्यवाट् ॥ आस्पात्रंजुहूर्देवानां ॥ १ ॥ चमसोदेवपा
नः ॥ अराꣳइवाग्नेनेमिर्देवाꣳस्त्वंपरिभूरसि ॥ आवहदेवान्यजमानाय ॥ अग्निमग्नआवह ॥ सोममा
वह ॥ अग्निमावह ।प्रजापतिमावह ॥अग्नीषोमावावह ॥ इंद्राग्नाआवह ॥ इंद्रमावह ॥ महेंद्रमावह ॥ देवाꣳआ
ज्यपाꣳआवह ॥ अग्निꣳहोत्रायावह ॥ स्वंमहिमानमावह ॥ आचाग्नेदेवान्वह ॥ सुयजाचयजजात
वेदः ॥ २ ॥ देवानामिंद्रमावहषट्च ॥ ३ ॥ ॥ अग्निर्होतावेत्वग्निः ॥ होत्रंवेत्तप्रावित्रं ॥ स्मोवयं ॥
साधुतेयजमानदेवता ॥ घृतवतीमध्वर्योःस्रुचमास्यस्व ॥ देवायुवंविश्ववारां ॥ ईडामहैदेवाꣳईडेन्यान्
॥ नमस्यामनमस्यान् ॥ यजामयज्ञियान् ॥ १ ॥ अग्निर्होतानव ॥ ४ ॥ समिधोअग्नआज्यस्यवियंतु
॥ तनूनपादग्नआज्यस्यवेतु ॥ इडोअग्नआज्यस्यवियंतु ॥ बर्हिरग्नआज्यस्यवेतु ॥ स्वाहाग्निं ॥ स्वा
हासोमं ॥ स्वाहाग्निं ॥ स्वाहाप्रजापतिं ॥ स्वाहाग्नीषोमौ ॥ स्वाहेंद्राग्नी ॥ स्वाहेंद्रं ॥ स्वाहामहेंद्रं ॥ स्वा

हांदेवाꣳआंज्यपान् ॥ स्वाहाग्निꣳहोत्राञ्जुषाणाः ॥ अग्नआज्यंस्यवियंतु ॥ १ ॥ इंद्राग्नीपंच
च ॥ ५ ॥ ॥ अग्निर्वृत्राणिजंघनत् ॥ द्रविणस्युर्विपन्ययां ॥ समिंद्धःशुक्रआहुतः ॥ जुषाणो
अग्निराज्यंस्यवेतु ॥ त्वꣳसोमासिसत्पतिः ॥ त्वꣳराजोतवृत्रहा ॥ त्वंभद्रोअंसिक्रतुः ॥ जुषाणःसो
मआज्यंस्यहविषोवेतु ॥ अग्निःप्रत्नेनजन्मंना ॥ शुंभानस्तनुवꣳस्वां ॥ कविर्विप्रेणवावृधे ॥
जुषाणोअग्निराज्यंस्यवेतु॥सोमंगीर्भिष्ट्वांवयं ॥ वर्द्धयांमोवचोविदंः ॥ सुमृडीकोनआविंश ॥ जुषा
णःसोमआज्यंस्यहविषोवेतु ॥ १ ॥ स्वाꣳषट्च ॥ ६ ॥ ॥ अग्निर्मूर्द्धादिवःककुत् ॥ पतिःपृथिव्याअ
यं ॥ अपाꣳरेताꣳसिजिन्वति ॥ भुवोयज्ञस्यरजंसश्चनेता ॥ यत्रांनियुद्भिःसचंसेशिवाभिः ॥ दिवि
मूर्द्धानंदधिषेसुवर्षां ॥ जिह्वामंग्नेचकृषेहव्यवाहं ॥ प्रजांपतेनत्वदेतान्यन्यः ॥ विश्वांजातानिपरि
तावंभूव ॥ यत्कांमास्तेजुहुमस्तन्नोंअस्तु ॥ १ ॥ वयꣳस्यांमपतयोरयीणां ॥ सवेंदपुत्रःपितरꣳस
मातरं ॥ ससूनुर्भुवत्सभुंवत्पुनर्मघः ॥ सद्यामौर्णोदंतरिक्षꣳससुवंः ॥ सविश्वाभुवोअभवत्सआभं
वत् ॥ अग्नीषोमासवेंदसा ॥ सहूंतीवनतंगिरंः ॥ संदेवत्राबंभूवथुः ॥ युवमेतानिंदिविरोंचना

निं ॥ अग्निश्चसोमसक्रतूअधत्तं ॥ २ ॥ युवꣳसिंधूꣳरभिशस्तेरवद्यात् ॥ अग्नीषोमावमुंचतं गृभीतान् ॥ इंद्राग्नीरोचनादिवः ॥ परिवाजेषुभूषथः ॥ तद्वांचेतिप्रवीर्यं ॥ श्नथद्वृत्रमुतसनो तिवाजं ॥ इंद्रायोअग्नोसहुरीसपर्यात् ॥ इरज्यंतावसव्यस्यभूरेः ॥ सहस्तमासहसावाजयंता ॥ एंद्र सानसिꣳरयिं ॥ ३ ॥ सजित्वानꣳसदासहं ॥ वर्षिष्ठमूतयेभर ॥ प्रससाहिषेपुरुहूतशत्रून् ॥ ज्येष्ठस्तेशुष्मइहरातिरस्तु ॥ इंद्राभरदक्षिणेनावसूनि ॥ पतिःसिंधूनामसिरेवतीनां ॥ महाꣳइं द्रोयओजसा ॥ पर्जन्योवृष्टिमाꣳइव ॥ स्तोमैर्वत्सस्यवावृधे ॥ महाꣳइंद्रोनृवदाचर्षणिप्राः ॥ ४ ॥ उतद्विबर्हाअमिनःसहोभिः ॥ अस्मद्रियग्वावृधेवीर्याय ॥ उरुःपृथुःसुकृतःकर्तृभिर्भूत् ॥ पिप्री हिदेवाꣳउशतोयविष्ठ ॥ विद्वाꣳऋतूꣳर्ऋतुपतेयजेह ॥ येदैव्याऋत्विजस्तेभिरग्ने ॥ त्वꣳहोतृ णामस्यायजिष्ठः ॥ अग्निꣳस्विष्टकृतं ॥ अयाडग्निरग्नेःप्रियाधामानि ॥ अयाट्सोमस्यप्रियाधामा नि ॥ ५ ॥ अयाडग्नेःप्रियाधामानि ॥ अयाट्प्रजापतेःप्रियाधामानि ॥ अयाडग्नीषोमयोःप्रि याधामानि ॥ अयाडिंद्राग्नियोःप्रियाधामानि ॥ अयाडिंद्रस्यप्रियाधामानि ॥ अयाण्महेंद्रस्यप्रि याधामानि ॥ अयाड्देवानामाज्यपानांप्रियाधामानि ॥ यक्षदग्नेर्होतुःप्रियाधामानि ॥ यक्षत्स्वंमे

ह्विमानं ॥ आयंजतामेज्याइषः ॥ कृणोतुसोअंध्वराजातवेदाः ॥ जुषतांꣳहविः ॥ अग्नेयदद्य
विशोअंध्वरस्यहोतः ॥ पावकशोचेवेष्ट्वꣳहियज्ज्वां ॥ ऋतायंजासिमाहिनाविंयद्भूः ॥ हव्यात्वं
हयविष्ठचातेअद्य ॥ ६ ॥ अस्त्वधत्तꣳरयिंचर्षणिप्राःसोमंस्यप्रियाधामानोषःषड्ढं ॥ ७ ॥ ॥ उपं
हूतꣳरथंतरꣳसहपृथिव्या ॥ उपंमारथंतरꣳसहपृथिव्याह्वंयतां ॥ उपंहूतंवामदेव्यꣳसहांतरिक्षेण ॥ उ
पंमावामदेव्यꣳसहांतरिक्षेणह्वयतां ॥ उपंहूतंबृहत्सहदिवा ॥ उपंमाबृहत्सहदिवाह्वंयतां ॥ उ
पंहूताःसप्तहोत्राः ॥ उपंमासप्तहोत्रांह्वयंतां ॥ उपंहूताधेनुःसहर्षभा ॥ उपंमाधेनुःसहर्षभांह्वयतां
॥ १ ॥ उपंहूतोभक्षःसखा ॥ उपंमाभक्षःसखांह्वयतां ॥ उपंहूतांꣳहो ॥ इडोपंहूता ॥ उपंहू
तेडां ॥ उपोंअस्माꣳइडांह्वयतां ॥ इडोपंहूता ॥ उपंहूतेडां ॥ मानवीघृतपंदीमैत्रावरुणी ॥
ब्रह्मदेवकृतमुपंहूतं ॥ २ ॥ दैव्यांअध्वर्यवउपंहूताः ॥ उपंहूतामनुष्याः ॥ यइमंयज्ञमवान् ॥
येयज्ञपंतिंवर्द्धान् ॥ उपंहूतेद्यावांपृथिवी ॥ पूर्वजेऋतावंरी ॥ देवीदेवपुंत्रे ॥ उपंहूतोयंयजमानः ॥
उत्तरस्यांदेवयज्यायामुपंहूतः ॥ भूयंसिहविष्करंणउपंहूतः ॥ दिव्येधामंनुपंहूतः ॥ इदंमेंदेवाहविर्जुषं
तामितितस्मिन्नुपंहूतः ॥ विश्वंमस्यप्रियमुपंहूतं ॥ विश्वस्यप्रियस्योपंहूतस्योपंहूतः ॥ ३ ॥ सहर्षभा

ह्वयतामुपंतꣳहविष्करणउपंहूतश्चत्वारिच ॥ ८ ॥ ॥ दवंवर्हिः ॥ वसुवनेवसुधेयस्यवेतु ॥ देवोन
राशꣳसः ॥ वसुवनेवसुधेयस्यवेतु ॥ देवोअग्निःस्विष्टकृत् ॥ सुद्रविणामंद्रःकविः ॥ सत्य
मन्मायजोहोता ॥ होतुर्होतुरायजोयान् ॥ अग्नेयांदेवानयाट् ॥ याꣳअपिप्रेः ॥ येतेहोत्रेअम
त्सत ॥ ताꣳससतुषीꣳहोत्रांदेवंगमा ॥ दिविदेवेषुयज्ञमेरयेमं ॥ स्विष्टकृच्चाग्नेहोताभूः ॥ व
सुवनेवसुधेयस्यनमोवाकेवीहि ॥ १ ॥ अपिप्रेःपंचच ॥ ९ ॥ इदंद्यावापृथिवीभद्रमभूत् ॥
आर्ध्मसूक्तवाकं ॥ उतनमोवाकं ॥ ऋध्यास्मसूक्तोच्यमग्ने । त्वꣳसूक्तवागसि ॥ उपश्रितोदिवः
पृथिव्योः ॥ ओमन्वतीतेस्मिन्यज्ञेयजमानद्यावापृथिवीस्तां ॥ शंगयेजीरदानू ॥ अत्रस्नूअप्रवे
दे ॥ उरुगव्यूतीअभयंकृतौ ॥ १ ॥ वृष्टिद्यावारीत्यापा ॥ शंभुवौमयोभुवौ ॥ ऊर्जस्व
तीचपयस्वतीच ॥ सूपचरणाचस्वधिचरणाच ॥ तयोराविदि ॥ अग्निरिदꣳहविरजुषत ॥ अवीवृध
तमहोज्यायोकृत ॥ सोमइदꣳहविरजुषत ॥ अवीवृधतमहोज्यायोकृत ॥ अग्निरिदꣳहविरजुषत ॥२॥
अवीवृधतमहोज्यायोकृत ॥ प्रजापतिरिदꣳहविरजुषत ॥ अवीवृधतमहोज्यायोकृत ॥ अग्नीषोमावि
दꣳहविरजुषेतां ॥ अवीवृधेतांमहोज्यायोकातां ॥ इंद्राग्नीइदꣳहविरजुषेतां ॥ अवीवृधेतांमहोज्यायो

कार्नां ॥ इंद्रंइदश्हविरंजुषत ॥ अवीवृधतमहोज्यायोंकृत ॥ महेंद्रंइदश्हविरंजुषत ॥ ३ ॥ अवींवृ
धनमहोज्यायोंकृत ॥ देवाआज्यपाआज्यंमजुषंत ॥ अवींवृधंतमहोज्यायोंकृत ॥ अग्निर्होत्रेणेदश्हविरं
जुषत ॥ अवीवृधतमहोज्यायोंकृत ॥ अस्यामृधद्धोत्रायांदेवंगमायां ॥ आशांस्तेयंयजमानोसौ ॥ आ
युराशांस्ते ॥ सुप्रजास्त्वमाशांस्ते ॥ सजातवनस्यामाशांस्ते ॥ ४ ॥ उत्तरांदेवयज्यामाशांस्ते ॥ भू
योंहविष्करंणमाशांस्ते ॥ दिव्यंधामाशांस्ते ॥ विश्वंप्रियमाशांस्ते ॥ यदनेनहविषाशांस्ते ॥ तदस्यात्त
दृध्यात् ॥ तदस्मैदेवारांसंतां ॥ तदग्निर्देवोदेवेभ्योवनंते ॥ वयमग्नेमांनुषाः ॥ इष्टंचवीतंचं ॥ उभेचंनो
द्यावांपृथिवीअश्हंसस्यांतां ॥ इहगतिर्वामस्येदंचं ॥ नमोंदेवेभ्यः ॥ ५ ॥ अभयंकृतांवकृताग्निरिदश्ह
विरंजुषतमहेंद्रइदश्हविरंजुषतसजातवनस्यामाशांस्तेवीतंचत्रीणिंच ॥ १० ॥ ॥ तच्छंयोरावृंणीम
हे ॥ गातुंयज्ञायं ॥ गातुंयज्ञपंतये ॥ दैवीःस्वस्तिरस्तुनः ॥ स्वस्तिर्मानुषेभ्यः ॥ ऊर्ध्वंजिगातुभेषजं ॥ शंनोंअ
स्तुद्विपदें ॥ शंचतुंष्पदे ॥ १ ॥ तच्छंयोरष्टौ ॥ ११ ॥ आप्यांयस्वसंतें ॥ इहत्वष्टांरमग्रियंतन्नस्तुरीपं ॥
देवानांपत्नीरुशतीरवंतुनः ॥ प्रावंतुनस्तुजयेवाजंसातये ॥ याःपार्थिवासोयाअपामपिंव्रते ॥ तानोंदे
वीःसुहवाःशर्मंयच्छत ॥ उतग्नाव्यंतुदेवपत्नीः ॥ इंद्राण्यग्नाय्यश्विनीराट् ॥ आरोदसीवरुणानीशृंणो
तु ॥ व्यंतुदेवीर्यऋतुर्जनीनां ॥ १ ॥ अग्निर्होतांगृहपतिःसराजां ॥ विश्वावेदजनिमाजातवेदाः ॥

देवानाममृतयोमर्त्यानां ॥ यजिष्ठःसप्रयजतामृतावा ॥ वयमुत्वागृहपतेजनानां ॥ अग्नेअर्कमसमिधांबृहंतं ॥
अस्थूरिणोगार्हपत्यानिसंतु ॥ तिग्मेनंनस्तेजसासशिशाधि ॥ २ ॥ जनीनामष्टौच ॥ १२ ॥ उपहूतः
रथंतरःसहपृथिव्या ॥ उपमारथंतरंसहपृथिव्याह्वयतां ॥ उपहूतंवामदेव्यःसहांतरिक्षेण ॥ उपमा
वामदेव्यःसहांतरिक्षेणह्वयतां ॥ उपहूतंबृहत्सहादिवा ॥ उपमाबृहत्सहादिवाह्वयतां ॥ उपहूता सप्त
होत्राः ॥ उपमासप्तहोत्राह्वयंतां ॥ उपहूताधेनुःसहर्षभा ॥ उपमाधेनुःसहर्षभाह्वयतां ॥ १ ॥ उ
पहूतोभक्षःसखा ॥ उपमाभक्ष.सखाह्वयतां ॥ उपहूताहो ॥ इडोपहूता ॥ उपहूतेडा ॥ उपोअ
स्माःइडाह्वयतां ॥ इडोपहूता ॥ उपहूतेडा ॥ मानवीघृतपदीमैत्रावरुणी ॥ ब्रह्मदेवकृतमुपहूतं ॥
॥ २ ॥ दैव्याअध्वर्यवउपहूताः ॥ उपहूतामनुष्याः ॥ यइमंयज्ञमवान् ॥ येयज्ञपतिंवर्धान् ॥ उप
हूतेद्यावापृथिवी ॥ पूर्वजेऋतावरी ॥ देवीदेवपुत्रे ॥ उपहूतेयंयजमाना ॥ इंद्राणीवाविधवा ॥ अदि
तिरिवसुपुत्रा ॥ उत्तरस्यांदेवयज्यायामुपहूता ॥ भूयसिहविष्करणउपहूता ॥ दिव्येधामन्नुपहूता ॥
इदंमेदेवाहविर्जुषंतामितितस्मिन्नुपहूता ॥ विश्वमस्याःप्रियमुपहूतं ॥ विश्वस्यप्रियस्योपहूतस्योपहूता
॥ ३ ॥ सहर्षभाह्वयतामुपहूतःसुपुत्राषट् ॥ १३ ॥ ॥ सत्यंप्रवोग्नेमहानाग्निर्होतासमिधो

ग्निर्वृत्राण्यग्निर्मूर्धोपहूतंदेवंबर्हिरिदंद्यावापृथिवीतच्छंयोराप्यायस्वोपहूतंत्रयोदश ॥ १३ ॥ ॥
सत्यंवयꣳस्यामवृष्टिद्यावानवविꣳशतिः ॥ २९ ॥ ॥ हरिःॐ ॥ ॥ अंजंतित्वाम
ध्वरेदेवयंतः ॥ वनस्पतेमधुनादैव्येन ॥ यदूर्ध्वस्तिष्ठाद्रविणेहधत्तात् ॥ यद्वाक्षयोमातुरस्याउपस्थे ॥
उच्छ्रयस्ववनस्पते ॥ वर्ष्मन्पृथिव्याअधि ॥ सुमितीमीयमानः ॥ वर्चोधायज्ञवाहसे ॥ समिद्धस्यश्रय
माणःपुरस्तात् ॥ ब्रह्मवन्वानोअजरꣳसुवीरं ॥ १ ॥ आरेअस्मदमतिंबाधमानः ॥ उच्छ्रयस्वमहतेसौ
भगाय ॥ ऊर्ध्वऊषुणऊतये ॥ तिष्ठादेवोनसविता ॥ ऊर्ध्वोवाजस्यसनितायदंजिभिः ॥ वाघद्भिर्वि
ह्वयामहे ॥ ऊर्ध्वोनःपाह्यꣳहसोनिकेतुना ॥ विश्वꣳसमत्रिणंदह ॥ कृधीनऊर्ध्वांचरथायजीवसे ॥ वि
दादेवेषुनोदुवः ॥ २ ॥ जातोजायतेसुदिनत्वेअन्हां ॥ समर्यआविदथेवर्धमानः ॥ पुनंतिधीराअपसो
मनीषा ॥ देवयाविप्रउदियर्तिवाचं ॥ युवासुवासाःपरिवीतआगात् ॥ सउश्रेयान्भवतिजायमानः ॥
तंधीरासःकवयउन्नयंति ॥ स्वाधियोमनसादेवयंतः ॥ पृथुपाजाअमर्त्यः ॥ घृतनिर्णिक्स्वाहुतः ॥
अग्निर्यज्ञस्यहव्यवाट् ॥ तꣳसबाधोयतस्रुचः ॥ इत्थाधियायज्ञवंतः ॥ आचक्रुरग्निमूतये ॥ त्वंवरुण
उतमित्रोअग्ने ॥ त्वांवर्धंतिमतिभिर्वसिष्ठाः ॥ त्वेवसुसुषणनानिसंतु ॥ यूयंपातस्वस्तिभिःसदानः ॥ ३ ॥ सु

॥३५॥

वीरंदुवस्वांहुतोष्टौचं॥ ३॥ होतांयक्षदग्निꣳसमिधांसुषमिधासमिंद्धंनाभांपृथिव्याःसंगथेवामस्यं ॥वर्ष्मंदिं
वइडस्पदेवेत्वाज्यंस्यहोतर्यजं ॥ होतांयक्षत्तनूनपातमदितेगर्भंभुवनस्यगोपां ॥ मध्वाद्यदेवोदेवेभ्योंदे
वयानांन्पथोअंनक्तुवेत्वाज्यंस्यहोतर्यजं ॥ होतांयक्षन्नराशꣳसंनृशस्त्रंन्दृꣳःप्रंणेत्रं ॥ गोभिंर्वपावान्त्स्या
द्वीरैःशक्तीवान्त्रथैःप्रथमयावाहिंरण्यैश्चंद्रीवेत्वाज्यंस्यहोतर्यजं ॥ होतांयक्षदग्निमिडईडितोदेवोदेवाꣳआ
वक्षद्दूतोहंव्यवाडमूरः ॥ उपेमंयज्ञमुपेमांदेवोदेवहूंतिमवतुवेत्वाज्यंस्यहोतर्यजं ॥ होतांयक्षद्बर्हिःसुष्टरी
मोर्णम्रदाअस्मिन्यज्ञेविचप्रचंप्रथताꣳस्वासस्थंदेवेभ्यः ॥ एमेंनदद्यवसंवोरुद्राआंदित्याःसंदंतुप्रि
यमिंद्रस्यास्तुवेत्वाज्यंस्यहोतर्यजं ॥ १ ॥ होतांयक्षदुरंऋष्वाःकंवष्योकोंषधावनोरुदातांभिर्जिहंतांवि
पक्षोंभिःश्रयंतां ॥ सुप्रायणाअस्मिन्यज्ञेविश्रंयंतामृतावृधोंवियंत्वाज्यंस्यहोतर्यजं ॥ होतांयक्षदुषा
सानक्तांबृहतीसुपेशंसानृꣳःपतिभ्योयोनिंकृण्वाने ॥ सꣳस्मयंमानेइंद्रेणदेवैरैदेवांर्हिःसींदतांवीतामाज्यंस्य
होतर्यजं ॥ होतांयक्षद्दैव्याहोतांरामंद्रापोतांराकवोप्रचेतसा ॥ स्विंष्टमद्यान्यःकंरदिषास्वंभिगूर्त्तमन्यऊ
र्जासतंवसेमंयज्ञंदिविदेवेषुंधत्तांवीतामाज्यंस्यहोतर्यजं ॥ होतांयक्षत्तिस्रोदेवीरपसांमपस्तंमाअच्छिद्र
मद्येदमपंस्तन्वतां ॥ देवेभ्योंदेवीर्देवमपोंवियंत्वाज्यंस्यहोतर्यजं ॥ होतांयक्षत्त्वष्टांरमचिंष्टुमपाकꣳरेतो

धांविश्वंवसंयशोधां॥पुरुरूपमकांमकर्शनंसुपोष पोषैःस्यात्सुवीरोंवीरैर्वेत्वाज्यंस्यहोतर्यजं । ॥ होतांय क्षद्वनस्पतिंमुपावंस्त्रक्षाद्धियोजोष्टारंशशमन्नरः ॥ स्वदात्स्वधिंतिऋतुथाद्यदेवोदेवेभ्योंहव्यावाड्वेत्वाज्यं स्यहोतर्यजं॥होतांयक्षदग्निंस्वाहाज्यंस्यस्वाहामेदंसःस्वाहांस्तोकानांस्वाहास्वाहांकृतीनांस्वाहांहव्य सूक्तीनां ॥ स्वाहांदेवांआज्यपान्त्स्वाहाग्निंहोत्राज्जुषाणाअग्नआज्यंस्यवियंतुहोतर्यजं ॥ २ ॥ प्रि यमिंद्रस्यास्तुवेत्वाज्यंस्यहोतर्यजंसुवीरोंवीरैर्वेत्वाज्यंस्यहोतर्यजंचत्वारिंच ॥ २ ॥ ॥ आग्निंतनू नपांतंनराशंसंमग्निंमिडईडितोबर्हिर्दुरंउषासानक्तादैव्यांतिस्रस्त्वष्टांरंवनस्पतिंमाग्निं ॥ पंचवेत्वेकोंवि यंतुद्विर्वीतामेकोंवियंतुद्विर्वेत्वेकोंवियंतु ॥ ॥ समिंद्धोअद्यमनुंषोदुरोणे ॥ देवोदेवान्यंजसिजात वेदः ॥ आचवहंमित्रमहश्चिकित्वान् ॥ त्वंदूतःकविरंसिप्रचेताः ॥ तनूनपात्पथऋतस्ययानान् ॥ म ध्वांसमंजन्त्स्वंदयासुजिह्व ॥ मन्मांनिधीभिरुतयज्ञमृंधन् ॥ देवत्राचंकृणुह्यध्वरंनंः ॥ नराशंसंस्यम हिमानंमेषां ॥ उपंस्तोषामयजतस्यंयज्ञैः ॥ १ ॥ तेसुक्रतंवःशुचंयोधियंधाः ॥ स्वदंतुदेवाउभयांनि हव्या ॥ आजुह्वांनईड्योवंद्यश्च ॥ आयांह्यग्नेवसुंभिःसजोषांः ॥ त्वंदेवानांमसियह्वहोतां ॥ सएंनान्य क्षीषितोयंजीयान् ॥ प्राचीनंबर्हिःप्रदिशांपृथिव्याः ॥ वस्तोरस्यावृज्यतेअग्रेअह्नां ॥ व्युप्रथतेवितरंव

रीयः ॥ देवेभ्योअदितयेस्योनं॥ २ ॥व्यचस्वतीरुर्विया विश्रयंतां ॥ पतिभ्योनजनयः शुंभमानाः ॥ देवी
र्द्वारोवृहतीर्विश्वमिन्वाः ॥ देवेभ्योभवथसुप्रायणाः ॥ आसुष्वयंतीयजतेउपाके ॥ उषासानक्तासद
तांनियोनौ ॥ दिव्येयोषणेवृहतीसुरुक्मे॥ अधिश्रियंशुक्रपिशंदधाने॥दैव्याहोताराप्रथमासुवाचा ॥
मिमानायज्ञंमनुषोयजध्यै ॥ ३ ॥ प्रचोदयंताविदथेषुकारू॥प्राचीनंज्योतिःप्रदिशादिशंता ॥आनोयज्ञं
भारतीतूयमेतु ॥ इडामनुष्वदिहचेतयंती ॥ तिस्रोदेवीर्बर्हिरेदंस्योनं ॥ सरस्वतीःस्वपसःसदंतु ॥
यइमेद्यावापृथिवीजनित्री ॥ रूपैरपिंशद्भुवनानिविश्वा ॥ तमद्यहोतरिषितोयजीयान् ॥ देवंत्वष्टार
मिहयक्षिविद्वान् ॥ ४ ॥ उपावसृजत्मन्यासमंजन् ॥ देवानांपाथऋतुथाहवींषि ॥ वनस्पतिःश
मितादेवोअग्निः ॥ स्वदंतुहव्यंमधुनाघृतेन ॥ सद्योजातोव्यमिमीतयज्ञं ॥ अग्निर्देवानाम
भवत्पुरोगाः ॥ अस्यहोतुःप्रदिश्यृतस्यवाचि ॥ स्वाहाकृतंहविरदंतुदेवाः ॥ ५ ॥ यज्ञैःस्योनंयजध्यै
विद्वानष्टौच ॥ ३ ॥ ॥ अग्निर्होतानोअध्वरे ॥ वाजीसन्परिणीयते ॥ देवोदेवेषुयज्ञियः ॥ प
रित्रिविष्टचध्वरं ॥ यात्यग्नीरथीरिव ॥ आदेवेषुप्रयोदधत् ॥ परिवाजपतिःकविः ॥ अग्निर्हव्यान्यक्र
मीत् ॥ दधद्रत्नानिदाशुषे ॥ १ ॥ अग्निर्होतानोनव ॥ ४ ॥ ॥ अजैदग्निः॥असनद्वाजन्नि ॥ दे

वोदेवेभ्योहृव्यावाट् ॥ प्रांजोभिर्हिन्वानः॥धेनांभिःकल्पंमानः ॥ यज्ञस्यायुःप्रतिरन् ॥ उपप्रेष्यंहोतः ॥
हृव्योदेवेभ्यः ॥ १ ॥ अजैदष्टौ ॥ ५ ॥ दैव्यांःशमितारउतमंनुष्याआरंभध्वं ॥ उपंनयतमेध्यादुरंः
॥ आशासांनामेधंपतिभ्यांमेधं ॥ प्रास्माअग्निंभंरत ॥ स्तृणीतबर्हिः ॥ अन्वेंनंमातामंन्यतां ॥ अनुंपि
ता ॥ अनुभ्रातासगंर्भ्यः ॥ अनुसखासयूंथ्यः ॥ उदीचीनांऽअस्यपदोनिधंत्तात् ॥ १ ॥ सूर्यंचक्षुंर्ग
मयतात् ॥ वातंप्राणमन्ववंसृजतात् ॥ दिशःश्रोत्रं ॥ अंतरिंक्षमसुं ॥ पृथिवीश्शरीरं ॥ एकधास्यत्व
चमाछ्यंतात् ॥ पुरानाभ्यांअपिशसोंवपामुत्खिंदतात् ॥ अंतरेवोष्माणंवारयतात् ॥ श्येनमंस्यवक्षःकृ
णुतात् ॥ प्रशसांबाहू ॥ २ ॥ शलादोषणी ॥ कश्यपेवांऽसां ॥ अच्छिंद्रेश्रोणीं ॥ कवषोरूस्त्रेक
पंर्णाष्ठीवंतां ॥ षड्विंशतिरस्यवंक्रंयः ॥ ताअंनुष्ठचोच्यांवयतात् ॥ गात्रंगात्रमस्यानूंनंकृणुतात् ॥ ऊ
वध्यगोहंपार्थिवंखनतात् ॥ अस्नारक्षःसश्सृंजतात् ॥ वनिष्ठुमंस्यमारांविष्ट ॥ ३ ॥ उरूकंमन्यंमानाः
॥ नेदंस्तोकेतनंये ॥ रवितारवंच्छमितारः ॥ अध्रिंगोशमीध्वं ॥ सुशमिंशमीध्वं ॥ शमीध्वमंध्रिगो ॥
अध्रिंगुश्चापांपश्च ॥ उभौदेवानांऽशमितारौ ॥ ताविमंपशुंश्रंपयतांप्रविद्वांऽसौ ॥ यथांयथास्यश्रपं
णंतथांतथा ॥ ४ ॥ धत्ताद्धाहूमारांविष्टतथांतथा ॥ ६ ॥ जुषस्वंसप्रथंस्तमं ॥ वचोंदेवप्संरस्तमं ॥

हव्या जुह्वानआसनि ॥ इमंनोयज्ञममृतेषुधेहि ॥ इमाहव्याजातवेदोजुषस्व ॥ स्तोकानामग्नेमेदसो
घृतस्य ॥ होतःप्राशानप्रथमोनिषद्य ॥ घृतवंतःपावकते ॥ स्तोकाश्चोतंतिमेदसः ॥ स्वधर्मदेववीतये
॥ १ ॥ श्रेष्ठंनोधेहिवार्यं ॥ तुभ्यंस्तोकाघृतश्चुतः ॥ अग्नेविप्रायसंत्य ॥ ऋषिःश्रेष्ठःसमिध्यसे ॥
यज्ञस्यप्राविताभव ॥ तुभ्यंश्चोतंत्यध्रिगोशचीवः ॥ स्तोकासोअग्नेमेदसोघृतस्य ॥ कविशस्तोबृहता
भानुनागाः ॥ हव्याजुषस्वमेधिर ॥ ओजिष्ठंतेमध्यतोमेदउद्भृतं ॥ प्रतेवयंददामहे ॥ श्चोततितेवसो
स्तोकाअधित्वचि ॥ प्रतितांदेवशोविहि ॥ २ ॥ देववीतयउद्भृतंत्रीणिच ॥ ७ ॥ उ वृत्रहणावृत्रह
भिःशुष्मैः ॥ इंद्रयातंनमोभिरग्नेअर्वाक् ॥ युवंराधोभिरकवेभिरिंद्र॥ अग्नेअस्मेभवतमुत्तमेभिः ॥ हो
तायक्षदिंद्राग्नी ॥ छागस्यवपायामेदसः ॥ जुषेतांहविः ॥ होतर्यज ॥ विह्यख्यन्मनसावस्यइच्छ
न् ॥ इंद्राग्नीज्ञासउतवासजातान् ॥ १ ॥ नान्यायुवत्प्रमतिरस्तिमह्यं ॥ सवांधियंवाजयंतीमतक्षं ॥
होतायक्षदिंद्राग्नी ॥ पुरोडाशस्यजुषेतांहविः ॥ होतर्यज ॥ त्वामीडतेअजिरंदूत्याय ॥ हविष्मंतः
सदमिन्मानुषासः ॥ यस्यदेवैरासदोबर्हिरग्ने ॥ अहान्यस्मैसुदिनाभवंतु ॥ होतायक्षदग्निं ॥ पुरोडा
शस्यजुषतांहविः ॥ होतर्यज ॥ २ ॥ सजातानग्निंद्वेच ॥ ८ ॥ गीर्भिर्विप्रःप्रमतिमिच्छमानः ॥ ई

द्रेरयियशसंपूर्वभाजं ॥ इंद्राग्नीवृत्रहणासुवज्रा ॥ प्रणोनव्येभिस्तिरतंदेष्णैः ॥ माच्छेद्मरश्मीश्ँरितिना
धमानाः ॥ पितृणाश्ँशक्तीरनुयच्छमानाः ॥ इंद्राग्निभ्यांकंवृषणोमदंति ॥ ताह्यद्रीधिषणायाउपस्थे ॥
अग्निश्ँसुदीतिश्ँसुदृशंगृणंतः ॥ नमस्यामस्त्वेडचंजातवेदः ॥ त्वांदूतमरतिश्ँहव्यवाहं ॥ देवाअकृण्व
न्नमृतस्यनाभिं ॥ १ ॥ जातवेदोद्वेच ॥ ९ ॥ त्वश्ँह्यग्नेप्रथमोमनोता ॥ अस्याधियोअभवोदस्महोता ॥
त्वश्ँसींवृषन्नकृणोर्दुष्टरीतु ॥ सहोविश्वस्मैसहसेसहध्यै ॥ अधाहोतान्यसीदोयजीयान् ॥ इडस्पद
इषयन्नीड्यःसन् ॥ तंत्वानरःप्रथमंदेवयंतः ॥ महोरायेचितयंतोअनुग्मन् ॥ वृतेवयंतंत्वहुभिर्वसव्यैः ॥
त्वेरयिंजागृवाश्ँसोअनुग्मन् ॥ १ ॥ रुशंतमग्निंदर्शतंबृहंतं ॥ वपावंतंविश्वहादीदिवाश्ँसं ॥ पदंदेव
स्यनमसाव्यंतः ॥ श्रवस्यवःश्रवआपन्नमृक्तं ॥ नामानिचिद्दधिरेयज्ञियानि ॥ भद्रायांतेरणयंतसंदृष्टौ
॥ त्वांवर्धंतिक्षितयःपृथिव्यां ॥ त्वश्ँरायउभयासोजनानां ॥ त्वंत्राताताकरणेचेत्योभूः ॥ पितामातासद
मिन्मानुषाणां ॥ सपर्येण्यःसप्रियोविक्ष्वग्निः ॥ होतामंद्रोनिषसादायजीयान् ॥ तंत्वावयंदमआदीदि
वाश्ँसं ॥ उपज्ञुबाधोनमसासदेम ॥ तंत्वावयश्ँसुधियोनव्यमग्ने ॥ सुम्नायवईमहेदेवयंतः ॥ त्वंविशो
अनयोदीद्यानः ॥ दिवोअग्नेबृहतारोचनेन ॥ विशांकविंविश्पतिश्ँशश्वतीनां ॥ नितोशनंवृषभंचर्ष

णीनां ॥ ३ ॥ प्रेतंषाणिमिषयंतंपावकं ॥ राजंतमग्निंयंजतश्रंयीणां ॥ सोअग्नईजेशशमेचमर्तः ॥
यस्तआनंड्ळामिधांहव्यदातिं ॥ यआहुतिंपरिवेदानमोभिः ॥ विश्वेत्सवामादंधतेत्वोतः ॥ अस्माउंतेम
हिंमहेविंधेम ॥ नमोभिरग्नेसमिधोतहव्यैः ॥ वेदीसूनोसहसोगीर्भिरुक्थैः ॥ आतेंभद्रायांःसुमतौयंते
म ॥ ४ ॥ आयस्ततंथरोदंसीविभासा ।। श्रवोभिश्चश्रवस्यंस्तरुत्रः ॥ बृहद्भिर्वाजैस्थविंरेभिरस्मे ॥
रेवद्भिरग्नेवितरांविभांहि ॥ नृवद्वंसोसदमिद्धेह्यस्मे ।। भूरिंतोकायतनंयायपश्वः ॥ पूर्वीरिषोबृहतीरारेअ
घाः ॥ अस्मेभद्रासौंश्रवसानिंसंतु ॥ पुरूण्यंग्नेपुरुधात्वाया ॥ वसूनिराजन्वसुतांतेअश्यां ॥ पुरूणि
हित्वेपुरुवारसंतिं ॥ अग्नेवसुंविधतेराजंनित्वे ॥ ५ ॥ जागृवाःसोअनुंग्मन्मानुषाणांचर्षणीनांयंतेमा
इयांद्विचं ॥ १० ॥ ॥ आभांरतःशिक्षतंवज्रबाहू ॥ अस्माःइंद्राग्नीअवतःशचीभिः ॥ इमेनुतेर
श्मयःसूर्यस्य ॥ येभिःसपित्वंपितरोनआयंन् ॥ होतायक्षदिंद्राग्नी॥ छागस्यहविषआत्तामद्य ॥ मध्यतो
मेदउद्भृतं ॥ पुराद्वेषोभ्यः ॥ पुरापौरुंषेय्यागृभः ॥ घस्तांन्नूनं ॥ १ ॥ घासेअज्राणांयवंसप्रथमानां ॥
सुमत्क्षंराणाःशतरुद्रियाणां ।। अग्निष्वात्तानांपीवोंपवसनानां ॥ पार्श्वतःश्रोणितः ॥ शितामत उत्साद
तः ॥ अंगांदंगादवंत्तानां ॥ करंतएवेंद्राग्नी ॥ जुषेतांःहविः ॥ होतर्यज ॥ देवेभ्योवनस्पतेहविषोर्श्वि

॥ हिरण्यपर्णप्रदिवंस्तेअर्थं ॥ २ ॥ प्रदक्षिणिद्रंशनयानियूयं ॥ ऋतस्यवक्षिपथिभीरजिंष्ठैः ॥ होतायक्षद्वनस्पतिमभिहि ॥ पिष्टतंमयारभिंष्टयारशनयाधित ॥ यत्रेंद्राग्नियोश्छागस्यहविषंःप्रियाधामानि ॥ यत्रवनस्पतेंःप्रियापाथांशसि ॥ यत्रदेवानांमाज्यपानांप्रियाधामानि॥ यत्राग्नेर्होतुंःप्रियाधामानि ॥ तत्रेतंप्रस्तुत्येवोपस्तुत्येवोपावंस्रक्षत् ॥ रभीयांश्समिवकृत्वी ॥ ३ ॥ करंदेवंदेवोवनस्पतिः ॥ जुषतांश्हविः ॥ होतर्यजं ॥ पिप्रीहिदेवांश्उशतोयंविष्ठ ॥ विद्वांश्ऋतूंश्ऋतुपतेयजेह ॥ येदैव्यांऋत्विजस्तेभिरग्ने ॥ त्वश्होतॄणामस्यायंजिष्ठः ॥ होतायक्षदग्निश्स्विष्टकृतं ॥ अयाडग्निरिंद्राग्नियोश्छागस्यहविषंःप्रियाधामानि ॥ अयाड्वनस्पतेंःप्रियापाथांशसि ॥ अयांड्देवानांमाज्यपानांप्रियाधामानि ॥ यक्षंदग्नेर्होतुंःप्रियाधामानि ॥ यक्षत्स्वंमहिमानं ॥ आयजतामेज्याइषंः ॥ कृणोतुसोअंध्वराजातवेदाः ॥ जुषतांश्हविः ॥ होतर्यजं ॥ ४ ॥ नूनमर्थंकृत्वीपाथांशसिसप्तचं॥ ११ ॥ ॥ उपोंहयद्विदथंवाजिनोगूः॥गीर्भिर्विप्रा.प्रमंतिमिच्छमानाः॥अर्वंतोनकाष्ठांनक्षमाणाः॥इंद्राग्नीजोहुंवतोनरस्ते ॥ वनंस्पतेरशनयाभिधायं ॥ पिष्टतंमयावयुनानिविद्वान् ॥ वहदेवत्रादिधिषोहवींश्षि ॥ प्रचंदातारंममृतेंषुवोचः ॥ अग्निश्स्विष्टकृतं ॥ अयाडग्निरिद्राग्नियोश्छागस्यहविषंःप्रियाधामानि ॥ १ ॥ अयाड्वनस्पतेंःप्रियापाथांशसि ॥ अयांड्देवानांमाज्यपानांप्रियाधामानि ॥ यक्षंदग्नेर्होतुंःप्रियाधामानि ॥ य

क्षत्त्वंमहिमानं ॥ आयजतामेज्याइषः ॥ कृणोतुसोअध्वराजातवेदाः ॥ जुषतांहविः ॥ अ
ग्नेयदद्यविशोअध्वरस्यहोतः ॥ पावकशोचेवेष्ट्वंहियज्वा ॥ ऋतायजासिमहिनावियद्भूः ॥
हव्यावहयविष्ठयातेअद्य ॥ १ ॥ धामानिभूरेकंच ॥ १२ ॥ ॥ देवंबर्हिःसुदेवंदेवैस्यात्सुवो
रंवीरैर्वस्तोर्वृज्येताक्तोःप्रभ्रियेतात्यन्यारायाबर्हिष्मंतोमदेमवसुवनेवसुधेयस्यवेतुयजं ॥ देवीर्द्वारःसंघा
तेविड्वीर्यामन्छिथिराध्रुवादेवहूतौवत्सईमेनास्तरुणआमिमीयात्कुमारोवानवजातोमैनाअर्वारेणुककाटःपृ
णग्वसुवनेवसुधेयस्यवियंतुयजं ॥ देवीउषासानक्ताद्यास्मिन्यज्ञेप्रयत्यह्वेतामपिनूनंदैवीर्विशःप्रायासि
ष्टांसुप्रीतेसुधितेवसुवनेवसुधेयस्यवीतांयजं ॥ देवीजोष्ट्रीवसुधितीययोरन्याघाद्वेषांसिसियुयवदान्याव
क्षद्वसुवार्याणियजमानायवसुवनेवसुधेयस्यवीतांयजं ॥ देवीऊर्जाहुतीइषमूर्जमन्यावक्षत्सग्धिंसपीति
मन्यानवेनपूर्वंदयमानाःस्यामपुराणेननवंतामूर्जमूर्जाहुतीऊर्जयमानेअधातांवसुवनेवसुधेयस्यवीतांयजं ॥
देवादैव्याहोतारानेष्टारापोताराहताघशंसावाभरद्वसुवसुवनेवसुधेयस्यवीतांयजं ॥ देवीस्तिस्रस्तिस्रो
देवीरिडासरस्वतीभारतीद्यांभारत्यादित्यैरस्पृक्षत्सरस्वतीमंरुद्रैर्यज्ञमावीदिहैवेडयावसुमत्यासधमादंमदे

मवसुवनेवसुधेयस्यवियंतुयजं ॥ देवोनराशंसस्त्रिशीर्षाषडक्षःशतमिदेनंशशितिवृष्ठाआदधतिसह
स्त्रमींप्रवंहांतिमित्रावरुणदस्यहोत्रमर्हतोबृहस्पतिस्तोत्रमश्विनामध्वर्यवंवसुवनेवसुधेयस्यवेतुयजं ॥देवोवन
स्पतिर्वर्षप्रांवावृतनिर्णिग्घामग्रेणास्पृक्षदांतरिक्षंमध्येनाप्रा पृथिवीमुपरेणादृंहीद्वसुवनेवसुधेयस्यवेतुयजं
॥ देवंबर्हिर्वारितीनांनिधेधासिप्रच्युतीनामप्रच्युतंनिकाममधरणंपुरुस्पार्हंयशस्वदेनाबर्हिषान्याबर्हींष्यामि
ष्यांमवसुवनेवसुधेयस्यवेतुयजं ॥देवोअग्निःस्विष्टकृत्सुद्रविणामंद्रःकविःसत्यमन्मायजोहोताहोतुर्होतुराय
जीयानग्नेयान्देवानयाड्याँअपिप्रेर्येतेहोत्रेअमंत्सतताःसंसनुषींहोत्रांदेवंगमांदिविदेवेषुयज्ञमेरयेमं
स्विष्टकृच्चाग्नेहोताभूर्वसुवनेवसुधेयस्यनमोवाकेवीहियजं।।यजैकंच॥ १३ ॥ देवंबर्हिर्देवीर्द्वारोदेवीउषासा
नक्तादेवीजोष्ट्रीदेवी ऊर्जाहुतीदेवादैव्याहोतारादेवीस्तिस्रस्तिस्रोदेवीर्देवोनराशंसोदेवोवनस्पतिर्देवंब
र्हिर्वारितीनांदेवोअग्निःस्विष्टकृत्सुद्रविणा ॥देवंबर्हिः ॥ वसुवनेवसुधेयस्यवेतु ॥ देवीर्द्वारः॥ वसुवनेव
सुधेयस्यवियंतु ॥ देवीउषासानक्ता ॥ वसुवनेवसुधेयस्यवीतां ॥ देवीजोष्ट्री ॥ वसुवनेवसुधेयस्यवीतां ॥
देवीऊर्जाहुती ॥ वसुवनेवसुधेयस्यवीतां ॥ १ ॥ देवादैव्याहोतारा ॥ वसुवनेवसुधेयस्यवीतां ॥ दे


॥४०॥

वीस्तिस्रस्तिस्रोदेवीः ॥ वसुवनेवसुधेयस्यव्रियंतु ॥ देवोनराशंसः ॥ वसुवनेवसुधेयस्यवेतु ॥ दे
वोवनस्पतिः ॥ वसुवनेवसुधेयस्यवेतु ॥ देवंबर्हिर्वारितीनां ॥ वसुवनेवसुधेयस्यवेतु ॥ २॥ देवोअग्निः
स्विष्टकृत् ॥ सुद्रविणामंद्रःकविः ॥ सत्यमन्मायजीहोता ॥ होतुर्होतुरायजीयान् ॥ अग्नेयांदेवानया
ट् ॥ यांऽअपिप्रेः ॥ येतेहोत्रेअमत्सत ॥ तांऽससनुषींऽहोत्रांदेवंगमां ॥ दिविदेवेषुयज्ञमेरयेमं ॥
स्विष्टकृच्चाग्नेहोताभूः ॥ वसुवनेवसुधेयस्यनमोवाकेवीहि ॥ ३ ॥ वीतांत्वत्वभूरेकंच ॥ १४ ॥ ॥
अग्निमद्यहोतारमवृणीतायंयजमानःपचन्पक्तीःपचन्पुरोडाशंबध्नन्निंद्राग्निभ्यांछागंऽसूपस्थाअद्यदेवोवन
स्पतिरभवदिंद्राग्निभ्यांछागेनाघस्तांतंमेदस्तःप्रतिपचताग्रभीष्टामवीवृधेतांपुरोडाशेनत्वामद्यर्षआर्षेयर्षीणां
नपादवृणीतायंयजमानोबहुभ्यआसंगतेभ्यएषमेदेवेषुवसुवार्यायक्ष्यतइतितायादेवादेवदानान्यदुस्तान्यं
स्माआचसास्वाचगुरस्वेषितश्चहोतरसिभद्रवाच्यायप्रेषितोमानुषःसूक्तवाकायसूक्ताब्रूहि ॥ १ ॥ अ
ग्निमद्यैकं ॥ १५ ॥ अंजंतिहोतायक्षत्समिद्धोअद्याग्निरजैद्दैव्यांजुषस्वावृत्रहणागीर्भिस्त्वऽह्वाभरतमुपोह्वय
द्देवंबर्हिसुदेवंदेवंवर्हिरग्निमुद्यपंचदश ॥ १५ ॥ अंजंत्युपावसृजंनान्यापुवत्कंरदेवंदेवोवनस्पतिरष्टात्रिंऽ

शतम् ॥ ३८ ॥ ॥ हरिः ॐ ॥ ॥ सर्वान्वा एषोऽग्नौ कामान्प्रवेशयति ॥ योऽग्नीनन्वाधाय व्रत
मुपैति ॥ स यदनिष्ट्वा प्रयायात् ॥ अकामप्रीता एनं कामा नानुप्रयायुः ॥ अतेजा अवीर्यः स्यात् ॥ स जुहु
यात् ॥ तुभ्यं ता अङ्गिरस्तम ॥ विश्वाः सुक्षितयः पृथक् ॥ अग्ने कामाय येमिर इति ॥ कामानेवास्मिन्द
धाति ॥ १ ॥ कामप्रीता एनं कामा अनुप्रयान्ति ॥ तेजस्वी वीर्यावान्भवति ॥ संततिर्वा एषा यज्ञस्य ॥
योऽग्नीनन्वाधाय व्रतमुपैति ॥ स यदुद्वायति ॥ विछित्तिरेवास्य सा ॥ तं प्राञ्चमुद्धृत्य ॥ मनसोपतिष्ठेत ॥
मनो वै प्रजापतिः ॥ प्राजापत्यो यज्ञः ॥ २ ॥ मनसैव यज्ञꣳ संतनोति ॥ भूरित्याह ॥ भूतो वै प्रजापतिः
भूतिमेवोपैति ॥ विवा एष इन्द्रियेण वीर्येणर्ध्यते ॥ यस्याहिताग्नेरग्निरपक्षायति ॥ यावच्छम्यया प्रविध्ये
त् ॥ यदि तावदपक्षायेत् ॥ तꣳ संभरेत् ॥ इदं त एकं पर ऊ त एकं ॥ ३ ॥ तृतीयेन ज्योतिषा संविश
स्व ॥ संवेशनस्तनुवै चारुरेधि ॥ प्रिये देवानां परमे जनित्र इति ॥ ब्रह्मणैवैनꣳ संभरति ॥ सैव तत्र प्राय
श्चित्तिः ॥ यदि परस्तरामपक्षायेत् ॥ अनुप्रयायावस्येत् ॥ स एव ततः प्रायश्चित्तिः ॥ ओषधीर्वा एतस्य प
शून्पयः प्रविशति ॥ यस्य हविषे वत्सा अपाकृता धयन्ति ॥ ४ ॥ तान्यदुह्यात् ॥ यातयाम्ना हविषा यजेत
॥ यन्न दुह्यात् ॥ यज्ञपरुरन्तरियात् ॥ वायव्यां यवागूं निर्वपेत् ॥ वायुर्वै पयसः प्रदापयिता ॥ स एवास्मै

पयःप्रदापयति ॥ पयोवाओषधयः ॥ पयःपयः ॥ पयसैवास्मैपयोवरुंधे ॥ ५ ॥ अथोत्तरस्मैहविषेव
त्सानपाकुर्यात् ॥ सैवततःप्रायश्चित्तिः ॥ अन्यतरान्वाएषदेवान्भागधेयेनव्यर्द्धयति ॥ येयजमानस्यसा
यंगृहमागच्छंति ॥ यस्यसायंदुग्धꣳहविरार्त्तिमार्च्छति ॥ इंद्रायव्रीहीनिरुप्योपवसेत् ॥ पयोवाओषध
यः ॥ पयएवारभ्यंगृहीत्वोपवसति ॥ यत्प्रातःस्यात् ॥ तच्छृतंकुर्यात् ॥ ६ ॥ अथेतरऐंद्रःपुरो
डाशःस्यात् ॥ इंद्रियेएवास्मैसमीचीदधाति ॥ पयोवाओषधयः ॥ पयःपयः ॥ पयसैवास्मैपयोवरुंधे ॥
अथोत्तरस्मैहविषेवत्सानपाकुर्यात् ॥ सैवततःप्रायश्चित्तिः ॥ उभयान्वाएषदेवान्भागधेयेनव्यर्द्धयति ॥
येयजमानस्यसायंचप्रातश्चगृहमागच्छंति ॥ यस्योभयꣳहविरार्त्तिमार्च्छति ॥ ७ ॥ ऐंद्रंपंचशरावमो
दनंनिर्वपेत् ॥ अग्निंदेवतानांप्रथमंयजेत् ॥ अग्निमुखाएवदेवताःप्रीणाति ॥ अग्निंवाअन्वन्यादेवताः ॥
इंद्रमन्वन्याः ॥ ताएवोभयीःप्रीणाति ॥ पयोवाओषधयः ॥ पयःपयः ॥ पयसैवास्मैपयोवरुंधे ॥ अ
थोत्तरस्मैहविषेवत्सानपाकुर्यात् ॥ ८ ॥ सैवततःप्रायश्चित्तिः ॥ अर्द्धोवाएतस्ययज्ञस्यमीयते ॥ यस्यव्र
त्येहन्पत्न्यनालंभुकाभवति ॥ तामपरुध्ययजेत ॥ सर्वेणैवयज्ञेनयजते ॥ तामिष्ट्वोपह्वयेत ॥ अमूह
मस्मि ॥ सात्वं ॥ द्यौरहं ॥ पृथिवीत्वं ॥ सामाहं ॥ ऋक्त्वं ॥ तावेहिसंभवाव ॥ सहरेतोदधावहै ॥

पुꣳसेपुत्रायवेत्तवै ॥ रायस्पोषायसुप्रजास्त्वायसुवीर्यायेति ॥ अर्धएवैनामुपह्वयते ॥ सैवततःप्रायश्चि
त्तिः ॥ ९ ॥ दधातियज्ञउत्तरएकंधयंतिरुंधेकुर्यादार्च्छत्यपाकुर्यात्पृथिवीत्वमष्टौच ॥ १ ॥ ॥ सर्वा
न्सयदनिष्ठ्वासयदुद्वायंतिविवाअग्निरपक्षायतियदिदंपरस्तरामोषधीरन्यतरान्वाएवोभयानद्धोदश ॥ ॥
यद्धिःषणेनजुहुयात् ॥ अप्रजाअपशुर्यजमानःस्यात् ॥ यदनायतनेनिनयेत् ॥ अनायतनःस्यात् ॥ प्रा
जापत्ययर्चावल्मीकवपायामवनयेत् ॥ प्राजापत्योवैवल्मीकः ॥ यज्ञःप्रजापतिः ॥ प्रजापतावेवयज्ञं
प्रतिष्ठापयति ॥ भूरित्याह ॥ भूतोवैप्रजापतिः ॥ १ ॥ भूतिमेवोपैति ॥ तत्कृत्वा ॥ अन्यांदुग्ध्वा
पुनर्होतव्यं ॥ सैवततःप्रायश्चित्तिः ॥ यत्कीटावपन्नेनजुहुयात् ॥ अप्रजाअपशुर्यजमानःस्यात् ॥ यद
नायतनेनिनयेत् ॥ अनायतनःस्यात् ॥ मध्यमेनपर्णेनद्यावापृथिव्ययर्चांतःपरिधिनिनयेत् ॥ द्यावा
पृथिव्योरेवैनत्प्रतिष्ठापयति ॥ २ ॥ तत्कृत्वा ॥ अन्यांदुग्ध्वापुनर्होतव्यं ॥ सैवततःप्रायश्चित्तिः ॥ य
दववृष्टेनजुहुयात् ॥ अपरूपमस्यात्मन्जायेत ॥ किलासोवास्यादर्शसोवा ॥ यत्प्रत्येयात् ॥ यज्ञंवि
च्छिंद्यात् ॥ सजुहुयात् ॥ मित्रोजनान्कल्पयतिप्रजानन् ॥ ३ ॥ मित्रोदाधारपृथिवीमुतद्यां ॥ मित्रः

क्रुष्टीरनिमिषाभिचष्टे ॥ सत्यायंहव्यंघृतवंजुहोतेति ॥ मित्रेणैवैनंत्कल्पयति ॥ तत्कृत्वा ॥ अन्यांदु
ग्ध्वापुनर्होतव्यं ॥ सैवततःप्रायश्चित्तिः ॥ यत्पूर्वस्यामाहुत्याꣳहुतायामुत्तराहुतिःस्कंदेत् ॥ द्विपा
द्भिःपशुभिर्यजमानोव्यृध्येत ॥ यदुत्तरयाभिजुहुयात् ॥ ४ ॥ चतुष्पाद्भिःपशुभिर्यजमानोव्यृध्येत ॥
यत्रवेत्थवनस्पतेदेवानांगुह्यानामानि ॥तत्रहव्यानिगामयेतिवानस्पत्ययर्चासमिधमाधाय ॥ तूष्णीमेवपुन
र्जुहुयात् ॥ वनस्पतिर्नैवयज्ञस्यार्त्तांचानार्त्तांचाहुतीविदाधार ॥ तत्कृत्वा ॥ अन्यांदुग्ध्वापुनर्होतव्यं ॥
सैवततःप्रायश्चित्तिः ॥ यत्पुराप्रयाजेभ्यःप्राङंगारःस्कंदेत् ॥ अध्वर्यवेचयजमानायचाकꣳस्यात् ॥ ५ ॥
यद्दक्षिणा ॥ ब्रह्मणेचयजमानायचाकꣳस्यात् ॥ सत्प्रत्यक् ॥ होत्रेचपत्नियैचयजमानायचाकꣳस्या
त् ॥ यदुदङ् ॥ अग्नीधेचपशुभ्यश्चयजमानायचाकꣳस्यात् ॥ यदभिजुहुयात् ॥ रुद्रोस्यपशून्घातुकः
स्यात् ॥ यन्नाभिजुहुयात् ॥ अशांतःप्रहियेत ॥ ६ ॥ स्रुवस्यबुध्नेनाभिनिदध्यात् ॥ मातमोमायज्ञस्तं
मन्मायजमानस्तमत् ॥ नमस्तेअस्त्वायते ॥ नमोरुद्रपरायते ॥ नमोयत्रनिषीदसि ॥ अमुंमाहिꣳसी
रमुंमाहिꣳसीरितियेनस्कंदेत् ॥ तंप्रहरेत् ॥ सहस्रशृंगोवृषभोजातवेदाः ॥ स्तोमपृष्ठोघृतवान्त्सुप्र

तंकिः ॥ मानोंहासीन्मेतिथितोनेत्वाजाहांम ॥ गोपोषंनोंवीरपोषंचयच्छेतिं ॥ ब्रह्मणैवैनंप्रहरति ॥ सं
वतत्ःप्रायंश्चित्तिः ॥ ७ ॥ वैप्रजापंतिस्थापयतिप्रजानन्नभिजुंहुयात्स्यांद्भियेतजहांमन्त्रीणिंच ॥ २ ॥
यद्विःषंणेनयत्कीटावंपन्नेनयदवंवृष्टेनयत्पूर्वंस्यांयत्पुराप्रंयाजेभ्य्ःप्राङ्गेरोयद्दांक्षिणा ॥ विवा
एषईंद्रियेणंवीर्येंणध्यंते ॥ यस्याहिंताग्नेरग्निर्मथ्यमांनोनजायंते ॥ यत्रान्यंपश्येत् ॥ ततआहृत्यं
होतव्यं ॥ अग्नावेवास्यांग्निहोत्रꣳहुतंभंवाति ॥ यद्यन्यंनविंदेत् ॥ अजायांꣳहोतव्यं ॥ आग्नेयोवाए
षा ॥ यदजा ॥ अग्नावेवास्यांग्निहोत्रꣳहुतंभंवाति ॥ १ ॥ अजस्यतुनाश्नीयात् ॥ यदजस्यांश्नीयात् ॥
यामेवाग्नावाहुंतिंजुहुयात् ॥ तामंद्यात् ॥ तस्मांदजस्यनाश्यं ॥ यद्यजांनविंदेत् ॥ ब्राह्मणस्यदाक्षिंणेह
स्तेंहोतव्यं ॥ एषवाअग्निर्वैंश्वानरः ॥ यद्ब्राह्मणः ॥ अग्नावेवास्यांग्निहोत्रꣳहुतंभंवति ॥ २ ॥ ब्राह्मणंतुवं
सत्यैनापंरुंध्यात् ॥ यद्ब्राह्मणंवंसत्याअंपरुंध्यात् ॥ यस्मिंन्नेवाग्नावाहुंतिंजुहुयात् ॥ तंभागधेयेनव्यंर्द्धये
त् ॥ तस्मांद्ब्राह्मणोवंसत्यैनापरुध्यंः ॥ यदिंब्राह्मणंनविंदेत् ॥ दर्भस्तंबेहोतव्यं ॥ अग्निवान्दैर्द
र्भस्तंबः ॥ अग्नावेवास्यांग्निहोत्रꣳहुतंभंवाति ॥ दर्भाꣳस्तुनाध्यांसीत ॥ ३ ॥ यद्दर्भानध्यासींत ॥ या

मेवाग्नावाहुतिंजुहुयात् ॥ तामध्यासीत ॥ तस्माद्दर्भानाध्यासीतव्याः ॥ यदिदर्भान्नविंदेत्॥ अप्सुहोत
व्यं ॥ आपोवैसर्वादेवताः॥देवतास्वेवास्याग्निहोत्रꣳहुतंभवति॥आपस्तुनपरिचक्षीत ॥ यदापःपरिच
क्षीत॥४॥यामेवाप्स्वाहुतिंजुहुयात्॥तांपरिचक्षीत॥तस्मादापोनपरिचक्ष्याः॥मेध्याचवाएतस्यामेध्याचत
नुवौसꣳसृज्येते ॥ यस्याहिताग्नेरन्यैरग्निभिरग्नयःसꣳसृज्यंते ॥ अग्नयेविविचयेपुरोडाशमष्टाकपालंनि
र्वपेत् ॥ मेध्याचैवास्यामेध्याचतनुवौव्यावर्तयति ॥ अग्नयेव्रतपतयेपुरोडाशमष्टाकपालंनिर्वपेत् ॥ अ
ग्निमेवव्रतपतिꣳस्वेनभागधेयेनोपधावति ॥ सएवैनंव्रतमालंभयति ॥ ५ ॥ गर्भꣳस्रवंतमगदमकः ॥
अग्निरिंद्रस्त्वष्टाबृहस्पतिः ॥ पृथिव्यामवचुश्चोतैतत् ॥ नाभिप्राप्नोतिनिर्ऋतिंपराचैः ॥ रेतोवाएतद्वाजि
नमाहिताग्नेः ॥ यदग्निहोत्रं ॥ तद्यत्स्रवेत् ॥ रेतोस्यवाजिनꣳस्रवेत् ॥ गर्भꣳस्रवंतमगदमकरित्याह
रेतएवास्मिन्वाजिनंदधाति ॥ ६ ॥ अग्निरित्याह ॥ अग्निर्वैरेतोधाः ॥ रेतएवतद्दधाति ॥ इंद्रइत्याह
॥ इंद्रियमेवास्मिंन्दधाति ॥ त्वष्टेत्याह ॥ त्वष्टावैपशूनांमिथुनानांꣳरूपकृत् ॥ रूपमेवपशुषुदधाति ॥
बृहस्पतिरित्याह ॥ ब्रह्मवैदेवानांबृहस्पतिः ॥ ब्रह्मणैवास्मैप्रजाःप्रजनयति ॥ पृथिव्यामवचुश्चोतैत
दित्याह ॥ अस्यामेवैनत्प्रतिष्ठापयति ॥ नाभिप्राप्नोतिनिर्ऋतिंपराचैरित्याह ॥ रक्षसामपहत्यै ॥

॥ ७ ॥ अजाग्नावेवास्याग्निहोत्रꣳ हुतंभवतिभवत्यासीतपरिचक्षीतलंभयतिदधातिदेवानांबृहस्पतिःपंचं
च ॥ ६ ॥ ॥ विवैयद्यन्यमजायांब्राह्मणस्यंदर्भस्तंबेप्सुहोतव्यं ॥ याःपुरस्तात्प्रस्रवंति
॥ उपरिष्टात्सर्वतश्चयाः ॥ ताभीरश्मिपवित्राभिः ॥ श्रद्धांयज्ञमारभे ॥ देवागातुविदः ॥ गातुंय
ज्ञायविंदत ॥ मनसस्पतिनादेवेन ॥ वाताद्यज्ञःप्रयुज्यतां ॥ तृतीयस्यैदिवः॥गायत्रियासोमआभृतः ॥
॥ १ ॥ सोमपीथायसन्नयितुं ॥ वर्कलमंतरमाददे ॥ आपोदेवीःशुद्धास्थ ॥ इमापात्राणिशुंधत ॥
उपातंक्यायदेवानां ॥ पर्णवल्कमुतशुंधत ॥ पयोगृहेषुपयोअघ्नियासु ॥ पयोवत्सेषुपयइंद्रायहविषे
ध्रियस्व ॥ गायत्रिपर्णवल्केन ॥ पयःसोमंकरोत्विमं ॥ २ ॥ अग्निंगृह्णामिसुरथंयोमयोभूः ॥ यउद्यं
तमारोहतिसूर्यमह्ने ॥ आदित्यंज्योतिषांज्योतिरुत्तमं ॥ श्वोयज्ञायरमतांदेवताभ्यः ॥ वसून्रुद्रानादित्या
न् ॥ इंद्रेणसहदेवताः ॥ ताःपूर्वःपरिगृह्णामि ॥ स्वआयतनेमनीषया ॥ इमामूर्जंपंचदशींयेप्रविष्टाः
॥ तान्देवान्परिगृह्णामिपूर्वः ॥ ३ ॥ अग्निर्हव्यवाडिहतानावहतु ॥ पौर्णमासꣳहविरिदमेषांमयि ॥
आमावास्यꣳहविरिदमेषांमयि ॥ अंतराग्नीपशवः ॥ देवसꣳसदमागमन् ॥ तान्पूर्वःपरिगृह्णामि ॥
स्वआयतनेमनीषया ॥ इहप्रजाविश्वरूपारमंतां ॥ अग्निंगृहपतिमभिसंवसानाः ॥ ताःपूर्वःपरिगृह्णा

॥४४॥

॥४४॥

मि ॥ ४ ॥ स्वआयतनेमनीषयां ॥ इहपशवोविश्वरूपारमंतां ॥ अग्निंगृहपतिमभिसंवसानाः ॥
तान्पूर्वःपरिगृह्णामि ॥ स्वआयतनेमनीषयां ॥ अयंपितॄणामग्निः ॥ अवाड्ढव्यापितृभ्यआ ॥ तंपूर्वः
परिगृह्णामि ॥ अविषंनःपितुंकरत् ॥ अजस्रंत्वाꣳसभापालाः ॥ ५ ॥ विजयभागꣳसमिंधतां ॥
अग्नेदीदायमेसभ्य ॥ विजित्यैशरदःशतं ॥ अन्नमामवसथीयं ॥ अभिहरागिशरदःशतं ॥ आवसथे
श्रियंमंत्र ॥अहिर्बुध्नियोनियच्छतु॥ इदमहमग्निज्येष्ठेभ्यः ॥ वसुभ्योयज्ञंप्रब्रवीमि ॥ इदमहमिंद्रज्येष्ठेभ्यः
॥ ६ ॥ रुद्रेभ्योयज्ञंप्रब्रवीमि ॥ इदमहंवरुणज्येष्ठेभ्यः ॥ आदित्येभ्योयज्ञंप्रब्रवीमि ॥ पयस्वतीरोषध
यः ॥ पयस्वद्वीरुधांपयः ॥ अपांपयसोयत्पयः ॥ तेनमामिंद्रसꣳसृज ॥ अग्नेव्रतपतेव्रतंचरिष्यामि ॥
तच्छकेयंतन्मेराध्यतां ॥ वायोव्रतपतआदित्यव्रतपते ॥ ७ ॥ व्रतानांव्रतपतेव्रतंचरिष्यामि ॥ तच्छके
यंतन्मेराध्यतां ॥ इमांप्राचीमुदीचीं ॥ इषमूर्जमभिसꣳस्कृतां ॥ बहुपर्णामशुष्काग्रां ॥ हरामिपशुपा
महं॥यत्कृष्णोरूपंकृत्वा ॥प्राविशस्त्वंवनस्पतीन् ॥ततस्त्वामेकविꣳशतिधा॥संभरामिसुसंभृतां॥८॥त्रीन्पं
रिधीꣳस्तिस्रःसमिधः॥यज्ञायुरनुसंचरान्॥उपवेषंमेक्षणंधृष्टिं॥संभरामिसुसंभृतां ॥ याजाताओषधयः ॥दे
वेभ्यस्त्रियुगंपुरा ॥ तासांपर्वराध्यासं ॥ परिस्तरमाहरन् ॥ अपांमेध्यंयज्ञियं॥सदेवꣳशिवमस्तुमे॥९॥आ

च्छेत्तावोमारिषं ॥ जीवानिशरदःशतं ॥ अपरिमितानांपरिमिताः ॥ संनह्येसुकृतायकं ॥ एनोमाने
गांकतमच्चनाहं ॥ पुनरुत्थायबहुलाभवंतु ॥ सकृदाच्छिन्नंबर्हिरूर्णामृदु ॥ स्योनंपितृभ्यस्त्वाभराम्यहं
॥ अस्मिन्त्सीदंतुमेपितरःसोम्याः ॥ पितामहाःप्रपितामहाश्चानुगैःसह ॥ १० ॥ त्रिवृत्पलाशेदर्भः॥
इयान्प्रादेशसंमितः ॥ यज्ञेपवित्रंपोतृतमं ॥ पयोहव्यंकरोतुमे ॥ इमौप्राणापानौ ॥ यज्ञस्यांगानिसर्व
शः ॥ आप्याययंतौसंचरतां ॥ पवित्रेहव्यशोधने ॥ पवित्रेस्थोवैष्णवी ॥ वायुर्वोमनसापुनातु ॥ ११ ॥
अयंप्राणश्चापानश्च ॥ यजमानमपिगच्छतां ॥ यज्ञेह्यभूतांपोतारौ ॥ पवित्रेहव्यशोधने ॥ त्वयावेदिं
विविदुःपृथिवीं ॥ त्वयायज्ञोजायतेविश्वदानिः ॥ अच्छिद्रंयज्ञमन्वेषिविद्वान् ॥ त्वयाहोतासंतनोत्य
र्धमासान् ॥ त्रयस्त्रिंशोसितंतूनां ॥ पवित्रेणसहागहि ॥ १२ ॥ शिवेयरज्जुरभिधानी ॥ अघ्नि
यामुपसेवतां ॥ अप्रस्रंसाययज्ञस्य ॥ उखेउपदधाम्यहं ॥ पशुभिःसन्नीतंबिभृतां ॥ इंद्राय
शृतंदधि ॥ उपवेषोसियज्ञाय ॥ त्वांपरिवेषमधारयन् ॥ इंद्रायहविःकृण्वंतः ॥ शिवःशग्मोभ
वासिनः ॥ १३ ॥अमृन्मयंदेवपात्रं ॥ यज्ञस्यायुषिप्रयुज्यतां ॥तिरःपवित्रमतिनीताः ॥ आपोधारयमा
तिगुः॥देवेनसवित्रोत्पूताः ॥ वसोःसूर्यस्यरश्मिभिः ॥ गांदोहपवित्रेरज्जुं ॥ सर्वापात्राणिशुंधत ॥ एता
आचरंतिमधुमद्दुहानाः ॥ प्रजावतीर्यशसोविश्वरूपाः ॥ १४ ॥ बह्वीर्भवंतीरुपजायमानाः ॥ इहव

इंद्रोरमयतुगावः ॥ पूषास्थ ॥ अयक्ष्मावःप्रजयासꣳसृजामि ॥ रायस्पोषेणवहुलाभवंतीः ॥
ऊर्जंपयःपिन्वमानाघृतंच॥जीवोजीवंतीरुपवःसदेयं॥द्यौश्चेमंयज्ञंपृथिवीचसंदुहातां॥धातासोमेनसहवा
तेनवायुः ॥ यजमानायद्रविणंदधातु ॥ १५॥ उत्संदुहंतिकलशंचतुर्बिलं ॥ इडांदेवींमधुमतीꣳसुव
र्विदं ॥ तदिंद्राग्नीजिन्वतꣳसूनृतावत् ॥ तद्यजमानममृतत्वेदधातु ॥ कामधुक्षःप्रणोब्रूहि ॥ इंद्रायह
विरिंद्रियं ॥ अमूंयस्यांदेवानां ॥ मनुष्याणांपयोहितं ॥ बहुदुग्धींद्रायदेवेभ्यः ॥ हव्यमाप्यायतांपुनः॥
॥ १६ ॥ वत्सेभ्योमनुष्येभ्यः ॥ पुनर्दोहायकल्पतां ॥ यज्ञस्यसंततिरसि ॥ यज्ञस्यत्वासंततिमनुसं
तनोमि ॥ अदस्तमसिविष्णवेत्वा ॥ यज्ञायापिदधाम्यहं ॥ अद्भिररिक्तेनपात्रेण ॥ याःपूताःपरिशेरते
॥ अयंपयःसोमंकृत्वा ॥ स्वांयोनिमपिगच्छतु ॥ १७ ॥ पर्णवल्कःपवित्रं ॥ सौम्यःसोमाद्विनिर्मितः
॥ इमौपर्णंचदर्भंच ॥ देवानांꣳहव्यशोधनौ ॥ प्रातर्वेषाययगोपाय ॥ विष्णोहव्यꣳहिरक्षसि ॥ उ
भावग्नीउपस्तृणते ॥ देवतानाउपवसंतुमे ॥ अहंग्राम्यानुपवसामि ॥ मह्यंगोपतयेपशून् ॥ १८ ॥ आ
भृतइमंगृह्णामिपूर्वस्ताःपूर्वःपरिगृह्णामिसभापालाइंद्रज्येष्ठेभ्यआदित्यव्रतपतेमुसंभृतांमेसहपुनातुयाहि
नोविश्वरूपादधातुपुनर्गच्छतुपशून् ॥ ४ ॥ ॥ देवादेवेषुपराक्रमध्वं ॥ प्रथमाद्वितीयेषु ॥ द्विती

यास्तृतीयेषु ॥ त्रिरेकादशाइहमावंत ॥ इद ४ शंकेयंयदिदंकरोमि ॥ आत्माकंरोत्वात्मने ॥ इदंकारे
ष्येभेषजं ॥ इदंमेविश्वभेषजा ॥ अश्विनाप्रावंतंयुवं ॥ इदमह ४ सेनायाअभीत्वर्यै ॥ १॥ मुखमपोहा
मि ॥ सूर्यंज्योतिर्विभाहि ॥ महतइंद्रियायं ॥ आप्यायतांघृतयोनिः ॥ अग्निर्हव्यानुमन्यतां ॥ ख
मंक्ष्वत्वचंमंक्ष्व ॥ सुरूपंत्वावसुविदं ॥ पशूनांतेजसा ॥ अग्नयेजुष्टमभिघारयामि ॥ स्योनंतेसदनंक
रोमि ॥ २ घृतस्यधारयासुशेवंकल्पयामि ॥ तस्मिन्त्सीदामृतेप्रतितिष्ठ ॥ व्रीहीणांमेधसुमनस्यमानः
॥ आर्द्रःप्रथस्नुर्भुवनस्यगोपाः ॥ शृतउत्स्नातिजनितामतीनां ॥ यस्तआत्मापशुषुप्रविष्टः ॥ देवानां
विष्ठामनुयोवितस्थे ॥ आत्मन्वान्त्सोमघृतवान्हिभूत्वा ॥ देवान्गच्छसुवर्विंदयजमानायमह्यं ॥ इराभू
तिःपृथिव्यैरसोमोत्क्रमीत् ॥ ३ ॥ देवाःपितरःपितरोदेवाः ॥ योहमस्मिससन्यजे ॥ यस्यास्मिन
तमंतरेमि ॥ स्वंमइष्टंस्वंदत्तं ॥ स्वंपूर्त ४ स्व ४ श्रांतं ॥ स्व ४ हुतं ॥ तस्यमेग्निरुपद्रष्टा ॥ वायुरुप
श्रोता ॥ आदित्योनुख्याता ॥ द्यौःपिता ॥ ४ ॥ पृथिवीमाता ॥ प्रजापतिर्बंधुः ॥ यएवास्मि
ससन्यजे ॥ माभेर्मासंविक्थामात्वाहि ४ सिषं ॥ मातेतेजोपक्रमीत् ॥ भरतमुद्धरेमनुषिंच ॥ अवदा

नानितेप्रत्यवदास्यामि ॥ नमस्तेअस्तुमामाहिꣳसीः ॥ यदवदानानितेवद्यन् ॥ विलोमाकर्षमात्मनः
॥ ५ ॥ आज्येनप्रत्यनज्म्येनत् ॥ ततआप्यायतांपुनः ॥ आज्यायोयवमात्रात् ॥ आव्याधात्कृत्यतामि
दं ॥ मारूरुपामयज्ञस्य ॥ शुद्धꣳस्विष्टमिदꣳहविः ॥ मनुनादृष्टांघृतपदीं ॥ मित्रावरुणसमीरितां ॥ दाक्षिणा
र्द्धादसंभिंदन् ॥ अवद्याम्येकतोमुखां ॥ ६ ॥ इडेभागंजुषस्वनः ॥ जिन्वगाजिन्वार्वतः ॥ तस्यांस्तेभाक्षि
वाणःस्याम ॥ सर्वात्मानःसर्वगणाः ॥ ब्रध्नापिन्वस्व ॥ ददतोमेमाक्षायि ॥ कुर्वतोमेमोपसदत् ॥ दिशां
कॢप्तिरसि ॥ दिशोमेकल्पंतां ॥ कल्पंतांमेदिशः ॥ ७ ॥ दैवीश्चमानुषीश्च ॥ अहोरात्रेमेकल्पेतां ॥ अर्द्धमासा
मेकल्पंतां ॥ मासामेकल्पंतां ॥ ऋतवोमेकल्पंतां ॥ संवत्सरोमेकल्पतां ॥ कॢप्तिरसिकल्पंतांमे ॥ आशानां
त्वाशापालेभ्यः ॥ चतुर्भ्योअमृतेभ्यः ॥ इदंभूतस्याध्यक्षेभ्यः ॥ ८ ॥ विधेमहविषावयं ॥ भजंतां
भागीभागं ॥ माभागोभक्त ॥ निरभागंभजामः ॥ अपस्पिन्व ॥ ओषधीर्जिन्व ॥ द्विपात्पाहि ॥
चतुष्पादव ॥ दिवोवृष्टिमेरय ॥ ब्राह्मणानामिदꣳहविः ॥ ९ ॥ सोम्यानाꣳसोमपीथिनां ॥ निर्भक्तो
ब्राह्मणः ॥ नेहाब्राह्मणस्यास्ति ॥ समक्तांबर्हिर्हविषाघृतेन ॥ समादित्यैर्वसुभिःसंमरुद्भिः ॥ समिंद्रेण
विश्वेभिर्देवेभिरक्तां ॥ दिव्यंनभोगच्छतुयत्स्वाहा ॥ इंद्राणीवाविधवाभूयासं ॥ अदितिरिवसुपुत्रा ॥

अस्थूरित्वांगार्हपत्य ॥ १० ॥ उपनिषंदेसुप्रजास्त्वायं ॥ संपत्नीपत्यांसुकृतेनंगच्छतां ॥ यज्ञस्ययुं
कौधुर्यांवभूतां ॥ संजानानौविजंहतामरांतीः ॥ दिविज्योतिरंजरमारंभेतां ॥ दशंतेतनुवोयज्ञयज्ञियाः ॥
ताःप्रीणातुयजंमानोघृतेनं ॥ नारिष्ठयोःप्रशिषमीडंमानः ॥ देवानांदैव्येपियजंमानोमृतोंभूत् ॥ वंवांदे
वाअंकल्पयन् ॥ ऊर्जोभागꣳशंतक्रतू ॥ एतद्वांतेनप्रणिानि ॥ तेनंतृप्यतमꣳहहौ ॥ अहंदेवानांꣳसुकृ
तामस्मिलोंके ॥ ममेदामिष्टंनमिथुंर्भवाति ॥ अहंनारिष्टावनुंयजाामिविद्वान् ॥ ययांभ्यामिंद्रोअदंधाज्ञा
गधेयं ॥ अदांरसृड्वतदेवसोम ॥ अस्मिन्यज्ञेमंरुतोमृडतानः ॥ मानोविददभिभामोअशंस्तिः ॥ १२ ॥
मानोविददृजनाद्वेष्याया ॥ ऋषभंवाजिनंवयं ॥ पूर्णमांसंयजामहे ॥ सनोदोहताꣳसुवीर्यं ॥ रायस्पो
षꣳसहस्रिणं ॥ प्राणायंसुराधंसे ॥ पूर्णमांसायस्वाहां ॥ अमावास्यांसुभगांसुशेवां ॥ धेनुरिवभूयं
आप्यायंमाना ॥ सानोदोहताꣳसुवीर्यं ॥ रायस्पोपांꣳसहस्रिणं ॥ अपानायंसुराधंसे ॥ अमावा
स्यांयैस्वाहां ॥ अभिस्त्रिंणीहिपरिधेहिवेदिं ॥ जामिमाहिꣳसीरमुयाशंयाना ॥ होतृषदंनाहरितांःसु
वर्णाः ॥ निष्काइमेयजंमानस्यब्रध्ने ॥ १३ ॥ अभोत्वंयैकरोमिक्रमोत्पितात्मनंएकतोमुखांमेदि
शोध्यंक्षेभ्योहविर्गार्हपत्याकल्पयन्नशंस्तिःसानोदोहताꣳसुवीर्यꣳसप्तंच ॥ ५ ॥ ॥ परिस्तृणोतपरिध

त्ताग्निं ॥ परिहितोग्निर्यजमानंबिभर्तु ॥ अपाꣳरसओषधीनाꣳसुवर्णः ॥ निष्काइमेयजमानस्यसंतु
कामदुघाः ॥ अमुत्रामुष्मिंल्लोके ॥ भूपतेभुवनपते ॥ महतोभूतस्यपते ॥ ब्रह्माणंत्वावृणीमहे ॥ अ
हंभूपतिरहंभुवनपतिः ॥ अहंमहतोभूतस्यपतिः ॥ १ ॥ देवेनसवित्राप्रसूतआर्त्विज्यंकरिष्यामि ॥
देवसवितरेतंत्वावृणते ॥ बृहस्पतिंदैव्यंब्रह्माणं ॥ तदहंमनसेप्रब्रवीमि ॥ मनोगायत्रियै ॥ गायत्रीत्रि
ष्टुभे ॥ त्रिष्टुब्जगत्यै ॥ जगत्यनुष्टुभे ॥ अनुष्टुप्पंक्त्यै ॥ पङ्क्तिःप्रजापतये ॥ २ ॥ प्रजापतिर्विश्वे
भ्योदेवेभ्यः ॥ विश्वेदेवा बृहस्पतये ॥ बृहस्पतिर्ब्रह्मणे ॥ ब्रह्मभूर्भुवःसुवः ॥ बृहस्पतिर्देवानांब्रह्मा ॥
अहंमनुष्याणां ॥ बृहस्पतेयज्ञंगोपाय ॥ इदंतस्मैहर्म्यंकरोमि ॥ योवोदेवाश्चरतिब्रह्मचर्यं ॥ मेधावी
दिक्षुमनसातपस्वी ॥ ३ ॥ अंतर्दूतश्चरतिमानुषीषु ॥ चतुःशिखंडायुवतिःसुपेशाः ॥ घृतप्रतीकाभुव
नस्यमध्ये ॥ मर्मृज्यमानामहतेसौभगाय ॥ मह्यंधुक्ष्वयजमानायकामान् ॥ भूमिर्भूत्वामहिमानंपुपोष ॥
ततोदेवीवर्धयतेपयाꣳसि ॥ यज्ञियायज्ञंविचयंतिशंच ॥ ओषधीरापइहशक्करीश्च ॥ योमाहृदामनसा
यश्चवाचा ॥ ४ ॥ योब्रह्मणाकर्मणाद्वेष्टिदेवाः ॥ यःश्रुतेनहृदयेनेष्टताच ॥ तस्येंद्रवज्रेणशिरश्छिनद्मि

॥ ऊर्णाम्रदुप्रथमानःस्योनं ॥ देवेभ्योजुष्टःसदनायबर्हिः॥सुवर्गेलोकेयजमानःहिधेहि ॥ मांनाकस्य
पृष्ठेपरमेव्योमन् ॥ चतुःशिखंडायुवतिःसुपेशाः ॥ घृतप्रतीकावयुनानिवस्ते ॥ सास्तीर्यमाणामहतेसौ
भगाय ॥ सामेधुक्ष्वयजमानायकामान् ॥ शिवाचमेशग्माचैधि ॥ स्योनाचमेसुषदाचैधि ॥ ऊर्जस्व
तीचमेपयस्वतीचैधि ॥ इषमूर्जंमेपिन्वस्व ॥ ब्रह्मतेजोमेपिन्वस्व ॥ क्षत्रमोजोमेपिन्वस्व ॥ विशंपुष्टिं
मेपिन्वस्व ॥ आयुरन्नाद्यंमेपिन्वस्व ॥ प्रजांपशून्मेपिन्वस्व ॥ ६ ॥ अस्मिन्यज्ञउपभूयइन्नुमे ॥ अ
विक्षोभायपरिधीन्दधामि ॥ धर्ताधरुणोधरीयान् ॥ अग्निर्द्वेषाःसिनिरितोनुदातै ॥ विच्छिनद्विधृ
तीभ्याःसपत्नान् ॥ जातान्भ्रातृव्यान्येचजनिष्यमाणाः ॥ विशोयन्त्राभ्यांविधमाम्येनान् ॥ अहः
स्वानामुत्तमोसानिदेवाः ॥ विशोयन्त्रेनुदमानेअरातिं ॥ विश्वंपाप्मानममतिंदुर्मरायुं ॥ ७ ॥ सीदंतोदे
वीसुकृतस्यलोके ॥ धृतीस्थोविधृतीस्वधृती ॥ प्राणान्मयिधारयतं ॥ प्रजांमयिधारयतं ॥ पशून्मयिधा
रयतं ॥ अयंप्रस्तरउभयस्यधर्ता ॥ धर्ताप्रयाजानामुतानूयाजानां ॥ सदाधारसमिधोविश्वरूपाः ॥ तस्मि
न्स्रुचोअध्यासादयामि ॥आरोहपथोजुहुदेवयानान्॥ ८ ॥यत्रर्षयःप्रथमजायेपुराणाः ॥ हिरण्यपक्षाजि
रासंभृतांगा ॥ वहासिमासुकृतांयत्रलोकाः ॥ अवाहबाधउपभृतासपत्नान् ॥ जातान्भ्रातृव्यान्येचजनिष्य

माणाः ॥ दोहैयज्ञꣳसुदुघामिवधेनुं ॥ अहमुत्तरोभूयासं ॥ अधरेमत्सपत्नाः ॥योमावाचामनसादुर्मरायुः ॥
हृदारातीयादभिदासदग्ने ॥९॥ इदमस्यचित्तमधरंध्रुवायाः ॥अहमुत्तरोभूयासं ॥ अधरेमत्सपत्नाः ॥ ऋ
षभोसिशाक्करः ॥ घृताचीनाꣳसूनुः ॥ प्रियेणनाम्नाप्रियेसदसिसीद ॥ स्योनोमेसीदसुषदःपृथिव्यां
॥ प्रथयिप्रजयापशुभिःसुवर्गेलोके ॥ दिविसीदपृथिव्यामंतरिक्षे ॥ अहमुत्तरोभूयासं ॥ १० ॥ अध
रेमत्सपत्नाः ॥ इयꣳस्थालीघृतस्यपूर्णा ॥ अच्छिन्नपयाःशतधारउत्सः ॥ मारुतेनशर्मणादैव्येन ॥
यज्ञोसिसर्वतःश्रितः ॥ सर्वतोमांभूतंभविष्यच्छ्रयतां ॥ शतंमेसंत्वाशिषः ॥ सहस्रंमेनेसंतुसूनृताः ॥
इरावती.पशुमतीः ॥ प्रजापतिरसिसर्वतःश्रितः ॥ ११ ॥ सर्वतोमांभूतंभविष्यच्छ्रयतां ॥ शतं
मेसंत्वाशिषः ॥ सहस्रंमेसंतुसूनृताः ॥ इरावतीःपशुमतीः ॥ इदमिंद्रियममृतंवीर्यं ॥ अनेनेंद्रायप
शवोचिकित्सन् ॥ तेनदेवाअवतोपमां ॥ इहेषमूर्जयशःसहओजःसनेयं ॥ शृतंमयिश्रयतां ॥ य
त्पृथिवीमचरत्तत्प्रविष्टं ॥ १२ ॥ येनासिंचद्बलमिंद्रंप्रजापतिः ॥ इदंतच्छुक्रंमधुवाजिनीवत् ॥ ये
नोपरिष्टादधिनोन्महेंद्रं ॥ दधिमांधिनोतु ॥ अयंवेदःपृथिवीमन्वविंदत् ॥ गृहासतींगहनेगह्वरेषु ॥

सविंदतुयजमानायलोकं ॥ अच्छिद्रंयज्ञंभूरिकर्माकरोतु ॥ अयंयज्ञःसमसदद्धविष्मान् ॥ ऋचासा
म्नायजुषादेवताभिः ॥ १३ ॥ तेनंलोकान्त्सूर्यवतोजयेम ॥ इंद्रस्यसख्यममृतत्वमश्यां ॥ योनःक
नीयइहकामयातै ॥ अस्मिन्यज्ञेयजमानायमह्यं ॥ अपतमिंद्राग्नीभुवनानुदेतां ॥ अहंप्रजावीर
वतींविदेय ॥ अग्नेवाजजित् ॥ वाजंत्वासरिष्यंतं ॥ वाजंजेष्यंतं ॥ वाजिनंवाजजितं ॥ १४ ॥
वाजजित्यायैसंमार्ज्मि ॥ अग्निमन्नादमन्नाद्याय ॥ उपहूताद्यौःपिता ॥ उपमांद्यौःपिताह्वयतां ॥ अग्नि
राग्नीध्रात् ॥ आयुषेवर्चसे ॥ जीवात्वैपुण्याय ॥ उपहूतापृथिवीमाता ॥ उपमांमातापृथिवीह्वय
तां ॥ अग्निराग्नीध्रात् ॥ १५ ॥ आयुषेवर्चसे ॥ जीवात्वैपुण्याय ॥ मनोज्योतिर्जुषतामाज्यं ॥ वि
च्छिन्नंयज्ञꣳसमिमंदधातु ॥ बृहस्पतिस्तनुतामिमंनः ॥ विश्वेदेवाइहमादयंतां ॥ यंतेअग्नआवृश्चा
मि ॥ अहंवाक्षिपितश्चरन् ॥ प्रजांचतस्यमूलंच ॥ नीचैर्देवानिवृश्चत ॥ १६ ॥ अग्नेयोनोभि
दासति ॥ समानोयश्चनिष्ट्यः ॥ इध्मस्येवप्रक्षायतः ॥ मातस्योच्छेषिकिंचन ॥ योमांद्वेष्टिजातवेदः
॥ यंचाहंद्वेष्मियश्चमां ॥ सर्वाꣳस्तानग्नेसंदह ॥ याꣳश्चाहंद्वेष्मियेचमां ॥ अग्नेवाजजित् ॥ वाजंत्वा
ससृवाꣳसं ॥ १७ ॥ वाजंजिगिवाꣳसं ॥ वाजिनंवाजजितं ॥ वाजजित्यायैसंमार्ज्मि ॥ अग्निमं
न्नादमन्नाद्याय ॥ वेदिर्बर्हिःशृतꣳहविः ॥ इध्मःपरिधयःस्रुचः ॥ आज्यंयज्ञऋचोयजुः ॥ याज्याश्चव

षट्कारा: ॥ संमेसन्नंतयोनमंता ॥ इध्मसन्नहंनेहुते ॥ १८ ॥ दिवःखीलोवंततः ॥ पृथिव्याअध्युत्थि
तः ॥ तेनांसहस्त्रकांडेन ॥ द्विषंतंश्शोचयामासि ॥ द्विषन्मेंबहुशोंचनु ॥ ओषंधेमोअहंश्शुचं ॥ य
ज्ञनमंस्तेयज्ञ ॥ नमोनमंश्चतेयज्ञ ॥ शिवेनंमेसंतिंष्ठस्व ॥ स्योनेनंमेसंतिंष्ठस्व ॥ १९ ॥ सुभूतेनंमेसं
तिंष्ठस्व ॥ ब्रह्मवर्चसेनंमेसंतिंष्ठस्व ॥ यज्ञस्पर्धिमनुसंतिंष्ठस्व ॥ उपंतेयज्ञनमंः ॥ उपंतेनमंः ॥ उपं
तेनमंः ॥ त्रिष्फलीक्रियमांणानां ॥ योन्यंगोअंवशिष्यंते ॥ रक्षंसांभागधेयं ॥ आपस्तत्प्रवांहितादितः
॥ २० ॥ उलूखंलेमुसंलेयच्चशूर्पे ॥ आशिश्लेषंदृषदियत्कपालें ॥ अवप्रुषोंविप्रुषःसंजंयामि ॥ वि
श्वेदेवाहविरिदंजुंषंतां ॥ यज्ञेयाविप्रुषःसंतिंबह्वीः ॥ अग्नौताःसर्वाःस्विंष्टाःसुहुंताजुहोमि ॥ उद्यन्नद्य
मित्रमहः ॥ सपत्नांन्मेअनीनशः ॥ दिवैनान्विद्युतांजहि ॥ निम्रोचन्नधंरान्कृधि ॥ २१ ॥ उद्यन्न
द्यविनोंभज ॥ पितापुत्रेभ्योयथां ॥ दीर्घायुत्वस्यंहेशिषे ॥ तस्यंनोदेहिसूर्य ॥ उद्यन्नद्यमित्रमहः ॥
आरोहन्नुत्तंरांदिवं ॥ हृद्रोगंममंसूर्य ॥ हरिमाणंचनाशय ॥ शुकेंषुमेहरिमाणं ॥ रोपणाकांसुदध्मसि
॥ २२ ॥ अथोंहारिद्रवेषुंमे ॥ हरिमाणंनिदंध्मसि ॥ उदंगादयमांदित्यः ॥ विश्वेंनसहंसासह ॥
द्विषंतंममंरंधयंन् ॥ मोअहंद्विंषतोरंधं ॥ योनःशपादशंपतः ॥ यश्चंनःशपंतःशपांत् ॥ उषाश्चतस्मैंनि
म्रुकं ॥ सर्वंपापश्समूंहतां ॥ २३ ॥ योनंःसपत्नोयोरणंः ॥ मर्तोंभिदासंतिदेवाः ॥ इध्मस्येवप्रक्षा

यंतः ॥ मातस्योच्छेषिकिंचन ॥ अवसृष्टःपरापत ॥ शरोब्रह्मसंशितः ॥ गच्छामित्रान्प्रविश ॥ मषांकंचनोच्छिषः ॥ २४ ॥ पतिःप्रजापतयेतपस्वाचासौभगायपशून्मेपिन्वस्वदुर्मरायुंदेवयानानंतरिक्षेहमुत्तरोभूयासंप्रजापतिरसिसर्वतःश्रितःप्रविष्टदेवताभिर्वाजजितंपृथिविह्वयतामाग्निराग्नीध्राद्वृश्वतससृवाऽसंहुतेस्यानेनमेसंतिष्ठस्वेतःक्वाधिदध्मस्यूहतामष्टौच ॥ ६ ॥ ॥ सक्षेदपश्य ॥ विधर्तारिदंपश्य ॥ नाकेदंपश्य ॥ रमातिःपनिष्ठा ॥ ऋतंवर्षिष्ठं ॥ अमृतायान्याहुः ॥ सूर्यो वरिष्ठोअक्षभिर्विभाति ॥ अनुद्यावापृथिवीदेवपुत्रे ॥ दीक्षासितपसोयोनिः ॥ तपोसिब्रह्मणोयोनिः ॥ १ ॥ ब्रह्मासिक्षत्रस्ययोनिः ॥ क्षत्रमस्यृतस्ययोनिः ॥ ऋतमसिभूरारभे ॥ श्रद्धामनसा ॥ दीक्षांतपसा ॥ विश्वस्यभुवनस्याधिपत्नी ॥ सर्वेकामायजमानस्यसंतु॥ वातंप्राणंमनसान्वारभामहे ॥ प्रजापतियोभुवनस्यगोपाः ॥ सनोमृत्योस्त्रायतांपात्वंहसः ॥ २ ॥ ज्योग्जीवाजरामशीमहि ॥ इंद्रशाक्करगायत्रींप्रपद्ये ॥ तांतेयुनज्मि ॥ इंद्रशाक्करत्रिष्टुभंप्रपद्ये ॥ तांतेयुनज्मि ॥ इंद्रशाक्करजगतींप्रपद्ये ॥ तांतेयुनज्मि ॥ इंद्रशाक्करानुष्टुभंप्रपद्ये ॥ तांतेयुनज्मि ॥ इंद्रशाक्करपङ्क्तिंप्रपद्ये ॥ ३ ॥ तांतेयुनज्मि ॥ आहंदीक्षामरुहमृतस्यपत्नीं ॥ गायत्रेणच्छंदसाब्रह्मणाच॥ ऋतंसत्येधायि ॥ सत्यमृतेधायि

॥ ऋतंचमेसत्यंचाभूतां ॥ ज्योतिरभूवꣳसुवरगमं ॥ सुवर्गलोकंनाकस्यपृष्ठं ॥ ब्रध्नस्यविष्टपमगमं ॥
पृथिवीदीक्षा ॥ ४ ॥ तयाग्निर्दीक्षयादीक्षितः ॥ ययाग्निर्दीक्षयादीक्षितः ॥ तयांत्वादीक्षयादीक्षयामि
॥ अंतरिक्षंदीक्षा ॥ तयावायुर्दीक्षयादीक्षितः ॥ ययावायुर्दीक्षयादीक्षितः ॥ तयांत्वादीक्षयादीक्षयामि
॥ द्यौर्दीक्षा ॥ तयादित्योदीक्षयादीक्षितः ॥ ययादित्योदीक्षयादीक्षितः ॥ ५ ॥ तयात्वादीक्षयादीक्षि
यामि ॥ दिशोदीक्षा ॥ तयाचंद्रमादीक्षयादीक्षितः ॥ ययाचंद्रमादीक्षयादीक्षितः ॥ तयात्वादीक्षया
दीक्षयामि ॥ आपोदीक्षा ॥ तयावरुणोराजादीक्षयादीक्षितः ॥ ययावरुणोराजादीक्षयादीक्षितः ॥ त
यात्वादीक्षयादीक्षयामि ॥ ओषधयोदीक्षा ॥ ६ ॥ तयासोमोराजादीक्षयादीक्षितः ॥ ययासोमोरा
जादीक्षयादीक्षितः ॥ तयात्वादीक्षयादीक्षयामि ॥ वाग्दीक्षा ॥ तयाप्राणोदीक्षयादीक्षितः ॥ ययाप्रा
णोदीक्षयादीक्षितः ॥ तयात्वादक्षियादक्षियामि ॥ पृथिवीत्वादीक्षमाणमनुदीक्षतां ॥ अंतरिक्षंत्वादी
क्षमाणमनुदीक्षतां ॥ द्यौस्त्वादीक्षमाणमनुदीक्षतां ॥ ७ ॥ दिशस्त्वादीक्षमाणमनुदीक्षंतां ॥ आपस्त्वा
दीक्षमाणमनुदीक्षंतां ॥ ओषधयस्त्वादीक्षमाणमनुदक्षिंतां ॥ वाक्त्वादीक्षमाणमनुदीक्षतां ॥ ऋचस्त्वादी
क्षमाणमनुदीक्षंतां ॥ सामानित्वादीक्षमागमनुदीक्षंतां ॥ यजूꣳषित्वादीक्षमाणमनुदीक्षंतां ॥ अहश्चरात्रि
श्च ॥ कृषिश्चवृष्टिश्च ॥ त्विषिश्चापचितिश्च ॥ ८ ॥ आपश्चौषधयश्च ॥ ऊर्क्चसूनृताच ॥ तास्त्वादीक्ष

माणमनुंदीक्षंतां ॥ स्वेदक्षेदक्षपितेहसीद ॥ देवानांᳫसुम्नोमंहतेरणाय ॥ स्वासस्थस्तनु
वासंविंशस्व ॥ पितेवैंधिसूनवआसुशेवः ॥ शिवोमांशिवमाविंश ॥ सत्यंमंआत्मा ॥ श्रद्धामेक्षितिः
९ तपोमेप्रतिष्ठा ॥ सवितृप्रसूतामादिशोंदीक्षयंतु ॥ सत्यमस्मि ॥ अहंत्वदंस्मिमदंसित्वमेतत् ॥ म
मासियोनिस्तवयोनिरस्मि ॥ ममैवसन्वंहव्यान्यंग्ने ॥ पुत्रःपित्रेलोंककृज्जातवेदः ॥ आजुह्वानःसुप्रतीं
कःपुरस्तात् ॥ अग्नेस्वांयोनिमासीदसाध्या ॥ अस्मिन्त्सधस्थेअध्युत्तरास्मिन् ॥ १० ॥ विश्वेंदेवायजं
मानश्चसीदत ॥ एकमिषेविष्णुस्त्वान्वेंतु॥द्वेऊर्जेविष्णुस्त्वान्वेंतु ॥ त्रीणिंव्रतायविष्णुस्त्वान्वेंतु ॥ च
त्वारिमायोभवायविष्णुस्त्वान्वेंतु ॥ पंचपशुभ्योविष्णुस्त्वान्वेंतु ॥ षड्रायस्पोषायविष्णुस्त्वान्वेंतु ॥ स
प्तसप्तभ्योहोत्राभ्योविष्णुस्त्वान्वेंतु ॥ सखायःसप्तपदाअभूम ॥ सख्यंतेगमेयं॥ ११ ॥ सख्यात्तेमायो
षं ॥ सख्यान्मेमायोंष्ठाः ॥ सासिंसुब्रह्मण्ये ॥ तस्यांस्तेपृथिवीपादः ॥ सासिंसुब्रह्मण्ये ॥ तस्यांस्ते
तरिक्षंपादः ॥ सासिंसुब्रह्मण्ये ॥ तस्यांस्तेद्यौःपादः ॥ सासिसुब्रह्मण्ये ॥ तस्यांस्तेदिशःपादः ॥
॥ १२ ॥ परोरंजास्तेपंचमःपादः ॥ सानइषमूर्जंधुक्ष्व ॥ तेजंइंद्रियं ॥ ब्रह्मवर्चसमन्नाद्यं ॥
विमिमेत्वापयस्वतीं ॥ देवानांधेनूᳫसुदुघामनंपस्फुरंतीं ॥ इंद्रःसोमंपिबतु ॥ क्षेमोअस्तुनः ॥

इमांनराःकृणुतवेदिमंत्यै ॥ वसुंमतीरुद्रवंतीमादित्यवंतीं ॥ १३ ॥ वर्ष्मंन्दिवः ॥नाभांपृथिव्याः ॥
यथायंयजंमानोनरिष्येत् ॥ देवस्यंसवितुःसवे ॥ चतुंःशिखंडायुवतिःसुपेशाः ॥ घृतप्र
तीकाभुवनस्यमध्ये ॥ तस्यांसुपर्णावधियौनिविंष्टौ ॥ तयोंर्देवानामधिंभागधेयं ॥ अपजन्यंभयनु
द ॥ अपचक्राणिवर्त्तय ॥ गृहसोमंस्यगच्छतं ॥ नवाउंवेतन्म्रियसेनरिष्यसि॥ देवाइदेषिपथिभिः
सुगेभिः ॥ यत्रयंतिसुकृतोनापिंदुष्कृतः ॥ तत्रंत्वादेवःसंवितादंधातु ॥ १४॥ ब्रह्मंणोयोनिरंहसःपङ्क्तिप्रपं
द्येदीक्षायय्यांदित्योदीक्षयादीक्षितस्तयांत्वादीक्षयांदीक्षयाम्योषंधयोदीक्षाद्यौस्त्वादीक्षंमाणमनुंदीक्षन्तामपं
चितिश्चाक्षितिरुत्तंरस्मिनामेयंदिशःपादंआदित्यवंतांवर्त्तयपंचंच ॥ ७ ॥ यदस्यपारेरजंसः ॥ शुक्रं
ज्योतिरजांयत ॥ तन्नःपर्षदतिद्विषः॥ अग्नेवैश्वानरस्वाहां ॥ यस्मांद्भीषात्वाशिष्ठाः॥ ततोंनोअभंयंकृधि
प्रजाभ्यःसर्वाभ्योमृड ॥ नमोंरुद्रायंमीढुषे ॥ यस्मांद्भाषिन्यषंदः ॥ ततोंनोअभंयंकृधि ॥
॥ १ ॥ प्रजाभ्यःसर्वाभ्योमृड ॥ नमोंरुद्रायंमीढुषे ॥ उदुंस्त्रातिष्ठप्रतितिष्ठमारिषः ॥
मेमंयज्ञंयजंमानंचरीरिषः ॥ सुवर्गेलोकेयजंमानंहिधेहि ॥ शंनंएधिद्विपदेशंचतुष्पदे ॥ यस्मांद्भीषा
वेंपिष्ठाःपलायिंष्ठाःसमज्ञांस्थाः ॥ ततोंनोअभंयंकृधि ॥ प्रजाभ्यःसर्वाभ्योमृड ॥ नमोंरुद्रायंमीढुषे ॥
॥ २ ॥ यइदमकः ॥ तस्मैनमः ॥ तस्मैस्वाहां॥ नवाउंवेतन्म्रियसे ॥ आशांनांत्वाविश्वाआशाः ॥

यज्ञस्यहिस्थऋत्वियौ ॥ इंद्राग्नीचेतंनस्यच ॥ हुताहुतस्यंतृप्यतं ॥ अहुतस्यहुतस्यंच ॥ हुतस्यचाहुं
तस्यच ॥ अहुतस्यहुतस्यंच ॥ इंद्राग्नीअस्यसोमस्य ॥ वीतंपिबंतंजुषेथां ॥ मायजमानंतमोविदत् ॥
मर्त्विजोमोइमाःप्रजाः ॥ मायःसोमंमिमंपिबात् ॥ सꣳसृष्टमुभयंकृतं ॥ ३ ॥ कृधिमीढुषेहुतस्यचस
म्रचं ॥ ८ ॥ अनागसंस्त्वावयं ॥ इंद्रेणप्रेषिताउपं ॥ वायुष्टेअस्त्वꣳशभूः ॥ मित्रस्तेअस्त्वꣳशभूः ॥
वरुणस्तेअस्त्वꣳशभूः ॥ अपांक्षयाऋतस्यगर्भाः ॥ भुवनस्यगोपाःश्येनाअतिथयः ॥ पर्वतानांक
कुभःप्रयुतोनपातारः ॥ वग्नुनेंद्रꣳह्वयत ॥ घोषेणामीवाꣳश्चातयत ॥ १ ॥ युक्तास्थवहंत ॥ देवाग्रा
वाणइंदुरिंद्रइत्यंवादिषुः ॥ एंद्रमचुच्यवुःपरमस्याःपरावतः ॥ आस्मात्सधस्थात् ॥ ओरोरंतरिंक्षात् ॥
आसुभूतमंसुषवुः ॥ ब्रह्मवर्चसमंमआसुषवुः ॥ समरेरक्षांꣳस्यवधिषुः ॥ अपहतंब्रह्मज्यस्यं ॥ वाकंत्वा
मनंश्चश्रीणीतां ॥ २ ॥ प्राणश्चत्वापानश्चश्रीणीतां ॥ चक्षुश्चत्वाश्रोत्रंचश्रीणीतां ॥ दक्षश्चत्वावलं
चश्रीणीतां ॥ ओजश्चत्वासहश्चश्रीणीतां ॥ आयुश्चत्वाजराचंश्रीणीतां ॥ आत्माचंत्वातनूश्चश्रीणी
तां ॥ शृतोसिशृतंकृतः ॥ शृतायंत्वाशृतेभ्यंस्त्वा ॥ यमिंद्रमाहुर्वरुणंयमाहुः ॥ यंमित्रमाहुर्यमुंसत्यमा
हुः ॥ ३ ॥ योदेवानांदेवतंमस्तपोजाः ॥ तस्मैत्वातेभ्यंस्त्वा ॥ मयित्वादिंद्रियंमहत् ॥ मयिदक्षोम

यिक्रतुः ॥ मयिधायिसुवीर्यं ॥ त्रिशुंग्घर्मोविभातुमे ॥ आकूत्यामनसासह । विराजाज्योतिषासह ॥ यज्ञेनपयसासह ॥ तस्यदोहमशीमहि ॥ ४ ॥ तस्यसुम्नमशीमहि ॥ तस्यभक्षमशीमहि ॥ वाग्जुषाणासोमस्यतृप्यतु ॥ मित्रोजनान्प्रसमित्र ॥ यस्मान्नजातःपरोअन्योअस्ति ॥ यआविवेशभुवना निविश्वा ॥ प्रजापतिःप्रजयासंविदानः ॥ त्रीणिज्योतींषिसचतेसषोडशी ॥ एषब्रह्मायऋत्वियः ॥ इंद्रोनामश्रुतोगृणे ॥ ५ ॥ प्रतेमहेविदथेशंसिषंहरी ॥ यऋत्वियःप्रतेवन्वे ॥ वनुषोहर्यतंमदं ॥ इंद्रोनामघृतंनयः ॥ हरिभिश्चारुसेचते ॥ श्रुतोगणआत्वाविशंतु ॥ हरिवर्पसंगिरः ॥ इंद्राधिपतेधिपतिस्त्वंदेवानामसि ॥ अधिपतिंमां ॥ आयुष्मंतंवर्चस्वंतंमनुष्येषुकुरु ६ इंद्रश्चसंम्राड्वरुणश्चराजा ॥ तौतेभक्षंचक्रतुरग्रएतं ॥ तयोरनुभक्षंभक्षयामि ॥ वाग्जुषाणासोमस्यतृप्यतु ॥ प्रजापतिर्विश्वकर्मा ॥ तस्यमनोदेवंयज्ञेनराध्यासं ॥ अर्थेगाअस्यजंहितः ॥ अवसानंपतेवसानंमोविंद ॥ नमोरुद्रायवास्तोष्पतये ॥ आयने विद्रवणे ॥ ७ उद्यानेयत्परायणे ॥ आवर्तनेविवर्तने ॥ योगोपायतितंहुवे ॥ यान्यपामित्यान्यप्रतीत्तान्यस्मि ॥ यमस्यबलिनाचरामि ॥ इहैवसंतःप्रतितद्यातयामः ॥ जीवाजीवेभ्योनिहरामएनत् ॥ अनृणाअस्मिन्ननृणाःपरस्मिन् ॥ तृतीयेलोकेअनृणाःस्याम ॥ येदेव

यानां॒ उ॒तपि॑तृ॒याणां॑ः ॥ ८ ॥ सर्वा॒न्पथो॑अनृ॒णाआक्षी॑येम ॥ इ॒दमू॒नुःश्रेयो॑व॒सान॒माग॑न्म ॥ शि॒वेनो॒ द्यावा॑पृथि॒वीउ॒भे॒इमे ॥ गोम॒द्धन॑व॒दश्व॑व॒दू॒र्जस्व॑त् ॥ सु॒वीरा॑वी॒रैरनु॒संच॑रेम ॥ अ॒र्कःप॒वित्र॒ꣳरज॑सोवि॒ मानः ॥ पुनाति॑दे॒वानां॒भुव॑नानि॒विश्वा॑ ॥ द्यावा॑पृथि॒वीपय॑सासंविदा॒ने ॥ घृ॒तंदु॑हातेअमृ॒तंप्रपी॑ने ॥ प॒वित्र॑म॒र्कोरज॑सोवि॒मानः ॥ पु॒नाति॑दे॒वानां॒भुव॑नानि॒विश्वा॑ ॥ सु॒वर्ज्योति॒र्यशो॑म॒हत् ॥ अ॒शी॒महि॑गा॒ ध॒मु॒तप्र॑ति॒ष्ठां ॥ ९ ॥ चा॒त॒य॒तश्री॒णी॒ता॒ꣳस॒त्यमा॑हु॒रशी॑महि॒ग॒णेकु॑रु॒विद्र॑वणे॒पि॑तृ॒याणां॑अ॒र्कोरज॑सोवि॒मा न॒स्त्रीणि॑च ॥ १ ॥ ॥ उदस्तां॑प्सी॒त्सवि॒तामि॒त्रोअ॑र्य॒मा ॥ सर्वा॑न॒मित्रा॑नवधी॒द्युगे॑न ॥ बृ॒ह॒न्तं॒माम॑क र॒द्वीरव॑न्तं ॥ र॒थ॒न्त॒रेश्र॑यस्व॒स्वाहा॑पृथि॒व्यां ॥ वा॒म॒दे॒व्येश्र॑यस्व॒स्वाहा॒न्तरि॑क्षे ॥ बृ॒ह॒तिश्र॑यस्व॒स्वाहा॑दि॒वि ॥ बृ॒ह॒तास्त्वोप॑स्तभ्नोमि ॥ आत्वा॑द॒दे॒यश॑सेवी॒र्या॑यच ॥ अ॒स्मास्वा॑ग्नि॒याय॒यं॑धार्ये॑द्रि॒यं॑पयः ॥ यस्ते॑द्र प्सोयस्तं॑उद॒र्षः ॥ १ ॥ दैव्यः॑के॒तुर्विश्वं॒भुव॑नमावि॒वेश ॥ सनः॑पाह्यरि॑ष्ट्यै॒स्वाहा॑ ॥ अनु॑मा॒सर्वो॑यज्ञो॑य मे॑तु ॥ विश्वे॑दे॒वाम॒रुतः॒सामा॒र्कः ॥ आ॒प्रिय॒श्छन्दा॑ꣳसिनि॒विदो॑यजू॒ꣳषि ॥ अ॒स्यै॑पृथि॒व्यैय॒द्यज्ञि॑यं ॥ प्र जाप॑ते॒र्व॒र्त्त॒नि॒म॒नु॒वर्त्त॑स्व ॥ अनु॑वी॒रैरनु॒राध्या॑म॒गोभिः॑ ॥ अन्व॑श्वै॒रनु॒सर्वै॑रु॒पुष्टैः॑ ॥ अनु॒प्रज॑या॒न्वि॑न्द्रि॒येष्टा

॥ २ ॥ देवानोयज्ञमृंजुधानंयंतु ॥ प्रतिंक्षत्रेप्रतिंतिष्ठामिराष्ट्रे ॥ प्रत्यश्वेषुप्रतिंतिष्ठामिगोषु ॥ प्रतिंप्रजायांप्र
तिंतिष्ठामिभव्ये ॥ विश्वंमन्याभिंवावृधे ॥ तदन्यस्यामाधिश्रितं ॥ दिवेचंविश्वकंर्मणे ॥ पृथिव्यैचा
करन्नमः ॥ अस्कांद्यौःपृथिवीं ॥ अस्कांनृषभोयुवागाः ॥ ३ ॥ स्कंनेमाविश्वाभुवंना॥स्कंन्नोयज्ञःप्रजंन
यतु ॥ अस्कानजंनिप्राजंनि ॥ आस्कंनाज्जायंतेवृषा ॥ स्कन्नात्प्रजंनिषीमहि ॥ येदेवायेषांमिदंभाग
धेयंवभूव ॥ येषांप्रयाजाउतानूयाजाः ॥ इंद्रंज्येष्ठेभ्योवरुणराजभ्यः ॥ अग्निहोतृभ्योदेवेभ्यःस्वाहां ॥
उतत्यानोदिवांमतिः ॥ ४ ॥ अदितिरूत्यागंमत् ॥ साशंतांचीमयंस्करत् ॥ ॥ अपस्त्रिधंः ॥ उतत्या
दैव्यांभिषजां ॥ शंनंस्करतोअश्विनां ॥ यूयातांमस्मद्रपंः ॥ अपास्त्रिधंः ॥ शमग्निरग्निभिंस्करत् ॥ शं
नंस्तपतुसूर्यः ॥ शंवातोवात्वरपाः ॥ ५ ॥ अपस्त्रिधंः ॥ तदित्पदंनाविचिंकेतविद्वान् ॥ यन्मृतःपुनं
रप्येतिंजीवान् ॥ त्रिवृद्यद्भुवंनस्यरथवृत् ॥ जीवोगर्भोनमृतःसजीवात् ॥ प्रत्यंस्मैपिपीषते ॥ विश्वां
निविदुषेभर ॥ अरंगमायजग्मंवे ॥ अपंश्चाद्दध्वनेनरे ॥ इंदुरिंदुमवांगात् ॥ इंदोरिंद्रोपात् ॥ तस्यंत
इंदविंद्रंपीतस्यमधुमतः ॥ उपंहूतस्योपंहूतोभक्षयामि ॥ ६ ॥ उदर्षइंद्रियेणगामतिरंरपाअंगात्राणि
च ॥ १० ॥ ब्रह्मंप्रतिष्ठामनंसोब्रह्मंवाचः ॥ ब्रह्मंयज्ञानांहविषामाज्यंस्य ॥ अतिरिक्तंकर्मणोयच्चहीं

नं ॥ यज्ञःपर्वाणिप्रतिरन्नेतिकल्पयंन् ॥ स्वाहांकृताहुंतिरेतुदेवान् ॥ आश्रांवितमत्याश्रांवितं ॥ वषं
ट्कृतमत्यनूंक्तंचयज्ञे ॥ अतिरिक्तंकर्मणोयच्चंहीनं ॥ यज्ञःपर्वाणिप्रतिरन्नेतिकल्पयंन् ॥ स्वाहांकृताहुंतिरे
तुदेवान् ॥ १ ॥ यद्वोदेवाअतिपादयांनि ॥ वाचाचित्प्रयंतंदेवहेडनं ॥ अरायोअस्माꣳअभिदुंच्छुना
यतें ॥ अन्यत्रास्मन्मंरुतस्तांनिधेंतन ॥ ततंमआपस्तदुंतायतेपुनंः ॥ स्वादिष्ठाधीतिरुचथांयशस्यते ॥
अयꣳसंमुद्रउतविश्वभेषजः ॥ स्वाहांकृतस्यसमुंतृप्णुतर्भुवः ॥ उद्वयंतमंसस्परिं ॥ उदुत्यंचित्रं
॥ २ ॥ इमंमेंवरुणतत्त्वांयामि ॥ त्वंनोंअग्नेसत्वंनोंअग्ने ॥ त्वमंग्नेअयासिप्रजांपते ॥ इमंजीवेभ्यंःपरि
धिंदंधामि ॥ मैषान्नुंगादपंरोअर्द्धमेतं ॥ शतंजीवंतुशरदंःपुरूचीः ॥ तिरोमृत्युंदंधतांपर्वतेन ॥ इष्टे
भ्यःस्वाहावषडनिष्टेभ्यःस्वाहां ॥ भेषजंदुरिष्ट्यैस्वाहानिष्कृत्यैस्वाहां ॥ दौरांध्यैस्वाहादैवीभ्यस्तनूभ्यः
स्वाहां ॥ ३ ॥ ऋध्यैस्वाहासमृध्यैस्वाहां ॥ यतंइंद्रभयांमहे ॥ ततोंनोअभंयंकृधि ॥ मघंवञ्छग्धित
वतन्नंऊतयें ॥ विद्विषोविमृधोंजहि ॥ स्वस्तिदाविशस्पतिंः ॥ वृत्रहाविमृधोंवशी ॥ वृषेंद्रःपुरएंतुनः
॥ स्वस्तिदाअंभयंकरः ॥ आभिर्गीर्भिर्यदतोंनऊनं ॥ ४ ॥ आप्यांययहरिवोवर्द्धमानः ॥ यदास्तोतृ
भ्योमहिंगोत्रारुजासिं ॥ भूयिष्ठभाजोअधंतेस्याम ॥ अनांज्ञातंयदाज्ञांतं ॥ यज्ञस्यंक्रियतेमिथुं ॥ अ
तदंस्यकल्पयग्ने ॥ त्वꣳहिवेत्थंयथातथं ॥ पुरुंषसंमितोयज्ञः ॥ यज्ञःपुरुंषसंमितः ॥ अग्नेतदंस्यकल्प

य ॥ त्वꣳहिवेत्थयथातथं ॥ यत्पाकत्रामनसादीनदक्षान ॥ यज्ञस्यमन्वतेमर्तासः ॥ अग्निष्टद्धोताक्र तुविद्विजानन् ॥ यजिष्ठोदेवाꣳऋतुशोयजाति ॥ ५ ॥ देवाꣳश्चित्रतंतनूभ्यःस्वाहोनपुरुषसंमितोग्नेतद स्यकल्पयपंचच ॥ ११ ॥ ॥ यद्देवादेवहेडनं ॥ देवासश्चकृमावयं ॥ आदित्यास्तस्मान्मामुंचत ॥ ऋतस्यर्तेनमामुत ॥ देवाजीवनकाम्यायत् ॥ वाचानृतमूदिम ॥ अग्निर्मातस्मादेनसः ॥ गार्हप त्यःप्रमुंचतु ॥ दुरितायानिचकृम ॥ करोतुमामनेनसं ॥ १ ॥ ऋतेनद्यावापृथिवी ॥ ऋतेनत्वꣳस रस्वति ॥ ऋतान्मामुंचताꣳहसः ॥ यदन्यकृतमारिम ॥ सजातशꣳसादुतवाजामिशꣳसात् ॥ ज्या यसःशꣳसादुतवाकनीयसः ॥ अनाज्ञातंदेवकृतंयदेनः ॥ तस्मात्त्वमस्मान्जातवेदोमुमुग्धि ॥ यद्वाचा यन्मनसा ॥ बाहुभ्यामूरुभ्यामष्ठीवद्भ्यां ॥ २ ॥ शिश्नैर्यदनृतंचकृमावयं ॥ अग्निर्मातस्मादेनसः ॥ यद्धस्ताभ्यांचकरकिल्बिषाणि ॥ अक्षाणांवग्नुमुपजिघ्नमानः ॥ दूरेपश्याचराष्ट्रभृच्च ॥ तान्यप्सरसाव नुदत्तामृणानि ॥ अदीव्यंनृणंयदहंचकार ॥ यद्वादास्यन्त्संजगाराजनेभ्यः ॥ अग्निर्मातस्मादेनस ॥ यन्मयिमातागर्भेसति ॥ ३ ॥ एनश्चकारयत्पिता ॥ अग्निर्मातस्मादेनसः ॥ यदापिपेषमातरंपितरं ॥ पुत्रःप्रमुदि

तोधयन्॥अहिंश्सितौपितरौमयातत्॥तदंग्नेअनृणोभंवामि ॥यदंतरिंक्षंपृथिवीमुतद्यां ॥यन्मातंरंपितंरंवा जिहिंश्सिम ॥ अग्निर्मातस्मादेनंसः॥यदाशसांनिशसायत्पंराशसां ॥ ४ ॥ यदेनंश्चकृमानूतंनंयत्पु राणं ॥ अग्निर्मातस्मादेनंसः ॥ अतिंक्रामामिदुरितंयदेनंः ॥ जहांमिरिप्रंपंरमेसधस्थें ॥ यत्रयंतिंसुकृ तोनापिंदुष्कृतंः ॥ तमारोंहामिसुकृतांनुलोकं ॥ त्रितेदेवाअंमृजतैतदेनंः ॥ त्रितएतन्मंनुष्येंषुमामृजे॥ ततोंमायदिकिंचिंदानशे ॥ अग्निर्मातस्मादेनंसः ॥ ५ ॥ गार्हंपत्यःप्रमुंचतु ॥ दुरितायानिंचकृम ॥ करोतुमामंनेनसं ॥ दिविजाताअप्सुजाताः ॥ याजाताओषंधीभ्यः ॥ अथोयाअंग्निजाआपंः ॥ तानंःशुंधंतुशुंधंनीः ॥ यदापोनक्तंदुरितंचरांम ॥ यद्वादिवानूतंनंयत्पुंराणं ॥ हिंरण्यवर्णास्तत उत्पुंनीतनः ॥ इमंमेंवरुणतत्वांयामि ॥ त्वंनोंअग्नेसत्वंनोंअग्ने ॥ त्वमंग्नेअयासिं ॥ ६ ॥ अ नेनसंमष्ठीवद्भ्यांश्सतिपंराशसांनशेंग्निर्मातस्मादेनंसःपुनीतनस्त्रीणिंच ॥ १२ ॥ ॥ यत्तेग्रा व्णांचिश्छिदुःसोंमराजन् ॥ प्रियाण्यंगांनिस्वधिंतापरूंश्षि ॥ तत्संधत्स्वाज्येंनोतवंर्द्धयस्व ॥ अ नागसोअधमित्संक्षयेंम ॥ यत्तेग्रावांबाहुच्युंतोअचुंच्यवुः ॥ नरोयत्तेंदुदुहुर्दक्षिंणेन ॥ तत्तआप्यां यतांतत्ते ॥ निष्टयांयतांदेवसोम ॥ यत्तेत्वचंबिभिदुर्यंच्चयोनिं ॥ यदास्थानात्प्रच्युंतोवेनांसित्मना ॥१॥

त्वयातत्सोमगुप्तमस्तुनः ॥ सानःसंधासंत्परमेव्योमन् ॥ अहाच्छरीरंपयसासमेत्य ॥ अन्योन्योभवति
वर्णोअस्य ॥ तस्मिन्वयमुपहूतास्तवस्मः ॥ आनोभजसदसिविश्वरूपे ॥ नृचक्षाःसोमउतशुश्रुगस्तु
॥ मानोविहासीद्गिरआवृणानः ॥ अनागास्तनुवोवावृधानः॥आनोरूपंवहतुजायमानः ॥ २ ॥ उपक्षरं
तिजुह्वोघृतेन ॥ प्रियाण्यंगानितववर्द्धयंतीः ॥ तस्मैतेसोमनमइद्वषड्ढ ॥ उपमाराजन्त्सुकृतेह्वयस्व ॥
संप्राणापानाभ्याꣳसमुचक्षुषात्वं ॥ सꣳश्रोत्रेणगच्छस्वसोमराजन् ॥ यत्तआस्थितꣳशमुतत्तेअस्तु ॥
जानीतान्नःसंगमनेपथीनां ॥ एतंजानीतात्परमेव्योमन् ॥ वृकाःसधस्थाविदरूपमस्य ॥ ३ ॥ यदाग
च्छात्पथिभिर्देवयानैः ॥ इष्टापूर्तेकृणुतादाविरस्मै ॥ अरिष्टोराजन्नगदःपरेहि ॥ नमस्तेअस्तुचक्षसेरघू
यते ॥ नाकमारोहसहयजमानेन ॥ सूर्यंगच्छतात्परमेव्योमन् ॥ अभूद्देवःसवितावंद्योनुनः ॥ इदा
नीमह्नउपवाच्योनृभिः ॥ वियोरत्नाभजतिमानवेभ्यः ॥ श्रेष्ठन्नोअत्रद्रविणंयथादधत् ॥ उपनोमित्राव
रुणाविहावतं ॥ अन्वादीध्याथामिहनःसखाया ॥ आदित्यानांप्रसितिर्हेतिः ॥ उग्राशतापाष्ठाघविषापरी
णोवृणक्तु ॥ आप्यायस्वसंते ॥ ४ ॥ त्वमनाजयमानोस्यदधत्पंचच ॥ १३ ॥ ॥ यद्दिदीक्षेमनसा
यच्चवाचा ॥ यद्वाप्राणैश्चक्षुषायच्चश्रोत्रेण ॥ यद्रेतसामिथुनेनाप्यात्मनां ॥ अद्भ्योलोकाद्दधिरेतेजइंद्रि

यं ॥ शुक्रादीक्षायैतपंसोविमोचंनीः॥आपोविमोक्रोर्मायितेजंइंद्रियं ॥ यद्वचासामन्नायजुंषा ॥ पशूनांच मंन्त्रविषांदिदीक्षे ॥ यच्छंदोंभिरोषंधीभिर्वनस्पतौं ॥ अद्योलोकादंधिरेतेजंइंद्रियं ॥ १ ॥ शुक्रादी क्षायैतपंसोविमोचंनीः ॥ आपो विमोक्रोर्मायितेजंइंद्रियं ॥ येनब्रह्मयेनंक्षत्रं ॥ येनेंद्राग्नीप्रजापंतिःसोमो वरुंणोयेनराजा ॥ विश्वेंदेवाऋषंयोयेनंप्राणाः॥ अद्योलोकादंधिरेतेजंइंद्रियं ॥ शुक्रादीक्षायैतपंसोवि मोचंनीः ॥ अपोंविमोक्रोर्मायितेजंइंद्रियं ॥ अपांपुष्पंमस्योषंधीनाꣳरसः ॥ सोमंस्यप्रियंधा मं ॥ २ ॥ अग्नेःप्रियतंमꣳहविःस्वाहा ॥ अपांपुष्पंमस्योषंधीनाꣳरसः ॥ सोमंस्यप्रियंधामं ॥ इंद्रंस्यप्रियतंमꣳहविःस्वाहा ॥ अपांपुष्पंमस्योषंधीनाꣳरसः ॥ सोमंस्यप्रियंधामं ॥ विश्वेषांदेवा नांप्रियतंमꣳहविःस्वाहा ॥ वयꣳसोमव्रतेतवं ॥ मनंस्तनूषुपिप्रंतः ॥ प्रजावंतोअशीमहि॥ ३ ॥देवेभ्यंः पितृभ्यःस्वाहा ॥ सोम्येभ्यंःपितृभ्यःस्वाहा॥ कव्येभ्यंःपितृभ्यःस्वाहा ॥ देवांसइहमांदयध्वं ॥ सो म्यासइहमांदयध्वं ॥ कव्यांसइहमांदयध्व ॥ अनंतरिताःपितरंःसोम्याःसोमपीथात् ॥ अपैतुमृत्युरमृ तंनआगंन् ॥ वैवस्वतोनोअभंयंकृणोतु ॥ पर्णंवनस्पतेरिव ॥ ४ ॥ अभिनंःशीयताꣳरयिः ॥ सचं तांनःशचीपतिः ॥ परंमृत्योअनुपरेहिपंथां ॥ यस्तेस्वइतंरोदेवयानात् ॥ चक्षुंष्मतेशृण्वतेतेंब्रवीमि ॥ मा

नं प्रजाꣳरीरिषोमोतवीरान् ॥ इदमूनुश्रेयोवसानमागन्म ॥ यद्गोजिद्धनजिदश्वजिद्यत् ॥ पर्णवनस्प

तेरिव ॥ अभिनःशीयताꣳरयिः ॥ सचंतांनःशचीपतिः ॥ ५ ॥ वनस्पतावध्योलोकादंधिरेते जंइंद्रियं

धामांशोमहीवामिनःशीयताꣳरयिरेकंच ॥ १४ ॥ ॥ सर्वान्यादेःषण्णेतत्रिवैयाःपुरस्ताद्देवादेवेषुपारं

स्तृणीतसस्वेदंयदस्यपारेनागसउदंस्तांप्सोद्ब्रह्मप्रतिष्ठायद्देवायत्तेग्राꣳगायद्दिदीक्षेचतुर्दश ॥ १४ ॥ ॥

सर्वान्भूतिमेवयामेवाप्स्वाहुतिंब्रतानांपर्णवल्कःसोम्यानामस्मिन्यज्ञेग्रेयानोभित्राज्योगजीवाःपरोरंजास्ते

प्रतेमहेब्रह्मप्रतिष्ठागार्हपत्यास्त्रिꣳशदुत्तरशतं ॥ १३० ॥ ॥ हरिःॐ ॥ ॥ सांग्रहण्येष्ट्या

यजते ॥ इमांजनताꣳसंगृण्हानीति ॥ द्वादशारत्नीरशनाभवति ॥ द्वादशमासाःसंवत्सरः ॥ संवत्सरमेवा

वरुंधे ॥ मौंजीभवति ॥ ऊर्ग्वैमुंजाः ॥ ऊर्जमेवावरुंधे ॥ चित्रानक्षत्रंभवति ॥ चित्रंवाएतत्कर्म ॥ १ ॥

यदश्वमेधःसमृध्यै ॥ पुंण्यंनामदेवयजनमध्यवस्यति ॥ पुण्यामेवतेनकीर्तिमभिजंयति ॥ अपदातोनृ

त्विजःसमावहंत्यासुब्रह्मण्यायाः ॥ सुवर्गस्यलोकस्यसमष्टचै ॥ केशश्मश्रुवपते ॥ नखानिनिकृंत

ते ॥ दतोधावते ॥ स्नाति ॥ अहतंवासःपरिधत्ते ॥ पाप्मनोपहत्यै ॥ वाचंयत्वोपवसति ॥ सुवर्ग

स्यलोकस्यगुप्त्यै ॥ रात्रिंजागरयंतआसते ॥ सुवर्गस्यलोकस्यसमष्टचै ॥ २ ॥ कर्मधत्तेपंचंच ॥ १ ॥

चतुष्टय्यआपोभवंति ॥ चतुःशफोवाअश्वःप्राजापत्यःसमृध्यै ॥ तादिग्भ्यःसमाभृताभवंति ॥ दिक्षुवा
आपः ॥ अन्नंवाआपः ॥ अद्भ्योवाअन्नंजायते ॥ यदेवाद्भ्योन्नंजायंते ॥ तदवरुंधे ॥ तासुब्रह्मौदनंपच
ति ॥ रेतएवतद्दधाति ॥ १ ॥ चतुःशरावोभवति ॥ दिक्ष्वेवप्रतितिष्ठति ॥ उभयतोरुक्मौभवतः ॥
उभयतएवास्मिन्रुचंदधाति ॥ उद्धरतिशृतत्वाय ॥ सर्पिष्वान्भवतिमेध्यत्वाय ॥ चत्वारआर्षेयाःप्राश्नं
ति ॥ दिशामेवज्योतिषिजुहोति ॥ चत्वारिहिरण्यानिददाति ॥ दिशामेवज्योतोऽष्यवरुंधे ॥ २ ॥
यदाज्यमुच्छिष्यंते ॥ तस्मिन्रशनान्युनक्ति ॥ प्रजापतिर्वाओदनः ॥ रेतआज्यं ॥ यदाज्येरशनान्युन
क्ति ॥ प्रजापतिमेवरेतसासमर्द्धयति ॥ दर्भमयीरशनाभवति ॥ बहुवाएषकुचरोमेध्यमुपगच्छति ॥ य
दश्वः ॥ पवित्रंवैदर्भाः ॥ ३ ॥ यद्दर्भमयीरशनाभवति ॥ पुनात्यैवैनं॥ पूतमेनंमेध्यमालभते ॥ अश्वस्य
वाआलब्धस्यमहिमोदक्रामत् ॥ समहर्त्विजःप्राविशत् ॥ तन्महर्त्विजांमहर्त्विक्त्वं ॥ यन्महर्त्विजःप्रा
श्नंति ॥ महिमानमेवास्मिन्तद्दधाति ॥ अश्वस्यवाआलब्धस्यरेतउदक्रामत् ॥ तत्सुवर्णꣳहिरण्यमभ
वत् ॥ यत्सुवर्णꣳहिरण्यंददाति ॥ रेतएवतद्दधाति ॥ ओदनेददाति ॥ रेतोवाओदनः ॥ रेतो
हिरण्यं ॥ रेतसैवास्मिन्रेतोदधाति ॥ ४ ॥ दधातिरुंधेदर्भाअभवत्षट्च ॥ २ ॥ ॥ योवै
ब्रह्मणेदेवेभ्यःप्रजापतयेप्रतिप्रोच्याश्वंमेध्यंबध्नाति ॥ आदेवताभ्योवृश्च्यते ॥ पापीयान्भवति ॥

यःप्रतिप्रोच्यं ॥ नदेवताभ्यआवृश्च्यते ॥ वसीयान्भवति ॥ यदाह ॥ ब्रह्मन्नश्वंमेध्यंभन्त्स्या
मिदेवेभ्यःप्रजापतयेतेनराध्यासमिति ॥ ब्रह्मवैब्रह्मा ॥ ब्रह्मणएवदेवेभ्यःप्रजापतयेप्रतिप्रोच्याश्वंमे
ध्यंबध्नाति ॥ १ ॥ नदेवताभ्यआवृश्च्यते ॥ वसीयान्भवति ॥ देवस्यत्वासवितुःप्रसवइतिरशनामादत्ते
प्रसूत्यै ॥ अश्विनोर्बाहुभ्यामित्याह ॥ अश्विनौहिदेवानामध्वर्यूआस्तां ॥ पूष्णोहस्ताभ्यामित्याहयत्यै ॥
व्यृद्धंवाएतद्यज्ञस्य ॥ यदयजुष्केणक्रियते ॥ इमामगृभ्णन्रशनामृतस्येत्यधिवदतियजुष्कृत्यै ॥ यज्ञस्य
समृध्यै ॥ २ ॥ तदाहुः ॥ द्वादशारत्नीरशनाकर्त्तव्या३ त्रयोदशारत्नी३ रिति॥ ऋषभोवाएषऋतूनां ॥
यत्संवत्सरः ॥ तस्यत्रयोदशोमासोविष्टपं ॥ ऋषभएषयज्ञानां ॥ यदश्वमेधः ॥ यथावाऋषभस्यविष्ट
पं ॥ एवमेतस्यविष्टपं ॥त्रयोदशमरत्निꣳरशनायामुपादधाति ॥ ३ ॥ यथर्षभस्यविष्टपꣳसꣳस्करो
ति ॥ तादृगेवतत् ॥ पूर्वआयुषिविदथेषुकव्येत्याह ॥ आयुरेवास्मिन्दधाति ॥ तयादेवाःसुतनाबभू
वुरित्याह ॥ भूतिमेवोपावर्त्तते ॥ ऋतस्यसामन्त्सरमारपंतीत्याह ॥ सत्यंवाऋतं ॥ सत्येनैवैनमृतेना
रभते ॥ अभिधाअसीत्याह ॥ ४ ॥ तस्मादश्वमेधयाजीसर्वाणिभूतान्यभिभवति ॥ भुवनमसीत्या
ह ॥ भूमानमेवोपैति ॥ यंतासीत्याह ॥ यंतारमेवैनंकरोति ॥ धर्त्तासीत्याह ॥ धर्त्तारमेवैनंकरोति ॥

सोऽग्निर्वैश्वानरमित्याह ॥ अग्नावेवैनं वैश्वानरे जुहोति ॥ सप्रथसमित्याह ॥ ५ ॥ प्रजयैवैनं पशुभिः प्रथयति ॥ स्वाहाकृत इत्याह ॥ होम एवास्यैषः ॥ पृथिव्यामित्याह ॥ अस्यामेवैनं प्रतिष्ठापयति ॥ यंतारड्यंतासि यमनो धर्त्तासि धरुण इत्याह ॥ रूपमेवास्यैतन्महिमानं व्याचष्टे ॥ कृष्यै त्वा क्षेमाय त्वा रय्यै त्वा पोषय त्वेत्याह ॥ आशिषमेवैतामाशास्ते ॥ स्वगा त्वा देवेभ्य इत्याह ॥ देवेभ्य एवैनꣳ स्वगाकरोति ॥ स्वाहा त्वा प्रजापतय इत्याह ॥ प्राजापत्यो वा अश्वः ॥ यस्या एव देवताया आलभ्यते ॥ तयैवैनꣳ समर्द्धयति ॥ ६ ॥ बध्नाति समृध्या उपादधात्यसीत्याह सप्रथसमित्याह देवेभ्य इत्याह पंच च ॥ ३ ॥ ॥ यः पितुरनुजायाः पुत्रः ॥ स पुरस्तान्नयति ॥ यो मातुरनुजायाः पुत्रः ॥ स पश्चान्नयति ॥ विश्वं च मेवास्मात्पाप्मानं विवृहतः ॥ यो अर्वन्तं जिघाꣳसति तमभ्यमीति वरुण इति श्वानं चतुरक्षं प्रसौति ॥ परो मर्त्तः परः श्वेति शुनश्चतुरक्षस्य प्रहन्ति ॥ श्वेव वै पाप्मा भ्रातृव्यः ॥ पाप्मानमेवास्य भ्रातृव्यꣳ हन्ति ॥ सैध्रकं मुसलं भवति ॥ १ ॥ कर्मकर्मैवास्मै साधयति ॥ पौꣳश्चलेयो हन्ति ॥ पुꣳश्चल्वां वै देवाः शुचन्न्यदधुः ॥ शुचैवास्य शुचꣳ हन्ति ॥ पाप्मा वा एतमीप्सतीत्याहुः ॥ योऽश्वमेधेन यजत इति ॥ अश्वस्याधस्पदमुपास्यति ॥ वज्रो वा अश्वः ॥ प्राजापत्यः ॥ वज्रेणैव पाप्मानं भ्रातृव्यमवक्रामति ॥ दक्षिणापन्नावयति ॥ २ ॥ पाप्मानमेवास्माच्छमलमपप्लावयति ॥ ऐषीकउदूहो भवति ॥ आयुर्वा इषीकाः ॥ आयुरेवा

स्मिन्दधाति ॥ अमृतंवाहुषीकाः ॥ अमृतमेवास्मिन्दधाति ॥ वेतसशाखोपसंबद्धांभवति ॥ अप्सुयो निर्वाअश्वः ॥ अप्सुजोवेतसः ॥ स्वादेवैनंयोनेर्निर्मिमीते ॥ पुरस्तात्प्रत्यंचमभ्युदूहति ॥ पुरस्तांदेवा स्मिन्प्रतीच्यमृतंदधाति ॥ अहंचत्वंचवृत्रहन्निति ब्रह्मायजमानस्यहस्तंगृह्णाति ॥ ब्रह्मक्षत्रेएवसंदधाति ॥ अभिक्रत्वेंद्रभूरधज्मन्नित्यध्वर्युर्यजमानंवाचयत्यभिजित्यै ॥ ३ ॥ भवतिह्नावयतिमिमीतेपंचच ॥ ॥ ४ ॥ ॥ चत्वारऋत्विजःसमुक्षंति ॥ आभ्यएवैनंचतसृभ्योदिग्भ्योभिसमीरयंति ॥ शतेनराज पुत्रैःसहाध्वर्युः ॥ पुरस्तात्प्रत्यङ्क्तिष्ठन्प्रोक्षति ॥ अनेनाश्वेनमेध्येनेष्ट्वा ॥ अयंराजावृत्रंवध्यादिति ॥ राज्यंवाअध्वर्युः ॥ क्षत्रंराजपुत्रः ॥ राज्येनैवास्मिन्क्षत्रंदधाति ॥ शतेनाराजभिरुग्रैःसहब्रह्मा ॥ ॥ १ ॥ दक्षिणतउदङ्क्तिष्ठन्प्रोक्षति ॥ अनेनाश्वेनमेध्येनेष्ट्वा ॥ अयंराजाप्रतिधृष्योस्त्विति ॥ बलंवै ब्रह्मा ॥ बलमराजोग्रः ॥ बलेनैवास्मिन्बलंदधाति ॥ शतेनसूतग्रामणिभिःसहहोता ॥ पश्चात्प्राङ्क्ति ष्ठन्प्रोक्षति ॥ अनेनाश्वेनमेध्येनेष्ट्वा ॥ अयंराजास्यैविशः ॥ २ ॥ बहुग्वैबह्वश्वायैबहुजाविकायै ॥ बहुव्रीहियवायैबहुमाषतिलायै ॥ बहुहिरण्यायैबहुहस्तिकायै ॥ बहुदासपूरुषायैरयिमत्यैपु

ष्टिमत्यै ॥ बहुगायस्प्रोषायैराजास्त्विति ॥ भूमावैहोता ॥ भूमासूतग्रामण्यः ॥ भूम्नैवास्मिन्भूमानंद
धाति ॥ शतेनंक्षत्तसंग्रहीतृभिःसहोद्गाता ॥ उत्तरतोदक्षिणातिष्ठन्प्रोक्षति ॥ ३ ॥ अनेनाश्वेनमेध्येने
ष्ट्वा ॥ अयश्राजासर्वमायुरेत्विति ॥ आयुर्वाउद्गाता॥ आयुःक्षत्तसंग्रहीतारः ॥ आयुषैवास्मिन्नायुर्द
धाति ॥ शतꣳशतंभवंति ॥ शतायुःपुरुषःशतेंद्रियः ॥ आयुष्येवेंद्रियेप्रतितिष्ठति ॥ चतुःशताभवंति ॥
चतस्रोदिशः ॥ दिक्ष्वेवप्रतितिष्ठति ॥ ४ ॥ ब्रह्माविशउंक्षतिदिशएकंच ॥ ५ ॥ ॥ यथावैहवि
षोगृहीतस्यस्कंदति ॥ एवंवाएतदश्वस्यस्कंदति॥ यन्निक्तमनालब्धमुत्सृजंति ॥ यत्स्तोक्यांअन्वाह ॥
सर्वहुतमेवैनंकरोत्यस्कंदाय ॥ अस्कन्नꣳहितत् ॥ यद्धुतस्यस्कंदति॥ सहस्रमन्वाह ॥ सहस्रसंमितःसु
वर्गोलोकः ॥ सुवर्गस्यलोकस्याभिजित्यै ॥ १ ॥ यत्परिमिताअनुब्रूयात् ॥ परिमितमवरुंधीत ॥ अ
परिमिताअन्वाह ॥ अपरिमितःसुवर्गोलोकः ॥ सुवर्गस्यलोकस्यसमष्ट्यै ॥ स्तोक्यांजुहोति ॥ या
एववर्ष्याआपः ॥ ताअवरुंधे ॥ अस्यांजुहोति ॥ इयंवाअग्निर्वैश्वानरः ॥ २ ॥ अस्यामेवैनाःप्रतिष्ठा
पयति ॥ उवाचहप्रजापतिः ॥ स्तोक्यासुवाअहमश्वमेधꣳसꣳस्थापयामि ॥ तेनततःसꣳस्थितेनचरा
मीति॥अग्नयेस्वाहेत्याह॥अग्नयएवैनंजुहोति॥सोमायस्वाहेत्याह॥सोमायैवैनंजुहोति॥सवित्रेस्वाहेत्याह॥

सवित्रएवैनंजुहोति ॥ ३ ॥ सरंस्वत्यैस्वाहेत्यांह ॥ सरंस्वत्याएवैनंजुहोति ॥ पूष्णेस्वाहेत्यांह॥ पूष्णए
वैनंजुहोति ॥ बृहस्पतंयेस्वाहेत्यांह ॥ बृहस्पतंयएवैनंजुहोति ॥ अपांमोदांयस्वाहेत्यांह ॥ अद्भ्यएवै
नंजुहोति ॥ वायवेस्वाहेत्यांह॥ वायवंएवैनंजुहोति ॥ ४ ॥ मित्रायस्वाहेत्यांह ॥ मित्रायैवैनंजुहोति
॥ वरुंणायस्वाहेत्यांह ॥ वरुंणायैवैनंजुहोति ॥ एताभ्यंएवैनंदेवताभ्योजुहोति ॥ दशंदशसंपादं
जुहोति ॥ दशांक्षराविराट् ॥ अन्नंविराट् ॥ विराजैवान्नाद्यमवंरुंधे ॥ प्रवाएषोंस्माल्लोकाच्चयंवते ॥
यःपरांचीराहुंतीर्जुहोतिं ॥ पुनंःपुनरभ्यावर्तंजुहोति ॥ अस्मिन्नेवलोकेप्रतिंतिष्ठति ॥ एताꣳह्वावसों
श्वमेधस्यसꣳस्थिंतिमुवाचास्कंदाय ॥ अस्कंन्नꣳहितत् ॥ यद्यज्ञस्यसꣳस्थितस्यस्कंदंति ॥ ५ ॥ अ
भिजित्यैवैश्वानरःसंवित्रएवैनंजुहोतिवायवंएवैनंजुहोतिच्यवतेषट्च ॥ ६ ॥ ॥ प्रजापंतयेत्वाजुष्टं
प्रोक्षामीतिंपुरस्तांत्प्रत्यञ्चंतिष्ठन्प्रोक्षंति ॥ प्रजापंतिर्वैदेवानांमन्नादोवीर्यावान् ॥ अन्नाद्यंमेवास्मिंन्वीर्यं
दधाति ॥ तस्मादश्वंःपशूनामंन्नादोवीर्यांवत्तमः ॥ इंद्राग्निभ्यांत्वेतिंदक्षिणतः ॥ इंद्राग्नीवैदेवानामोजिं
ष्ठौबलिंष्ठौ ॥ ओजंएवास्मिन्बलंदधाति ॥ तस्मादश्वंःपशूनामोजिंष्ठोबलिंष्ठः ॥ वायवेत्वेतिंपश्चात्॥
वायुर्वैदेवानांमाशुःसांरसारितंमः ॥ ७ ॥ जवमेवास्मिंन्दधाति ॥ तस्मादश्वंःपशूनामाशुःसांरसारितंमः

॥ विश्वेभ्यस्त्वादेवेभ्यइत्युत्तरतः ॥ विश्वेवैदेवादेवानांयशस्वितमाः ॥ यशएवास्मिंन्दधाति ॥ तस्मा
दश्वःपशूनांयशस्वितमः ॥ देवेभ्यस्त्वेत्यधस्तात् ॥ देवावैदेवानामपचिततमाः ॥ अपचितिमेवास्मिं
न्दधाति ॥ तस्मादश्वःपशूनामपचिततमः ॥ २ ॥ सर्वेभ्यस्त्वादेवेभ्यइत्युपरिष्टात् ॥ सर्वेवैदेवास्त्वि
षिमंतोहरस्विनः ॥ त्विषिमेवास्मिन्हरोदधाति ॥ तस्मादश्वःपशूनांत्विषिमाहरस्वितमः ॥ दिवेत्वांत
रिक्षायत्वापृथिव्यैत्वेत्याह ॥ एभ्यएवैनंलोकेभ्यःप्रोक्षति ॥ सतेत्वासंतेत्वाभ्यस्त्वौषधीभ्यस्त्वाविश्वेभ्य
स्त्वाभूतेभ्यइत्याह ॥ तस्मादश्वमेधयाजिनंसर्वाणिभूतान्युपजीवंति ॥ ब्रह्मवादिनोवदंति ॥ यत्प्रा
जापत्योश्वः ॥ अथकस्मादेनमन्याभ्योदेवताभ्योपिप्रोक्षतीति ॥ अश्वेवैसर्वादेवताअन्वायत्ताः॥ तंयद्विश्वे
भ्यस्त्वाभूतेभ्यइतिप्रोक्षति ॥ देवताएवास्मिन्नन्वायातयति ॥ तस्मादश्वेसर्वादेवताअन्वायत्ताः ॥ ३ ॥
सारसारितमोपचिततमःप्राजापत्योश्वःपंचच ॥ ७ ॥ ॥ यथावैहविषोगृहीतस्यस्कंदति ॥ एवं
वाएतदश्वस्यस्कंदति ॥ यत्प्रोक्षितमनालब्धमुत्सृजंति ॥ यदश्वचरितानिजुहोति ॥ सर्वहुतमेवैनंक
रोत्यस्कंदाय ॥ अस्कंनंहितत् ॥ यद्धुतस्यस्कंदति ॥ ईंकारायस्वाहेंकृतायस्वाहेत्याह ॥ एतानिवा
अश्वचरितानि ॥ चरितैरेवैनंसमर्द्धयति ॥ १ ॥ तदाहुः ॥ अनाहुतयोवाअश्वचरितानि ॥

नैताहोतव्याइति ॥ अथोखल्वाहुः ॥ होतव्याएव ॥ अत्रवावैवंविद्वानश्वमेधꣳसꣳस्थापयति ॥
यदश्वचरितानिजुहोति ॥ तस्माद्धोतव्याइति ॥ बहिर्द्धावाएनमेतदायतनाद्दधाति ॥ भ्रातृव्यमस्मैज
नयति ॥ २ ॥ यस्यांनायतनेन्यत्राग्नेराहुतीर्जुहोति ॥ सावित्रियाइष्ट्याःपुरस्तात्स्विष्टकृतः ॥ आहव
नीयेश्वचरितानिजुहोति ॥ आयतनएवास्याहुतीर्जुहोति ॥ नास्मैभ्रातृव्यंजनयति ॥ तदाहुः ॥ य
ज्ञमुखेयज्ञमुखेहोतव्याः ॥ यज्ञस्यकॢप्त्यै ॥ सुवर्गस्यलोकस्यानुख्यात्याइति ॥ अथोखल्वाहुः ॥ ३ ॥
यद्यज्ञमुखेयज्ञमुखेजुहुयात् ॥ पशुभिर्यजमानंव्यर्द्धयेत् ॥ अवसुवर्गाल्लोकात्पद्येत ॥ पापीयान्स्यादि
ति ॥ सकृदेवहोतव्याः ॥ नयजमानंपशुभिर्व्यर्द्धयति ॥ अभिसुवर्गल्लोकंजयति ॥ नपापीयान्भव
ति ॥ अष्टाचत्वारिꣳशतमश्वरूपाणिजुहोति ॥ अष्टाचत्वारिꣳशदक्षराजगती ॥ जागतोश्वःप्राजाप
त्यःसमृध्यै ॥ एकमतिरिक्तंजुहोति ॥ तस्मादेकःप्रजास्वर्द्धुकः ॥ ४ ॥ अर्द्धयतिजनयतिखल्वाहुर्जग
तीत्रोणिंच ॥ ८ ॥ ॥ विभूर्मात्राप्रभूःपित्रेत्याह ॥ इयंवैमाता ॥ असौपिता ॥ आभ्यामेवैनंपरिद
दाति ॥ अश्वोसिहयोसीत्याह ॥ शास्त्येवैनमेतत् ॥ तस्माच्छिष्टाःप्रजाजायन्ते ॥ अत्योसीत्याह ॥
तस्मादश्वःसर्वान्पशूनत्येति ॥ तस्मादश्वःसर्वेषांपशूनाꣳश्रैष्ठ्यंगच्छति ॥ १ ॥ प्रयशःश्रैष्ठ्यमाप्नोति

॥ यएवंवेद ॥ नरोऽस्यर्वासिसप्तिरसिवाज्यसीत्याह ॥ रूपमेवास्यैतन्महिमानंव्याचष्टे ॥ ययुर्नामासी
त्याह ॥ एतद्वाअश्वस्यप्रियंनामधेयं ॥ प्रियेणैवैनंनामधेयेनाभिवदति ॥ तस्मादप्यामित्रौसंगत्य ॥
नाम्नाचेद्ध्वयेते ॥ मित्रमेवभवतः ॥ २ ॥ आदित्यानांपत्वान्विहीत्याह ॥ आदित्यानेवैनंगमयति ॥
अग्नयेस्वाहास्वाहेंद्राग्निभ्यामितिपूर्वहोमान्जुहोति ॥ पूर्वएवद्विषंतंभ्रातृव्यमतिक्रामति ॥ भूरसिभुवे
त्वाभव्यायत्वाभविष्यतेत्वेत्युत्सृंजतिसर्वत्वाय ॥ देवाआशापालाएतंदेवेभ्योऽश्वंमेधायप्रोक्षितंगोपाय
तेत्याह ॥ शतंवैतल्प्याराजपुत्रादेवाआशापालाः ॥ तेभ्यएवैनंपरिददाति ॥ ईश्वरोवाअश्वःप्रमुक्तःप
रांपरावतंगंतोः ॥ इहधृतिःस्वाहेहविधृतिःस्वाहेहरंतिःस्वाहेहरमतिःस्वाहेतिचतुष्पुपत्सुजुहोति ॥ ३ ॥
एतावाअश्वस्यबंधनं ॥ ताभिरेवैनंबध्नाति ॥ तस्मादश्वःप्रमुक्तोबंधनमागच्छति ॥ तस्मादश्वःप्रमुक्तो
बंधनंनजहाति ॥ राष्ट्रंवाअश्वमेधः ॥ राष्ट्रेखलुवाएतेव्यायच्छंते ॥ येऽश्वंमेध्यंरक्षंति ॥ तेषांयउदृचं
गच्छंति ॥ राष्ट्रादेवतेराष्ट्रंगच्छंति ॥ अथयउदृचंनगच्छंति ॥ ४ ॥ राष्ट्रादेवतेव्यवच्छिद्यंते ॥ परा
वाएषसिच्यते ॥ योऽबलोऽश्वमेधेनयजते ॥ यदमित्राअश्वंविंदेरन् ॥ हन्येतास्ययज्ञः ॥ चतुःशतारक्षं
ति ॥ यज्ञस्याघाताय ॥ अथान्यमानीयप्रोक्षेयुः ॥ सैवततःप्रायश्चित्तिः ॥ ५ ॥ गच्छतिभवतःपत्सु

जुहोतिनगच्छंतिनवच ॥ ९ ॥ ॥ प्रजापतिरकामयताश्वमेधेनयजेयेति ॥ सतपोतप्यत ॥ तस्य तेपानस्य ॥ सप्तात्मनोदेवताउदक्रामन् ॥ सादीक्षाभवत् ॥ सएतानिवैश्वदेवान्यपश्यत् ॥ तान्यजु होत् ॥ तैर्वैसदीक्षामवारुंध ॥ यद्वैश्वदेवानिजुहोति ॥ दीक्षामेवतैर्यजमानोवरुंधे ॥ १ ॥ सप्तजुहो ति॥सप्तहिताद्देवताउदक्रामन् ॥ अन्वहंजुहोति ॥ अन्वहमेवदीक्षामवरुंधे ॥ त्रीणिवैश्वदेवानिजुहो ति ॥ चत्वार्यौद्ग्रहणानि ॥ सप्तसंपद्यंते ॥ सप्तवैशीर्षण्याःप्राणाः ॥ प्राणादीक्षा ॥ प्राणैरेवप्राणा न्दीक्षामवरुंधे ॥ २ ॥ एकविंशतिंवैश्वदेवानिजुहोति ॥ एकविंशतिर्वैदेवलोकाः ॥ द्वादशमा सा.पंचर्तवः ॥ त्रयइमेलोकाः ॥ असावादित्यएकविंशः ॥ एषसुवर्गोलोकः ॥ तद्दैव्यंक्षत्रं ॥ सा श्रीः ॥ तद्ब्रध्नस्यविष्टपं ॥ तत्स्वाराज्यमुच्यते ॥ ३ ॥ त्रिंशतमौद्ग्रहणानिजुहोति ॥ त्रिंशदक्षरा विराट् ॥ अन्नंविराट् ॥ विराजैवान्नाद्यमवरुंधे॥ त्रेधाविभज्यदेवताजुहोति ॥ त्र्यावृतोवैदेवाः ॥ त्र्या वृतइमेलोकाः ॥ एषांलोकानामाप्त्यै ॥ एषांलोकानांक्लृप्त्यै ॥ अपवाएतस्मात्प्राणाःक्रामंति ॥ ४॥ योदीक्षामतिरेचयंति ॥ सप्ताहंप्रचरंति ॥ सप्तवैशीर्षण्याःप्राणाः ॥ प्राणादीक्षा ॥ प्राणैरेवप्राणान्दी क्षामवरुंधे ॥ पूर्णाहुतिमुत्तमांजुहोति ॥ सर्वंवैपूर्णाहुतिः ॥ सर्वमेवाप्नोति ॥ अथोइयंवैपूर्णाहुतिः ॥ अस्यामेवप्रतितिष्ठति ॥ ५ ॥ रुंधेप्राणान्दीक्षामवरुंधउच्यतेक्रामंति.तिष्ठति ॥ १० ॥ प्रजापतिरश्वमे

धमंसृजत ॥ तꣳसृष्टंनकिंचनोदंयच्छत् ॥ तंवैश्वदेवान्येवोदंयच्छन् ॥ यद्वैश्वदेवानिंजुहोति ॥ यज्ञ
स्योद्यत्यै ॥ स्वाहाधिमाधीतायस्वाहा ॥ स्वाहाधीतंमनसेस्वाहा ॥ स्वाहामनःप्रजापतयेस्वाहा ॥
कायस्वाहाकस्मैस्वाहाकतमस्मैस्वाहेतिंप्राजापत्येमुख्येंभवतः ॥ प्रजापतिमुखाभिरेवैनंदेवताभिरुद्यं
च्छते ॥ १ ॥ अदित्यैस्वाहादित्यैमह्यैस्वाहादित्यैसुमृडीकायैस्वाहेत्यांहा ॥ इयंवाअदितिः ॥ अ
स्याएवैनंप्रतिष्ठायोद्यच्छते ॥ सरस्वत्यैस्वाहासरस्वत्यैबृहत्यैस्वाहासरस्वत्यैपावकायैस्वाहेत्यांह ॥ वाग्वै
सरस्वती ॥ वाचैवैनमुद्यच्छते ॥ पूष्णेस्वाहापूष्णेप्रंपथ्यायस्वाहापूष्णेनरंधिषायस्वाहेत्यांह ॥ पश
वोवैपूषा ॥ पशुभिरेवैनमुद्यच्छते ॥ त्वष्ट्रेस्वाहात्वष्ट्रेतुरीपायस्वाहात्वष्ट्रेपुरुरूपायस्वाहेत्यांह ॥ २ ॥ त्वष्टा
वैपंशूनांमिथुनानांꣳरूपकृत् ॥ रूपमेवपशुषुंदधाति ॥ अथोरूपैरेवैनमुद्यच्छते ॥ विष्णवेस्वा
हाविष्णवेनिखुर्यपायस्वाहाविष्णवेनिभूयपायस्वाहेत्यांह ॥ यज्ञोवैविष्णुः ॥ यज्ञायैवैनमुद्यच्छते ॥
पूर्णाहुतिमुत्तमांजुहोति ॥ प्रत्युत्तब्ध्यैसयत्वाय ॥ ३ ॥ यच्छतेपुरुरूपायस्वाहेत्यांहाष्टौच ॥ ११ ॥
सावित्रमष्टाकपालंप्रातर्निर्वपति ॥ अष्टाक्षरागायत्री ॥ गायत्रंप्रातःसवनं ॥ प्रातःसवनादेवैनंगाय
त्रियाश्छंदसोधिनिर्मिमीते ॥ अथोप्रातःसवनमेवतेनाप्नोति ॥ गायत्रींछंदः ॥ सवित्रेप्रसवित्रएकादश

कपालंमध्यंदिने ॥ एकादशाक्षरात्रिष्टुप् ॥ त्रैष्टुभंमाध्यंदिनश्सवनं ॥ माध्यंदिनात्तेवैनश्सवनात्रिष्टुभ
श्छंदसोधिनिर्मिमीते ॥ १ ॥ अथोमाध्यंदिनमेवसवनंतेनाप्नोति ॥ त्रिष्टुभंछंदः ॥ सवित्रआसावित्रे
द्वादशकपालमपराह्णे ॥ द्वादशाक्षराजगती ॥ जागतंतृतीयसवनं ॥ तृतीयसवनादेवैनंजगत्याश्छंद
सोधिनिर्मिमीते ॥ अथोतृतीयसवनमेवतेनाप्नोति ॥ जगतींछंदः ॥ ईश्वरोवाअश्वःप्रमुक्तःपरांपराव
तंगंतोः ॥ इहधृतिःस्वाहेहविधृतिःस्वाहेहरंतिःस्वाहेहरमतिःस्वाहेतिचतस्रआहुतीर्जुहोति ॥ २ ॥
चतस्रोदिशः ॥ दिग्भिरेवैनंपरिगृह्णाति ॥ आश्वत्थोव्रजोभवति ॥ प्रजापतिर्देवेभ्योनिलायत ॥ अ
श्वोरूपंकृत्वा ॥ सोश्वत्थेसंवत्सरमतिष्ठत् ॥ तदश्वत्थस्याश्वत्थत्वं ॥ यदाश्वत्थोव्रजोभवति ॥ स्वएव
वैनंयोनौप्रतिष्ठापयति ॥ ३ ॥ त्रिष्टुभश्छंदसोधिनिर्मिमीतेजुहोतिनवच ॥ १२ ॥ आब्रह्मन्ब्राह्मणो
ब्रह्मवर्चसीजायतामित्याह ॥ ब्राह्मणएवब्रह्मवर्चसंदधाति ॥ तस्मात्पुराब्राह्मणोब्रह्मवर्चस्यजायत ॥
आस्मिन्राष्ट्रेराजन्यइषव्यःशूरोमहारथोजायतामित्याह ॥ राजन्यएवशौर्यंमहिमानंदधाति ॥ तस्मा
त्पुराराजन्यइषव्यःशूरोमहारथोजायत ॥ दोग्ध्रीधेनुरित्याह ॥ धेन्वामेवपयोदधाति ॥ तस्मात्पुरादो
ग्ध्रीधेनुरजायत ॥ वोढानड्वानित्याह ॥ १ ॥ अनडुह्येववीर्यंदधाति ॥ तस्मात्पुरावोढानड्वानजाय

त ॥ आशुःसप्तिरित्याह ॥ अश्वएवजवंदधाति ॥ तस्मात्पुराशुरश्वोजायत ॥ पुरंधिर्योषेत्याह ॥ योषित्येवरूपंदधाति ॥ तस्मात्स्त्रीयुवतिःप्रियाभावुका ॥ जिष्णूरथेष्ठाइत्याह ॥ आहवैतत्रजिष्णूरथेष्ठाजायते ॥ २ ॥ यत्रैतेनयज्ञेनयजंते ॥ सभेयोयुवेत्याह ॥ योवैपूर्ववयसी ॥ ससभेयोयुवा ॥ तस्माद्युवापुमान्प्रियोभावुकः ॥ आस्ययजमानस्यवीरोजायतामित्याह ॥ आहवैतत्रयजमानस्य वीरोजायते ॥ यत्रैतेनयज्ञेनयजंते ॥ निकामेनिकामेनःपर्जन्योवर्षत्वित्याह ॥ निकामेनिकामेहवैतत्र पर्जन्योवर्षति॥ ३ ॥यत्रैतेनयज्ञेनयजंते ॥ फलिन्योनओषधयःपच्यंतामित्याह ॥ फलिन्योहवैतत्रौषधयः पच्यंते ॥ यत्रैतेनयज्ञेनयजंते ॥ योगक्षेमोनःकल्पतामित्याह ॥ कल्पतेहवैतत्रप्रजाभ्योयोगक्षेमः ॥ यत्रैतेनयज्ञेनयजंते ॥ ४ ॥ अनड्वानित्याहजायतेवर्षति सप्त च ॥ १३ ॥ प्रजापतिर्देवेभ्योयज्ञान्व्यादिशत् ॥ सआत्मन्नश्वमेधमधत्त ॥ तंदेवाअब्रुवन् ॥ एषवावयज्ञः ॥ यदश्वमेधः ॥ अप्येवनोत्रास्त्विति ॥ तेभ्यएतानन्नहोमान्प्रायच्छत् ॥ तान्जुहोत् ॥ तैर्वैसदेवानप्रीणात् ॥ यदन्नहोमान्जुहोति ॥ १ ॥ देवानेवतैर्यजमानःप्रीणाति ॥ आज्येनजुहोति ॥ अग्नेर्वाएतद्रूपं ॥ यदाज्यं ॥ यदाज्येनजुहोति ॥ अग्निमेवतत्प्रीणाति ॥ मधुनाजुहोति ॥ महत्यैवाएतद्देवतायैरूपं ॥ यन्मधु ॥ यन्म

धुनाजुहोति ॥ २ ॥ महतामेवतद्देवतांप्रीणाति ॥ तंडुलैर्जुहोति ॥ वसूनांवाएतद्रूपं ॥ यत्तंडुलाः ॥ यत्तंडुलैर्जुहोति ॥ वसूनेवतत्प्रीणाति ॥ पृथुकैर्जुहोति ॥ रुद्राणांवाएतद्रूपं ॥ यत्पृथुकाः ॥ यत्पृथुकैर्जुहोति ॥ ३ ॥ रुद्रानेवतत्प्रीणाति ॥ लाजैर्जुहोति ॥ आदित्यानांवाएतद्रूपं ॥ यल्लाजाः ॥ यल्लाजैर्जुहोति ॥ आदित्यानेवतत्प्रीणाति ॥ करंबैर्जुहोति ॥ विश्वेषांवाएतद्देवानांरूपं ॥ यत्करंबाः ॥ यत्करंबैर्जुहोति ॥ ४ ॥ विश्वानेवतद्देवान्प्रीणाति ॥ धानाभिर्जुहोति ॥ नक्षत्राणांवाएतद्रूपं ॥ यद्धानाः ॥ यद्धानाभिर्जुहोति ॥ नक्षत्राण्येवतत्प्रीणाति ॥ सक्तुभिर्जुहोति ॥ प्रजापतेर्वाएतद्रूपं ॥ यत्सक्तवः ॥ यत्सक्तुभिर्जुहोति ॥ ५ ॥ प्रजापतिमेवतत्प्रीणाति ॥ मसूस्यैर्जुहोति ॥ सर्वासांवाएतद्देवतानांरूपं ॥ यन्मसूस्यानि ॥ यन्मसूस्यैर्जुहोति ॥ सर्वाएवतद्देवताःप्रीणाति ॥ प्रियंगुतंडुलैर्जुहोति ॥ प्रियांगाह्वैनामैते ॥ एतैर्वैदेवाअश्वस्यांगानिसमदधुः ॥ यत्प्रियंगुतंडुलैर्जुहोति ॥ अश्वस्यैवांगानिसंदधाति ॥ दशान्नानिजुहोति ॥ दशाक्षराविराट् ॥ विराट्कृत्स्नस्यान्नाद्यस्यावरुध्यै ॥ ६ ॥ जुहोतिनगुंनाजुहोतिपृथुकैर्जुहोतिकरंबैर्जुहोतिसक्तुभिर्जुहोतिप्रियंगुतंडुलैर्जुहोतिचत्वारिच ॥ १२ ॥ ॥ प्रजा

पतिरश्वमेधमसृजत ॥ तꣳसृष्टꣳरक्षाꣳस्यजिघाꣳसन् ॥ सएतान्प्रजापतिर्नक्तꣳहोमानपश्यत् ॥ तानं जुहोत् ॥ तैर्वैसयज्ञाद्रक्षाꣳस्यपाहन् ॥ यन्नक्तꣳहोमान्जुहोति ॥ यज्ञादेवतैर्यजमानोरक्षाꣳस्यपहंति ॥ आज्येनजुहोति ॥ वज्रोवाआज्यं ॥ वज्रेणैवयज्ञाद्रक्षाꣳस्यपहंति ॥ १ ॥ आज्यस्यप्रतिपदंकरोति ॥ प्राणोवाआज्यं ॥ मुखतएवास्यप्राणंदधाति ॥ अन्नहोमान्जुहोति ॥ शरीरंवदेवावरुंधे ॥ व्युत्यासंजुहोति ॥ उभयस्यावरुध्यै ॥ नक्तंजुहोति ॥ रक्षसामपहत्यै ॥ आज्येनांततोजुहोति ॥ २ ॥ प्राणोवाआज्यं ॥ उभयतएवास्यप्राणंदधाति ॥ पुरस्ताच्चोपरिष्टाच्च ॥ एकस्मैस्वाहेत्याह ॥ अस्मिन्नेव लोकेप्रतितिष्ठति ॥ द्वाभ्याꣳस्वाहेत्याह ॥ अमुष्मिन्नेवलोकेप्रतितिष्ठति ॥ उभयोरेवलोकयोःप्रतितिष्ठति ॥ अस्मिꣳश्चामुष्मिꣳश्च ॥ शतायस्वाहेत्याह ॥ शतायुर्वैपुरुषःशतवीर्यः ॥ आयुरेववीर्यमवरुंधे ॥ सहस्रायस्वाहेत्याह ॥ आयुर्वैसहस्रं ॥ आयुरेवावरुंधे ॥ सर्वस्मैस्वाहेत्याह ॥ अपरिमितमेवावरुंधे ॥ ३ ॥ एवयज्ञाद्रक्षाꣳस्यपहत्यंततोजुहोतिशतायस्वाहेत्याहसप्तच ॥ १५ ॥

॥ प्रजापतिंवाएष ईप्सतीत्याहुः ॥ योश्वमेधेनयजतइति ॥ अथोआहुः ॥ सर्वाणिभूतानीति ॥ एकस्मैस्वाहेत्याह ॥ प्रजापतिर्वाएकः ॥ तमेवाप्नोति ॥ एकस्मैस्वाहाद्वाभ्याꣳस्वाहेत्यभिपूर्वमाहुतीर्जुहोति ॥ अभिपूर्वमे

वसुवर्गंलोकमेति ॥ एकोत्तरंजुहोति ॥ १ ॥ एकवदेवसुवर्गंलोकमेति ॥ संततंजुहोति ॥ सुवर्गस्य
लोकस्यसंतत्यै ॥ शतायस्वाहेत्याह ॥ शतायुर्वैपुरुषःशतवीर्यः ॥ आयुरेववीर्यमवरुंधे ॥ सहस्राय
स्वाहेत्याह ॥ आयुर्वैसहस्रं ॥ आयुरेवावरुंधे ॥ अयुतायस्वाहानियुतायस्वाहाप्रयुतायस्वा
हेत्याह ॥ २ ॥ त्रयइमेलोकाः ॥ इमानेवलोकानवरुंधे ॥ अर्बुदायस्वाहेत्याह ॥ वाग्वाअर्बुदं ॥
वाचमेवावरुंधे ॥ न्यर्बुदायस्वाहेत्याह ॥ योवैवाचोभूमा ॥ तन्न्यर्बुदं ॥ वाचएवभूमानमवरुंधे ॥ स
मुद्रायस्वाहेत्याह ॥ ३ ॥ समुद्रमेवाप्नोति ॥ मध्यायस्वाहेत्याह ॥ मध्यमेवाप्नोति ॥ अंतायस्वाहे
त्याह ॥ अंतमेवाप्नोति ॥ परार्द्धायस्वाहेत्याह ॥ परार्द्धमेवाप्नोति ॥ उषसेस्वाहाव्युष्टयैस्वाहेत्याह ॥
रात्रिर्वाउषाः ॥ अहर्व्युष्टिः ॥ अहोरात्रेएवावरुंधे ॥ अथोअहोरात्रयोरेवप्रतितिष्ठति ॥ तायदुभयोर्दि
वावानक्तंवाजुहुयात् ॥ अहोरात्रेमोहयेत् ॥ उषसेस्वाहाव्युष्टयैस्वाहोदेष्यतेस्वाहोद्यतेस्वाहेत्यनुदिते
जुहोति ॥ उदितायस्वाहासुवर्गायस्वाहालोकायस्वाहेत्युदितेजुहोति ॥ अहोरात्रयोरव्यतिमोहा
य ॥ ४ ॥ एकोत्तरंजुहोतिप्रयुतायस्वाहेत्याहसमुद्रायस्वाहेत्याहाहर्व्युष्टिःसप्तच ॥ १६ ॥ ॥ वि
भूर्मात्राप्रभूः पित्रेत्यश्वनामानिजुहोति ॥ उभयोरेवैनंलोकयोर्नामधेयंगमयति ॥ आयनायस्वाहाप्राय

णायस्वाहेत्युंद्रावान्जुंहोति ॥ सर्वमेवेनमस्कंन्ꣳसुवर्गंलोकंगंमयति ॥ अग्नयेस्वाहासोमायस्वाहेति
पूर्वहोमान्जुंहोति ॥ पूर्वएवद्विषंतंभ्रातृंव्यमतिक्रामति ॥ पृथिव्यैस्वाहांतरिक्षायस्वाहेत्याह ॥ यथा
यजुरेवैतत् ॥ अग्नयेस्वाहासोमायस्वाहेतिपूर्वदीक्षाजुंहोति ॥ पूर्वएवद्विषंतंभ्रातृंव्यमतिक्रामति ॥
॥ १ ॥ पृथिव्यैस्वाहांतरिक्षायस्वाहेत्येकविꣳशिनींदीक्षांजुंहोति ॥ एकविꣳशतिर्वैदेवलोकाः ॥ द्वा
दशमासाःपंचर्त्तवः ॥ त्रयंइमेलोकाः ॥ असावादित्यएकविꣳशः ॥ एषसुंवर्गोलोकः ॥ सुवर्गस्यंलो
कस्यसमंष्ट्यै ॥ भुवोदेवानांकर्मणेत्यृंतुदीक्षाजुंहोति ॥ ऋतूनेवास्मैकल्पयति ॥ अग्नयेस्वाहांवायवे
स्वाहेतिंजुहोत्यनंतरित्यै ॥ २ ॥अर्वाङ्यज्ञःसंक्रामत्वित्याप्तींजुंहोति ॥ सुवर्गस्यंलोकस्याप्त्यै ॥ भूतं
भव्यंभविष्यदितिपर्याप्तींजुंहोति ॥ सुवर्गस्यंलोकस्यपर्याप्त्यै ॥ आमेगृहाभवंत्वित्याभूंजुंहोति ॥ सु
वर्गस्यंलोकस्याभूंत्यै ॥ अग्निनातपोन्वंभवदित्यंनुभूंजुंहोति ॥ सुवर्गस्यंलोकस्यानुंभूत्यै ॥ स्वाहाधि
माधीतायस्वाहेतिसमंस्तानिवैश्वदेवानिंजुहोति ॥ समंस्तमेवद्विषंतंभ्रातृंव्यमतिक्रामति ॥ ३ ॥ द
द्भ्यःस्वाहाहनूभ्याꣳस्वाहेत्यंगहोमान्जुंहोति ॥ अंगेअंगेवैपुरुषस्यपाप्मोपश्लिष्टः ॥ अंगादंगादेवैनंपा
प्मनस्तेनमुंचति ॥ अंज्येतायस्वाहांकृष्णायस्वाहांश्वेतायस्वाहेत्यंश्वरूपाणिंजुहोति ॥ अपरेवैनꣳस

मर्द्धयति ॥ ओषधीभ्यःस्वाहामूलेभ्यः स्वाहेत्योषधिहोमान्जुहोति ॥ द्वय्योवाओषधयः ॥ पुष्पे भ्योन्याःफलंगृह्णंति ॥ मूलेभ्योन्याः ॥ ताएवोभयीरवरुंधे ॥ ४ ॥ वनस्पतिभ्यःस्वाहेतिवनस्पतिहो मान्जुहोति ॥ आरण्यस्यान्नाद्यस्यावरुध्यै ॥ मेषस्त्वापचतैरवत्वित्यपाव्यानिजुहोति ॥ प्राणावैदेवा अपाव्याः ॥ प्राणानेवावरुंधे ॥ कूप्याभ्यःस्वाहाद्यःस्वाहेत्यपाᳪहोमान्जुहोति ॥ अप्सुवाआपः ॥ अन्नंवाआपः ॥ अद्भ्योवाअन्नंजायते ॥ यदेवाद्भ्योन्नंजायते ॥ तदवरुंधे ॥ ५ ॥ पूर्वदीक्षांजुहोति पूर्वएवाद्विषंतंभ्रातृव्यमतिक्रामत्यनंतरित्यैक्रामतिरुंधेजायंतएकंच ॥ १७ ॥ अंभाᳪसिजुहोति ॥ अ यंवैलोकोंभाᳪसि ॥ तस्यवसवोधिपतयः ॥ अग्निर्ज्योतिः ॥ यदंभाᳪसिजुहोति ॥ इममेवलोकमवरुं धे ॥ वसूनाᳪसायुज्यंगच्छति ॥ अग्निंज्योतिरवरुंधे ॥ नभाᳪसिजुहोति ॥ अंतरिक्षंवैनभाᳪसि ॥ १ ॥ तस्यरुद्राअधिपतयः ॥ वायुर्ज्योतिः ॥ यन्नभाᳪसिजुहोति ॥ अंतरिक्षमेवावरुंधे ॥ रुद्रा णाᳪसायुज्यंगच्छति ॥ वायुंज्योतिरवरुंधे ॥ महाᳪसिजुहोति ॥ असौवैलोकोमहाᳪसि ॥ तस्यादित्याअ धिपतयः ॥ सूर्योज्योतिः ॥ २ ॥ यन्महाᳪसिजुहोति ॥ अमुमेवलोकमवरुंधे ॥ आदित्यानाᳪसायु ज्यंगच्छति ॥ सूर्यंज्योतिरवरुंधे ॥ नमोराज्ञेनमोवरुणायेतियव्यानिजुहोति ॥ अन्नाद्यस्यावरुध्यै ॥

मयोभूर्वातोअभिव तूस्राइतिगव्यानिंजुहोति ॥ पशूनामवंरुध्यै ॥ प्राणायस्वाहाव्यानायस्वाहेतिंसंत
तिहोमान्जुंहोति ॥ सुवर्गस्यंलोकस्यसंतंत्यै ॥ ३ ॥ सितायस्वाहासिंतायस्वाहेतिप्रमुंक्तोर्जुहोति ॥
सुवर्गस्यंलोकस्यप्रमुंक्त्यै ॥ पृथिव्यैस्वाहांतरिंक्षायस्वाहेत्याह ॥ यथायजुरेवैतत् ॥ दत्वतेस्वाहादंत
कांयस्वाहेतिंशरीरहोमान्जुंहोति ॥ पितृलोकमेवतैर्यजंमानोवंरुंधे॥ कस्त्वांयुनक्तिसत्वांयुनक्त्विंतिंपरि
धीन्युंनक्ति ॥ इमेवैलोकाःपरिधयः ॥ इमानेवास्मैलोकान्युंनक्ति॥सुवर्गस्यंलोकस्यसमंष्टचै ॥ ४ ॥ यः
प्रांणतोयआत्मदाइतिंमहिमानौंजुहोति ॥ सुवर्गोवैलोकोमहः ॥ सुवर्गमेवताभ्यांलोकंयजमानोव
रुंधे ॥ आब्रह्मन्ब्राह्मणोब्रह्मवर्चसीजायतामितिसमंस्तानिब्रह्मवर्चसानिंजुहोति ॥ ब्रह्मवर्चसमेवतैर्य
जंमानोवंरुंधे ॥ जज्ञिबीजमितिंजुहोत्यनंतरित्यै ॥ अग्नयेसमंनमत्पृथिव्यैसमंनमदितिंसंनातिहोमान्जु
होति ॥ सुवर्गस्यंलोकस्यसंनंत्यै ॥ भूतायस्वाहांभविष्यतेस्वाहेतिंभूताभव्यौहोमौंजुहोति ॥ अयंवैलो
कोभूतं ॥ ५ ॥ असौभंविष्यत् ॥ अनयोरेवलोकयोःप्रतिंतिष्ठति ॥ सर्वस्याप्त्यै ॥ सर्वस्यावंरुध्यै ॥
यदक्रंदःप्रथमंजायमानइत्यश्वस्तोमीयंजुहोति ॥ सर्वस्याप्त्यै ॥ सर्वस्यजित्यै ॥ सर्वमेवतेनांप्रोति ॥
सर्वंजयति ॥ योश्वमेधेनयजंते ॥ ६ ॥ यउंचैनमेवंवेदं ॥ यज्ञꣳरक्षांꣳस्यजिघाꣳसन् ॥ सएतान्प्र

जापतिर्नक्त४्होमानपश्यत् ॥ तानंजुहोत् ॥ तैर्वैसयज्ञाद्रक्षा४्स्यपाहन् ॥ यन्नक्त४्होमान्जुहोति ॥
यज्ञादेवतैर्यजमानोरक्षा४्स्यपहंति ॥ उषसेस्वाहाव्युंष्ट्यैस्वाहेत्यंततोजुहोति ॥ सुवर्गस्यंलोकस्यस
मंष्ट्यै ॥ ७ ॥ ॥ वैनभा४्सिसूर्योज्योतिःसंतत्यैसमंष्ठ्यैभूतंय जंतेनवंच ॥ १८ ॥ ॥ एकयूपो
वैकादशिनीवा ॥ अन्येषांयज्ञानांयूपाभवंति ॥ एकवि४्शिन्यश्वमेधस्य ॥ सुवर्गस्यंलोकस्याभिजित्यै॥
बैल्वोवांखादिरोवांपालाशोवां ॥ अन्येषांयज्ञक्रतूनांयूपाभवंति ॥ राज्जुंदालएकवि४्शत्यरत्निरश्वमेध
स्यं ॥ सुवर्गस्यंलोकस्यसमंष्ट्यै ॥ नान्येषांपशूनांतेजन्याअंवद्यंति ॥ अवंद्यंत्यश्वस्य ॥ १ ॥ पा
प्मावैतेजनी ॥ पाप्मनोपहत्यै ॥ प्लक्षशाखायामन्येषांपशूनामंवद्यंति ॥ वेतसशाखायामश्वस्य ॥
अप्सुयोनिर्वाअश्वः ॥ अप्सुजोवेतसः ॥ स्वएवास्ययोनावंवद्यति ॥ यूपेषुग्राम्यान्पशून्नियुंजंति ॥
आरोकेष्वारण्यांधारयंति ॥ पशूनांव्यावृत्त्यै ॥ आग्राम्यान्पशून्लभंते ॥ प्रारण्यान्त्सृजंति ॥ पाप्मनो
पंहत्यै ॥ २ ॥ अश्वस्यव्यावृत्त्यैत्रीणिंच ॥ १९ ॥ ॥ राज्जुंदालमग्निष्ठंमिनोति ॥ भ्रूणहत्यायाअप
हत्यै ॥ पौतुद्रवावभितोभवतः ॥ पुण्यस्यगंधस्यावरुध्यै ॥ भ्रूणहत्यामेवास्मादपहत्य ॥ पुण्येनगं

धेनोभयतःपरिगृह्णाति ॥ षड्बैल्वाभवंति ॥ ब्रह्मवर्चसस्यावरुध्यै ॥ षट्खादिराः ॥ तेजसोवरुध्यै ॥
॥ १ ॥ षट्पालाशाः ॥ सामपीथस्यावरुध्यै ॥ एकविंशतिःसंपद्यंते ॥ एकविंशतिर्वैदेवलोकाः
॥ द्वादशमासाःपंचर्त्तवः ॥ त्रयइमेलोकाः ॥ असावादित्यएकविंशः ॥ एषसुवर्गोलोकः ॥ सुवर्ग
स्यलोकस्यसमष्टयै ॥ शतंपशवोभवंति ॥ २ ॥ शतायुःपुरुषःशतेंद्रियः ॥ आयुष्येवेंद्रियेप्रातितिष्ठति
॥ सर्ववाअश्वमेध्याप्नोति ॥ अपरिमिताभवंति ॥ अपरिमितस्यावरुध्यै ॥ ब्रह्मवादिनोवदंति ॥ क
स्मात्सत्यात् ॥ दक्षिणतोन्येषांपशूनामवद्यंति ॥ उत्तरतोश्वस्येति ॥ वारुणोवाअश्वः ॥ ३ ॥ एषा
वैवरुणस्यदिक् ॥ स्वायामेवास्यदिश्यवद्यति ॥ यदितरेषांपशूनामवद्यति ॥ शतदेवत्यंतेनावरुंधे ॥
॥ चितेंध्नावधिवैतसेकटेश्वंचिनोति ॥ अप्सुयोनिर्वाअश्वः ॥ अप्सुजोवेतसः ॥ स्वएवैनंयोनौप्रतिष्ठा
पयति ॥ पुरस्तात्प्रत्यंचंतूपरंचिनोति ॥ पश्चात्प्राचीनंगोमृगं ॥ ४ ॥ प्राणापानावेवास्मिन्त्सम्यंचौ
दधाति ॥ अश्वंतूपरंगोमृगमितिसर्वहुतएतांजुहोति ॥ एषांलोकानामभिजित्यै ॥ आत्मनाभिजुहो
ति ॥ सात्मानमेवैनꣳसतनुंकरोति ॥ सात्मामुष्मिँल्लोकेभवति ॥ यएवंवेद ॥ अथोवसोरेवधारांतेना
वरुंधे ॥ इलुवर्दायस्वाहाबलिवर्दायस्वाहेत्याह ॥ संवत्सरोवाइलुवर्दः ॥ परिवत्सरोबलिवर्दः ॥ सं

वत्सरादेवपरिवत्सरादायुरवरुंधे ॥ आयुरेवास्मिन्दधाति ॥ तस्मादश्वमेधयाजी जरसाविस्रसामुलांके
मेति ॥ ५ ॥ तेजसोवरुध्यैभवंत्यश्वोगोमृगमिलुवद्दंश्चत्वारिच ॥ २० ॥ ॥ एकविंशोग्निर्भव
ति ॥ एकविंश स्तोमः ॥ एकविंशतिर्यूपाः ॥ यथावाअश्वावर्षभावावृषाणःसंस्फुरेरन् ॥ एवमे
तत्स्तोमाःसंस्फुरंते ॥ यदेकविंशाः ॥ तेयत्संमृच्छेरन् ॥ हन्येतास्ययज्ञः ॥ द्वादशएवाग्निःस्या
दित्याहुः ॥ द्वादशःस्तोमः ॥ १ ॥ एकादशयूपाः ॥ यद्वादशोग्निर्भवंति ॥ द्वादशमासाःसंव
त्सरः ॥ संवत्सरेणैवास्माअन्नमवरुंधे ॥ यद्दशयूपाभवंति ॥ दशाक्षराविराट् ॥ अन्नंविराट् ॥ विरा
जैवान्नाद्यमवरुंधे ॥ यएकादशः ॥ स्तनएवास्यैसः ॥ २ ॥ दुहएवैनांतेन ॥ तदाहुः ॥ यद्वादशो
ग्निःस्याद्द्वादशःस्तोमएकादशयूपाः ॥ यथास्थूरिणायायात् ॥ तादृक्तत् ॥ एकविंशएवाग्निःस्यादि
त्याहुः ॥ एकविंशस्तोमः ॥ एकविंशतिर्यूपाः ॥ यथाप्रष्टिभिर्याति ॥ तादृगेवतत् ॥ ३ ॥ यो
वाअश्वमेधेतिस्रःककुभोवेद ॥ ककुद्धराज्ञांभवति ॥ एकविंशोग्निर्भवति ॥ एकविंशस्तोमः ॥
एकविंशतिर्यूपाः ॥ एतावाअश्वमेधेतिस्रःककुभः ॥ यएवंवेद ॥ ककुद्धराज्ञांभवति ॥ योवाअश्व
मेधेत्रीणिशीर्षाणिवेद ॥ शिरोहराज्ञांभवति ॥ एकविंशोग्निर्भवति ॥ एकविंशस्तोमः ॥ एकवि

ऽशतिर्यूपाः ॥ एतानिवाअश्वमेधत्रीणिशीर्षाणि ॥ यएवंवेद ॥ शिरोहराज्ञांभवति ॥ ४ ॥ द्वादश
स्तोमःसएवतच्छिरोहराज्ञांभवतिषट्च ॥ २१ ॥ ॥ देवावाअश्वमेधेपवमाने ॥ सुवर्गलोकंनप्राजा
नन् ॥ तमश्वःप्राजानात् ॥ यदश्वमेधेश्वेनमेध्येनोदंचोबहिष्पवमानंसर्पंति ॥ सुवर्गस्यलोकस्यप्रज्ञा
त्यै ॥ नवैमनुष्यःसुवर्गलोकमंजसावेद ॥ अश्वोवैसुवर्गलोकमंजसावेद ॥ यदुद्गातोद्गायेत् ॥ यथाक्षे
त्रज्ञोन्येनपथाप्रतिपादयेत् ॥ तादृक्तत् ॥ १ ॥ उद्गातारमपरुध्य ॥ अश्वमुद्गीथायवृणीते ॥ यथाक्षे
त्रज्ञोजंसानयति ॥ एवमेवैनमश्वःसुवर्गलोकमंजसानयति ॥ पुच्छमन्वारभंते ॥ सुवर्गस्यलोकस्य
समष्ट्यै ॥ हिंकरोति ॥ सामैवाकः ॥ हिंकरोति ॥ उद्गीथएवास्यसः ॥ २ ॥ वडवाउपरुंधंति ॥
मिथुनत्वायप्रजात्यै ॥ अथोयथोपगातारउपगायंति ॥ तादृगेवतत् ॥ उदगासीदश्वोमेध्यइत्याह ॥
प्राजापत्योवाअश्वः ॥ प्रजापतिरुद्गीथः ॥ उद्गीथमेवावरुंधे ॥ अथोऋक्सामयोरेवप्रतितिष्ठति ॥
हिरण्येनोपाकरोति ॥ ज्योतिर्वैहिरण्यं ॥ ज्योतिरेवमुखतोदधाति ॥ यजमानेचप्रजासुच ॥ अथो
हिरण्यज्योतिरेवयजमानःसुवर्गलोकमेति ॥ ३ ॥ तत्सदुपाकरोतिचत्वारिच ॥ २२ ॥ ॥ पुरुषो
वैयज्ञः ॥ यज्ञःप्रजापतिः ॥ यदश्वेपशून्नियुंजंति ॥ यज्ञादेवतद्यज्ञंप्रयुंक्ते ॥ अश्वंतूपरंगोमृगं ॥

तानाग्निष्ठ आलंभते ॥ सेनामुखमेव तत्सꣳश्यंति ॥ तस्माद्राजमुखं भीष्मं भावुकं ॥ आग्नेयं कृष्णग्रीवं पुर
स्ताल्ललाटे ॥ पूर्वाग्निमेव तं कुरुते ॥ १ ॥ तस्मात्पूर्वाग्निं पुरस्तात्स्थापयंति ॥ पौष्णमन्वंचं ॥ अन्नं वै
पूषा ॥ तस्मात्पूर्वाग्नावाहार्यमाहरंति ॥ ऐंद्रापौष्णमुपरिष्टात् ॥ ऐंद्रो वै राजन्योऽन्नं पूषा ॥ अन्नाद्येनैवैनं
मुभयतः परिगृह्णाति ॥ तस्माद्राजन्योऽन्नादो भावुकः ॥ आग्नेयौ कृष्णग्रीवौ बाहुवोः ॥ बाहुवोरेव वीर्यं ध
त्ते ॥ २ ॥ तस्माद्राजन्यो बाहुबली भावुकः ॥ त्वाष्ट्रौ लोमशसक्थौ सक्थ्योः ॥ सक्थ्योरेव वीर्यं धत्ते ॥
तस्माद्राजन्य ऊरुबली भावुकः ॥ शितिपृष्ठौ बार्हस्पत्यौ पृष्ठे ॥ ब्रह्मवर्चसमेवोपरिष्टाद्धत्ते ॥ अथो क
वचं एवैते अभितः पर्यूहते ॥ तस्माद्राजन्यः सन्नद्धो वीर्यं करोति ॥ धात्रं पृषोदरमधस्तात् ॥ प्रतिष्ठामेवैतां
कुरुते ॥ अथो इयं वै धाता ॥ अस्यामेव प्रतितिष्ठति ॥ सौर्यं बलक्षं पुच्छे ॥ उत्सेधमेव तं कुरुते ॥ तस्मा
दुत्सेधं भये प्रजा अभिसꣳश्रयंति ॥ ३ ॥ कुरुते धत्ते कुरुते पंच च ॥ २३ ॥ ॥ सांग्रहण्या चतुष्टय्यो
यो वै यः पितुश्चत्वारो यथा निक्तं प्रजापतये त्वा यथा प्रोक्षितं विभूराह प्रजापतिरकामयताश्वमेधेन प्रजापतिर्न
किंचन सांवित्रमा ब्रह्मन्प्रजापतिर्देवेभ्यः प्रजापती रक्षांꣳसि प्रजापतिमीप्सति विभूरश्व नामान्यं भांꣳस्येकयू

पोरा लुदालमेकवि॒ꣳशोदेवाःपुरुषस्त्रयोविꣳशतिः ॥ २३ ॥ ॥ सांग्रहण्यातस्मादश्वमेधयाजयित्वापरे
मितायद्यज्ञमुखेयोदीक्षांदेवानेवतैस्त्रयंइमेसितायंप्राणापानावेवास्मिन्तस्माद्राजन्येएकनवतिः ॥ १ ॥
॥ हरिः ॐ ॥ ॥ प्रजापतिरश्वमेधमसृजत ॥ सोस्मात्सृष्टोपाक्रामत् ॥ तमष्टादशिभिर
नुप्रायुंक्त ॥ तमांप्नोत् ॥ तमाप्त्वाष्टादशिभिरवांरुध ॥ यदष्टादशिनआलभ्यंते ॥ यज्ञमेवतैराप्त्वायज
मानोवरुंधे ॥ संवत्सरस्यवाएषाप्रतिमा ॥ यदष्टादशिनः ॥ द्वादशमासाःपंचर्तवः ॥ १ ॥ संवत्सरो
ष्टादशः ॥ यदष्टादशिनआलभ्यंते ॥ संवत्सरमेवतैराप्त्वायजमानोवरुंधे ॥ अग्निष्ठंन्यान्पशूनुपाकरो
ति ॥ इतरेषुयूपेष्वष्टादशिनोजामित्वाय ॥ नवनवालभ्यंतेसवीर्यत्वाय ॥यदारण्यैःसꣳस्थापयेत्॥ व्यवं
स्येतांपितापुत्रौ ॥ व्यध्वानःक्रामेयुः ॥ विदूरंग्रामयोर्ग्रामांतौस्यातां ॥ २ ॥ ऋक्षीकाःपुरुषव्याघ्राःपरि
मोषिणआव्याधिनीस्तस्करा अरण्येष्वाजायेरन् ॥ तदाहुः ॥ अपशवोवाएते ॥ यदारण्याः ॥ यदार
ण्यैःसꣳस्थापयेत् ॥ क्षिप्रेयजमानमरण्यंमृतꣳहरेयुः ॥ अरण्यायतनाह्यारण्याःपशवइति ॥ यत्पशून्ना
लभेत ॥ अनवरुद्धाअस्यपशवःस्युः ॥ यत्पर्यग्निकृतानुत्सृजेत् ॥ ३ ॥ यज्ञवेशसंकुर्यात् ॥ यत्पशूना
लभंते ॥ तेनैवपशूनवरुंधे ॥ यत्पर्यग्निकृतानुत्सृजत्ययज्ञवेशसाय ॥ अवरुद्धाअस्यपशवोभवंति ॥

नयज्ञवेशसंभवति ॥ नयजमानमरण्यंमृतꣳहरंति ॥ ग्राम्यैःसꣳस्थापयति ॥ एतेवैपशवःक्षेमोनाम ॥
संपितापुत्राववस्यतः ॥ समध्वानःक्रामंति ॥ समंतिकंग्रामयोर्ग्रामांतौभवतः ॥ नर्क्षीकाःपुरुषव्याघ्राः
परिमोषिणआव्याधिनीस्तस्कराअरण्येष्वाजायंते ॥ ४ ॥ ऋतवःस्यातामुत्सृजेत्स्यतस्त्रोणिच ॥ १ ॥
प्रजापतिरकामयतोभौलोकाववरुंधीयेति ॥ सएतानुभयान्पशूनपश्यत् ॥ ग्राम्याꣳश्चारण्याꣳश्च ॥ ता
नालभत ॥ तैर्वैसउभौलोकाववारुंध ॥ ग्राम्यैरेवपशुभिरिमंलोकमवारुंध ॥ आरण्यैरमुं ॥ यद्ग्राम्या
न्पशूनालभंते ॥ इममेवतैर्लोकमवरुंधे ॥ यदारण्यान् ॥ १ ॥ अमुंतैः ॥ अनवरुद्धोवाएतस्यसंवत्स
रइत्याहुः ॥ यइतइतश्चातुर्मास्यानिसंवत्सरंप्रयुंक्तइति ॥ एतावान्वैसंवत्सरः ॥ यच्चातुर्मास्यानि ॥ य
देतेचातुर्मास्याःपशवआलभ्यंते ॥ प्रत्यक्षमेवतैःसंवत्सरंयजमानोवरुंधे ॥ विवाएषप्रजयापशुभिरृध्य
ते ॥ यःसंवत्सरंप्रयुंक्ते ॥ संवत्सरःसुवर्गोलोकः ॥ २ ॥ सुवर्गंतुलोकंनापराध्नोति ॥ प्रजावैपशवए
कादशिनी ॥ यदेतऐकादशिनाःपशवआलभ्यंते ॥ साक्षादेवप्रजांपशून्यजमानोवरुंधे ॥ प्रजापति
र्विराजमसृजत ॥ सासृष्टाश्वमेधंप्राविशत् ॥ तांदशिभिरनुप्रायुंक्त ॥ तामाप्नोत् ॥ तामाप्त्वादशिभिर

वांरुंध ॥ यद्दशिनंआलभ्यंते ॥ ३ ॥ विराजमेवतैराप्त्वायजमानोवंरुंधे ॥ एकादशद्दशत आलं
भ्यंते ॥ एकादशाक्षरात्रिष्टुप् ॥ त्रैष्टुभाःपशवंः ॥ पशूनेवावंरुंधे ॥ वैश्वदेवोवाअश्वंः ॥ नानादेवत्याः
पशवोंभवंति ॥ अश्वंस्यसर्वत्वाय ॥ नानारूपाभवंति ॥ तस्मान्नानारूपाःपशवंः ॥ बहुरूपा भवं
ति ॥ तस्माद्बहुरूपाःपशवःसमृंध्यै ॥ ४ ॥ ॥ आरण्यान्लोकोद्दशिनंआलभ्यंतेनानारूपाःपशवो
द्वेचं ॥ २ ॥ ॥ अस्मैवैलोकायंग्राम्याःपशवआलंभ्यंते ॥ अमुष्माआरण्याः ॥ यद्ग्राम्यान्पशूनालभं
ते ॥ इममेवतैर्लोकमवंरुंधे ॥ यदांरण्यान् ॥ अमुंतैः ॥ उभयांन्पशूनालंभते ॥ ग्राम्या॑श्चांरण्या॑
श्चं ॥ उभयोर्लोकयोरवंरुध्यै ॥ उभयांन्पशूनालंभते ॥ १ ॥ ग्राम्या॑श्चांरण्या॑श्चं ॥ उभयंस्यान्ना
द्यस्यावंरुध्यै ॥ उभयांन्पशूनालंभते ॥ ग्राम्या॑श्चांरण्या॑श्चं ॥ उभयेषांपशूनामवंरुध्यै ॥ त्रयंस्त्रयोभवंति ॥
त्रयंइमेलोकाः ॥ एषांलोकानामाप्त्यैं ॥ ब्रह्मवादिनोंवदंति ॥ कस्मांत्सत्यात् ॥ २ ॥ अस्मिन्लोके
बहवःकामाइतिं ॥ यत्संमानीभ्योदेवताभ्योन्येंन्येपशवंआलभ्यंतें ॥ अस्मिन्नेवतल्लोकेकामान्दधाति ॥
तस्मांदस्मिन्लोकेबहवःकामाः ॥ त्रयाणांत्रयाणा॑सहवपाजुंहोति ॥ त्र्यांवृतोवैदेवाः ॥ त्र्यांवृतइमेलो

काः ॥ एषांलोकानमाप्त्यै ॥ एषांलोकानांक्लृप्त्यै ॥ पर्यग्निकृतानारण्यानुत्सृजंत्यहिंसायै ॥ ३ ॥ उभयांन्पशूनालंभतेसत्यादाहिंसायै ॥ ३ ॥ ॥ युंजंतिब्रध्नमित्याह ॥ असौवाआदित्योब्रध्नः ॥ आदित्यमेवास्मैयुनक्ति ॥ अरुषमित्याह ॥ अग्निर्वाअरुषः ॥ अग्निमेवास्मैयुनक्ति ॥ चरंतमित्याह ॥ वायुर्वैचरन् ॥ वायुमेवास्मैयुनक्ति ॥ परितस्थुषइत्याह ॥ १ ॥ इमेवैलोकाःपरितस्थुषः ॥ इमानेवास्मैलोकान्युंनक्ति ॥ रोचंतेरोचनादिवीत्याह ॥ नक्षत्राणिवैरोचनादिवि ॥ नक्षत्राण्येवास्मैरोचयति ॥ युंजंत्यस्यकाम्येत्याह ॥ कामानेवास्मैयुनक्ति ॥ हरीविपक्षसेत्याह ॥ इमेवैहरीविपक्षसा ॥ इमेएवास्मैयुनक्ति ॥२॥ शोणाधृष्णूनृवाहसेत्याह ॥ अहोरात्रेवैनृवाहसा ॥ अहोरात्रेएवास्मैयुनक्ति ॥ एताएवास्मैदेवतायुनक्ति ॥ सुवर्गस्यलोकस्यसमष्ट्यै ॥ केतुंकृण्वन्नकेतवइतिध्वजंप्रतिमुंचति ॥ यशएवैनंराज्ञांगमयति ॥ जीमूतस्येवभवतिप्रतीकमित्याह ॥ यथायजुरेवैतत् ॥ येतेपंथानःसवितःपूर्व्यासइत्यध्वर्युर्यजमानंवाचयत्यभिजित्यै ॥३॥ परावाएतस्ययज्ञएति ॥ यस्यपशुरुपाकृतोन्यत्रवेद्याएति ॥ एतंस्तोतरेतेनपथापुनरश्वमावर्त्तयासिनइत्याह ॥ वायुर्वैस्तोता ॥ वायुमेवास्यपरस्ताद्दधात्यावृत्त्यै ॥ यथावैहविषोगृहीतस्यस्कंदति ॥ एवंवाएतदश्वस्यस्कंदति ॥ यदस्योपाकृतस्यलोमानिशीयंते ॥ यद्वालेषुकाचानावयंति ॥

लोमान्येवास्यतत्संभरंति ॥ ४ ॥ भूर्भुवःसुवरितिप्राजापत्याभिरावयंति ॥ प्राजापत्योवाअश्वः ॥ स्वयैवैनंदेवतयासमर्द्धयंति ॥ भूरितिमाहिषी ॥ भुवइतिवावाता ॥ सुवरितिपरिवृक्ती ॥ एषांलोकानामभिजित्यै ॥ हिरण्ययाःकाचाभवंति ॥ ज्योतिर्वैहिरण्यं ॥ राष्ट्रमश्वमेधः ॥ ५ ॥ ज्योतिश्चैवास्मैरा ष्ट्रंचसमीचीदधाति ॥ सहस्रंभवंति ॥ सहस्रसंमितःसुवर्गोलोकः ॥ सुवर्गस्यलोकस्याभिजित्यै ॥ अपवाएतस्मात्तेजइंद्रियंपशवःश्रीःक्रामंति ॥ योश्वमेधेनयजंते ॥ वसवस्त्वांजंतुगायत्रेणछंदसेतिमहिं ष्यभ्यनक्ति ॥ तेजोवाआज्यं ॥ तेजोगायत्री ॥ तेजसैवास्मैतेजोवरुंधे ॥ ६ ॥ रुद्रास्त्वांजंतु त्रैष्टुभेनछंदसेतिवावाता ॥ तेजोवाआज्यं ॥ इंद्रियंत्रिष्टुप् ॥ तेजसैवास्मांइंद्रियमवरुंधे ॥ आदित्यास्त्वांजंतुजागतेनछंदसेतिपरिवृक्ती ॥ तेजोवाआज्यं ॥ पशवोजगती ॥ तेजसैवास्मैपशूनवरुंधे ॥ पत्नयोभ्यंजंति ॥ श्रियावाएतद्रूपं ॥ ७ ॥ यत्पत्नयः ॥ श्रियमेवास्मिन्तद्दधाति ॥ नास्मात्तेजइंद्रि यंपशवःश्रीरपक्रामंति ॥ लाजी ३ न्छाची ३ न्यशोममां ३ इत्यतिरिक्तमन्नमश्वायोपाहरंति ॥ प्रजामेवान्नादींकुर्वते ॥ एतद्देवाअन्नमत्तेतदन्नमद्धिप्रजापतइत्याह ॥ प्रजायामेवान्नाद्यंदधते ॥ यदि नावजिघ्रेत् ॥ अग्निःपशुरासीदित्यवघ्रापयेत् ॥ अवहैवजिघ्रति ॥ आक्रान्वाजीक्रमैरत्यक्रमीद्वाजो

॥७१॥

द्यौरते पृष्ठं पृथिवी सधस्थमित्यश्वमनुमन्त्रयते ॥ एषां लोकानामभिजित्यै ॥ समिद्धो अंजन्कृदरं मतीनामि
त्यश्वस्याप्रियो भवंति सरूपत्वाय ॥ ८ ॥ परितस्थुष इत्याहेमे एवास्मै युनक्त्यभिजित्यै भरंत्यश्वमेधो रुंधे रूपं
जिघ्रति त्रीणि च ॥ ४ ॥ तेजसा वा एष ब्रह्मवर्चसेन व्यृध्यते ॥ योश्वमेधेन यजते ॥ होता च ब्रह्मा च ब्रह्मो
द्यं वदतः ॥ तेजसा चैवैनं ब्रह्मवर्चसेन च समर्द्धयतः॥ दक्षिणतो ब्रह्मा भवति ॥ दक्षिणत आयतनो वै ब्रह्मा॥
बार्हस्पत्यो वै ब्रह्म ॥ ब्रह्मवर्चसमेवास्य दक्षिणतो दधाति ॥ तस्माद्दक्षिणोर्द्धो ब्रह्मवर्चसितरः ॥ उत्त
रतो होता भवति ॥ १ ॥ उत्तरत आयतनो वै होता ॥ आग्नेयो वै होता ॥ तेजो वा अग्निः ॥ तेज एवास्यो
त्तरतो दधाति ॥ तस्मादुत्तरोर्द्धस्तेजस्वितरः ॥ यूपमभितो वदतः ॥ यजमानदेवत्यो वै यूपः ॥
यजमानमेव तेजसा च ब्रह्मवर्चसेन च समर्द्धयतः ॥ किंस्विदासीत्पूर्वचित्तिरित्याह ॥ द्यौर्वै वृष्टिः
पूर्वचित्तिः ॥ २ ॥ दिवमेव वृष्टिमवरुंधे ॥ किंस्विदासीद्बृहद्वय इत्याह ॥ अश्वो वै
बृहद्वयः ॥ अश्वमेवावरुंधे ॥ किंस्विदासीत्पिशंगिलेत्याह ॥ रात्रिर्वै पिशंगिला ॥ रात्रिमेवावरुंधे ॥
किंस्विदासीत्पिलिप्पिलेत्याह ॥ श्रीर्वै पिलिप्पिला ॥ अन्नाद्यमेवावरुंधे ॥ ३ ॥ कस्विदेकाकी
चरतीत्याह ॥ असौ वा आदित्य एकाकी चरति ॥ तेज एवावरुंधे ॥ क उ स्विज्जायते पुनरित्याह ॥ चं

द्रमावैजायतेपुनः ॥ आयुरेवावरुंधे ॥ किꣳस्विद्धिमस्यभेषजमित्याह ॥ अग्निर्वैहिमस्यभेषजं ॥ ब्रह्मवर्चसमेवावरुंधे ॥ किꣳस्विदावपनंमहदित्याह ॥ ४ ॥ अयंवैलोकआवपनंमहत् ॥ अस्मिन्नेवलोकेप्रतितिष्ठति ॥ पृच्छामित्वापरमंतंपृथिव्याइत्याह ॥ वेदिर्वैपरोंतःपृथिव्याः ॥ वेदिमेवावरुंधे ॥ पृच्छामित्वाभुवनस्यनाभिमित्याह ॥ यज्ञोवैभुवनस्यनाभिः ॥ यज्ञमेवावरुंधे ॥ पृच्छामित्वावृष्णोअश्वस्यरेतइत्याह ॥ सोमोवैवृष्णोअश्वस्यरेतः ॥ सोमपीथमेवावरुंधे ॥ पृच्छामिवाचःपरमंव्योमेत्याह ॥ ब्रह्मवैवाचःपरमंव्योम ॥ ब्रह्मवर्चसमेवावरुंधे ॥ ५ ॥ ॥ होताभवतिवैवृष्टिःपूर्वचित्तिरन्नाद्यमेवावरुंधेमहदित्याहसोमोवैवृष्णोअश्वस्यरेतश्चत्वारिच ॥ ५ ॥ ॥ अपवाएतस्मात्प्राणाःक्रामंति ॥ योश्वमेधेनयजंते ॥ प्राणायस्वाहाव्यानायस्वाहेतिसंज्ञप्यमानआहुतीर्जुहोति ॥ प्राणानेवास्मिन्दधाति ॥ नास्मात्प्राणाअपक्रामंति ॥ अवंतीस्थावंतीस्त्वावंतु ॥ प्रियंत्वाप्रियाणां ॥ वर्षिष्ठमाप्यानां ॥ निधीनांत्वानिधिपतिꣳहवामहेवसोममेत्याह ॥ अपैवास्मैतद्ध्नुवते ॥ १ ॥ अथोधुवंत्येवैनं ॥ अथोन्येवास्मैह्नुवते ॥ त्रिःपरियंति ॥ त्रयइमेलोकाः ॥ एभ्यएवैनंलोकेभ्योधुवते ॥ त्रिःपुनःपरियंति ॥ षट्संपद्यंते॥षड्वाऋतवः ॥ ऋतुभिरेवैनंधुवते ॥ अपवाएतेभ्यःप्राणाःक्रामंति ॥ २ ॥

येयज्ञेधुवंनंतन्वते ॥ नवकृत्वःपरियंति ॥ नववैपुरुषेप्राणाः ॥ प्राणानेवात्मन्दधते ॥ नैभ्यःप्राणाअप
क्रामंति ॥ अंबेअंबाल्यंबिकइतिपत्नीमुदानयति ॥ अह्वतैवैनां ॥ सुभगेकांपीलवासिनीत्याह ॥
तपएवैनामुपनयति ॥ सुवर्गेलोकेसंप्रोर्ण्वाथामित्याह ॥ ३ ॥ सुवर्गमेवनांलोकंगमयति ॥ आहमं
जानिगर्भधमात्वमंजासिगर्भधमित्याह ॥ प्रजावैपशवोगर्भः ॥ प्रजामेवपशूनात्मन्धत्ते ॥ देवावाअ
श्वमेधेपवमाने ॥ सुवर्गंलोकंनप्राजानन् ॥ तमश्वःप्राजानात् ॥ यत्सूचीभिरसिपथान्कल्पयंति ॥
सुवर्गस्यलोकस्यप्रज्ञात्यै ॥ गायत्रीत्रिष्टुब्जगतीत्याह ॥ ४ ॥ यथायजुरेवैतत् ॥ त्रैय्यः
सूच्योभवंति ॥ अयस्मय्योरजताहरिण्यः ॥ अस्यवैलोकस्यरूपमयस्मय्यः ॥ अंतरिक्षस्यरजताः ॥
दिवोहरिण्यः ॥ दिशोवाअयस्मय्यः ॥ अवांतरदिशारजताः ॥ ऊर्ध्वाहरिण्यः ॥ दिशएवास्मैकल्प
यति ॥ कस्त्वाछ्यतिकस्त्वाविशास्तीत्याहाहिंसायै ॥५॥ धुवतेक्रामंत्यूर्ण्वाथामित्याहजगतीत्याहक
ल्पयत्येवंकंच ॥ ६ ॥ अपवाएतस्माच्छ्रीराष्ट्रंक्रामति ॥ योश्वमेधेनयजंते ॥ ऊर्ध्वामेनामुच्छ्रयतादित्याह
श्रीर्वैराष्ट्रमश्वमेधः ॥ श्रियमेवास्मैराष्ट्रमूर्ध्वमुच्छ्रयति ॥ वेणुभारंगिराविवेत्याह ॥ राष्ट्रंवैभारः ॥ राष्ट्रमेवास्मै
पर्यूहति ॥ अथास्यामध्यमेधतामित्याह ॥ श्रीर्वैराष्ट्रस्यमध्यं ॥ १ ॥ श्रियमेवावरुंधे ॥ शीतेवातेपुनन्निवेत्या

ह ॥ क्षेमोवैराष्ट्रस्यंशीतोवातः ॥ क्षेममेवावंरुंधे ॥ यद्वांरिणीयवंनतीत्यांह ॥ विड्वैहांरिणी ॥ राष्ट्रं
यवः ॥ विशंचैवास्मैराष्ट्रंचंसमीचोदधाति ॥ नपुष्टंपशुमंन्यतइत्यांह ॥ तस्माद्राजापशून्नपुष्यंति ॥
॥ २ ॥ शूद्रायदर्यंजारानपोषांयधनायतीत्यांह ॥ तस्मांद्वैशीपुत्रंनाभिषिंचंते ॥ इयंयकाशंकुंतिकेत्यां
ह ॥ विड्वैशंकुंतिका ॥ राष्ट्रमंश्वमेधः ॥ विशंचैवास्मैराष्ट्रंचंसमीचोदधाति ॥ आहलमितिसर्पतीत्यां
ह ॥ तस्मांद्राष्ट्रायविशंःसर्पंति ॥ आहंतंगभेपसइत्यांह ॥ विड्वैगभः ॥ ३ ॥ राष्ट्रंपसंः॥राष्ट्रमे
वविश्याहंति ॥ तस्मांद्राष्ट्रंविशंघातुकं ॥ माताचंतेपिताचंनइत्यांह ॥ इयंवैमाता ॥ असौपिता ॥
आभ्यामेवैनंपरिंददाति ॥ अग्रंवृक्षस्यंरोहतइत्यांह ॥ श्रीर्वैवृक्षस्याग्रं ॥ श्रियंमेवावंरुंधे ॥ ४ ॥ प्र
सुंलामीतिंतेपितागभेमुष्टिमंतंसयदित्यांह ॥ विड्वैगभः ॥ राष्ट्रंमुष्टिः ॥ राष्ट्रमेवविश्याहंति ॥ तस्मां
द्राष्ट्रंविशंघातुकं ॥ अपवाएतेभ्यंःप्राणाःक्रांमंति ॥ येयज्ञेपूतंवदंति ॥ दधिक्राव्णोंअकारिषमितिसुर
भिमतीमृचंवदंति ॥ प्राणावैसुंरभयंः ॥ प्राणानेवात्मन्दंधते ॥ नैभ्यंःप्राणाअपक्रांमंति ॥ आपो
हिष्ठामंयोभुवइत्यद्भिर्मांर्जयंते ॥ आपोवैसर्वादेवताः ॥ देवतांभिरेवात्मानंपवयंते ॥ ५ ॥ राष्ट्रस्यम
ध्यंपुष्यंतिगभोंरुंधेदधतेचत्वारिंच ॥ ७ ॥ ॥ प्रजापंतिःप्रजाःसृष्ट्वाप्रेणानुप्राविंशत् ॥ ताभ्यः

पुनःसंभवितुंनाशक्नोत् ॥ सोऽब्रवीत् ॥ ऋध्नवदित्सः ॥ योमेनःपुनः संभरादिति ॥ तंदेवाअश्वमेधेनै
वसमभरन् ॥ ततोवैतआर्ध्नुवन् ॥ योऽश्वमेधेनयजते ॥ प्रजापतिमेवसंभरत्यृध्नोति ॥ पुरुषमालभ
ते ॥ १ ॥ वैराजोवैपुरुषः ॥ विराजमेवालभते ॥ अथोअन्नंवैविराट् ॥ अन्नमेवावरुंधे ॥ अश्वमा
लभते ॥ प्राजापत्योवाअश्वः ॥ प्रजापतिमेवालभते ॥ अथोश्रीर्वाएकशफं ॥ श्रियमेवावरुंधे ॥
गामालभते ॥ २ ॥ यज्ञोवैगौः ॥ यज्ञमेवालभते ॥ अथोअन्नंवैगौः ॥ अन्नमेवावरुंधे ॥ अजावीआल
भतेभूम्ने ॥ अथोपुष्टिर्वैभूमा ॥ पुष्टिमेवावरुंधे ॥ पर्यग्निकृतंपुरुषंचारण्यांश्चोत्सृजंत्यहिंसायै ॥
उभौवाएतौपशूआलभ्येते ॥ यश्चावमोयश्चपरमः ॥ तेऽस्योभयेयज्ञेबद्धाः ॥ अभीष्टाअभिप्रीताः ॥
अभिजिताअभिहुताभवंति ॥ नैनंदक्षणवःपशवोयज्ञेबद्धाः ॥ अभीष्टाअभिप्रीताः ॥ अभिजिताअभि
हुताहिंसंति ॥ योऽश्वमेधेनयजते ॥ यउचैनमेवंवेद ॥ ३ ॥ लभतेगामालभतेपरमोष्टौच ॥ ८ ॥
थमेनवाएषस्तोमेनराध्वा ॥ चतुष्टोमेनकृतेनायानामुत्तरेहन् ॥ एकविंशेप्रतिष्ठायांप्रतितिष्ठति ॥ ए
कविंशात्प्रतिष्ठायाऋतूनन्वारोहति ॥ ऋतवोवैपृष्ठानि ॥ ऋतवःसंवत्सरः ॥ ऋतुष्वेवसंवत्सरेप्रति
ष्ठाय ॥ देवताअभ्यारोहति ॥ शक्वरयःपृष्ठंभवंत्यन्यदन्यच्छंदः ॥ अन्येन्येवाएतेपशवआलभ्यंते ॥

॥ १ ॥ उतेवंग्राम्याः ॥ उतेवांरण्याः ॥ अहंरेवरूपेणसमंर्द्धयति ॥ अथोअन्हंएवैषबलिर्ह्रियते ॥
तदांहुः ॥ अपंशवोवाएते ॥ यदंजावयंश्चारण्याश्च ॥ एतेवैसर्वेपशवंः ॥ यद्गव्याइतिं ॥ गव्यान्प
शूनुंत्तमेहन्नालंभते ॥ २ ॥ तेनैवोभयांन्पशूनवंरुंधे ॥ प्राजापत्याभंवंति ॥ अनंभिजितस्याभिजिं
त्यै ॥ सौरीर्नवंश्वेतावशाअंनूबंध्यांभवंति ॥ अंततएवब्रंह्मवर्चसमवंरुंधे ॥ सोमांयस्वराज्ञेंनोवाहावंन
ड्वाह्वावितिंद्वंद्विनंःपशूनालंभते ॥ अहोरात्राणांमभिजिंत्यै ॥ पशुभिर्वाएषव्यृंध्यते ॥ योंश्वमेधेनय
जंते ॥ छगलंकल्माषंकिकिदीविंविंदीगयमितिंत्वाष्ट्रान्पशूनालंभते ॥ पशुभिरेवात्मानꣳसमंर्द्धयति ॥
ऋतुभिर्वाएषव्यृंध्यते ॥ योंश्वमेधेनयजंते ॥ पिशंगास्त्रयोंवासंताइत्यृंतुपशूनालंभते ॥ ऋतुभिरेवात्मां
नꣳसमंर्द्धयति ॥ आवाएषपशुभ्योंवृश्च्यते ॥ योंश्वमेधेनयजंते ॥ पर्यंग्निकृताउत्सृंजंत्यनांव्रस्काय ॥
॥ ३ ॥ लभ्यंतेलभतेत्वाष्ट्रान्पशूनालंभतेष्टौच ॥ ९ ॥ ॥ प्रजापंतिरकामयतमहानंन्नाद स्या
मितिं ॥ सएतावंश्वमेधमंहिमानांवपश्यत् ॥ तावंगृह्णीत ॥ ततोवैसमहानंन्नादोंभवत् ॥ यःकामये
तमहानंन्नादःस्यामितिं ॥ सएतावंश्वमेधेमंहिमानौंगृह्णीत ॥ महानेवान्नादोभंवति ॥ यजमानदेव
त्यांवैवपा ॥ राजांमहिमा ॥ यद्वपांमंहिम्नोभयतंःपरियजंति ॥ यजंमानमेवराज्येनोंभयतःपरिगृह्णा

ति ॥ पुरस्तांत्स्वाहाकारावाअन्येदेवाः ॥ उपरिष्टात्स्वाहाकाराअन्ये ॥ तेवाएतेश्वएवमेध्यंउभयेवं
रुध्यंते ॥ यद्वपांमंहिम्नोभयतःपरियजंति ॥ तानेवोभयान्प्रीणाति ॥ १ ॥ परियजंतिषड्ढ ॥ १० ॥
वैश्वदेवोवाअश्वः ॥ तंयत्प्राजापत्यंकुर्यात् ॥ यादेवताअपिंभागाः ॥ ताभांगधेयेनव्यर्द्धयेत् ॥ देवतां
भ्यःसमदंदध्यात् ॥ स्तेगान्दंष्ट्राभ्यांमंडूकान्जंभ्येभिरिति ॥ आज्यमवदानंकृत्वाप्रतिसंख्यायमाहुंती
र्जुहोति ॥ याएवदेवताअपिंभागाः ॥ ताभांगधेयेनसमर्द्धयति ॥ नदेवताभ्यःसमदंदधाति ॥ १ ॥
चतुर्दशैतानंनुवाकान्जुंहोत्यनंतरित्यै ॥ प्रयासायस्वाहेतिपंचदशं ॥ पंचंदशवाअर्द्धमासस्य
रात्रयः ॥ अर्धमासशःसंवत्सरआंप्यते ॥ देवासुराःसंयत्ताआसन् ॥ तेब्रुवन्नग्नयःस्वि
ष्टकृतः ॥ अश्वंस्यमेध्यंस्यवयमुंद्धारमुद्धरामहै ॥ अथैतानभिभवामेति ॥ तेलोहितमुदंहरंत ॥ ततोदेवा
अभवन् ॥ २ ॥ परासुराः ॥ यत्स्विष्टकृद्भ्योलोहितंजुहोतिभ्रातृव्याभिभूत्यै ॥ भवंत्यात्मना ॥ परास्य
भ्रातृव्योभवति ॥ गोमृगकंठेनप्रथमामाहुतिंजुहोति ॥ पशवोवैगोमृगः ॥ रुद्रोग्निःस्विष्टकृत् ॥ रुद्रादे
वपशूनंतर्दधाति ॥ अथोयत्रैषाहुतिर्हूयते ॥ नतत्ररुद्रःपशूनभिमन्यते ॥ ३ ॥ अश्वशफेनद्वितीयामाहु

तिंजुहोति ॥ पशवोवाएकशफं ॥ रुद्रोग्निःस्विष्टकृत् ॥ रुद्रादेवपशूनंतर्दधाति ॥ अथोयत्रैषाहुंतिर्हूयते
नतत्ररुद्रःपशूनभिमंन्यते ॥ अयस्मयेनकमंडलुंनातृतीयां ॥ आहुंतिंजुहोत्यायास्योवैप्रजाः ॥ रुद्रोग्निः
स्विष्टकृत् ॥ रुद्रादेवप्रजाअंतर्दधाति ॥ अथोयत्रैषाहुंतिर्हूयते ॥ नतत्ररुद्रःप्रजाअभिमंन्यते ॥४॥ दघा
त्यभंवन्मन्यतेप्रजाअंतर्दधातिद्वेचं ॥ ११ ॥ ॥ अश्वस्यवाआलंब्धस्यमेधउदंक्रामत् ॥ तदंश्वस्तोमो
यंमभवत् ॥ यदंश्वस्तोमीयंजुहोति ॥ समेधमेवैनमालंभते ॥ आज्येनजुहोति ॥ मेधोवाआज्यं ॥ मेवो
श्वस्तोमीयं ॥ मेधंनैवास्मिन्मेधंदधाति ॥षट्त्रिंशतंजुहोति ॥ षट्त्रिंशदक्षराबृहती ॥१॥ बार्हताःपश
वः ॥ सापंशूनांमात्रां ॥ पशूनेवमात्रंयासमंर्द्धयति ॥ तायद्भूयंसीर्वाकनीयसीर्वाजुहुयात् ॥ पशून्मात्रं
याव्यंर्द्धयेत् ॥ षट्त्रिंशतंजुहोति ॥ षट्त्रिंशदक्षराबृहती ॥ बार्हताःपशवः ॥ सापंशूनांमात्रां ॥ पशूने
वमात्रंयासमंर्द्धयति ॥२॥ अश्वस्तोमीयंहुत्वाद्विपदांजुहोति ॥ द्विपाद्वैपुरुंषोद्विप्रतिष्ठः ॥ तदेंनंप्रतिष्ठ
यासमंर्द्धयति ॥ तदांहुः ॥ अश्वस्तोमीयंपूर्वंहोतव्यां,द्विपदा,इति॥ अश्वोवाअश्वस्तोमीयं ॥ पुरुंषो
द्विपदाः ॥ अश्वस्तोमीयंहुत्वाद्विपदांजुहोति ॥ तस्मांद्विपाच्चतुंष्पादमत्ति ॥ अथोद्विपद्येवचतुंष्पदः

प्रतिष्ठापयति ॥ द्विपदांहुत्वा ॥ नान्यामुत्तरामाहुतिंजुहुयात् ॥ यदन्यामुत्तरामाहुतिंजुहुयात् ॥ प्रप्रति
ष्ठायाश्च्यवेत ॥ द्विपदांअंततोजुहोतिप्रतिष्ठित्यै ॥ ३ ॥ बृहत्यर्धयतिस्थापयतिपंचच ॥ १२ ॥ ॥
प्रजापतिरश्वमेधमसृजत ॥ सोस्मात्सृष्टोपाक्रामत् ॥ तंयज्ञक्रतुभिरन्वैच्छत् ॥ तंयज्ञक्रतुभिर्नान्वविंद
त् ॥ तमिष्टिभिरन्वैच्छत् ॥ तमिष्टिभिरन्वविंदत् ॥ तदिष्टीनामिष्टित्वं ॥ यत्संवत्सरमिष्टिभिर्यजंते ॥
अश्वमेवतदन्विच्छति ॥ सावित्रियोभवंति ॥ १ ॥ इयंवैसविता ॥ योवाअस्यांनश्यतियोनिलयते ॥
अस्यांवावतंविंदंति ॥ नवाइमांकश्चनेत्याहुः ॥ तिर्यङ्कोर्ध्वोत्येतुमर्हतीति ॥ यत्सावित्रियोभवंति ॥ सवितृ
प्रसूतएवैनमिच्छति ॥ ईश्वरोवाअश्वःप्रमुक्तःपरांपरावतंगंतोः ॥ यत्सायंधृतीर्जुहोति ॥ अश्वस्यय
त्यैधृत्यै ॥ २ ॥ यत्प्रातरिष्टिभिर्यजंते ॥ अश्वमेवतदन्विच्छति ॥ यत्सायंधृतीर्जुहोति ॥ अश्वस्यैवय
त्यैधृत्यै ॥ तस्मात्सायंप्रजाःक्षेम्याभवंति ॥ यत्प्रातरिष्टिभिर्यजंते ॥ अश्वमेवतदन्विच्छति ॥ तस्मादि
वानष्टैषएंति ॥ यत्प्रातरिष्टिभिर्यजंतेसायंधृतीर्जुहोति ॥ अहोरात्राभ्यामेवैनमन्विच्छति ॥ अथोअहो
रात्राभ्यामेवास्मैयोगक्षेमंकल्पयति ॥ ३ ॥ भवंतिधृत्याएनमन्विच्छत्येकंच ॥ १३ ॥ अराष्ट्राएतस्मा
च्छ्रीराष्ट्रंक्रामति ॥ योश्वमेधेनयजंते ॥ ब्राह्मणौवीणागाथिनौगायतः ॥ श्रियावाएतद्रूपं ॥ यद्वीणा ॥

श्रियमेवास्मिन्तद्धत्तः ॥ यदाखलुवैपुरुषःश्रियमश्नुते ॥ वीणास्मैवाद्यते ॥ तदाहुः ॥ यदुभौब्राह्मणौ
गायेतां॥ १ ॥प्रभ्र श्शुकास्माच्छ्रीस्यात्॥नवैब्राह्मणेश्रीरमतइति॥ब्राह्मणोन्योगायेत्॥राजन्योन्यः ॥ ब्रह्मवै
ब्राह्मणः॥क्षत्र श्राजन्यः॥तथाहास्यब्रह्मणाचक्षत्रेणचोभयतःश्रीःपरिगृहीताभवति॥तदाहुः॥ यदुभौदिवा
गायेतां॥अथास्माद्राष्ट्रंक्रामेत् ।।२॥ नवैब्राह्मणेराष्ट्र श्रमतइति॥यदाखलुवैराजाकामयते ॥ अथब्राह्मणं
जिनाति ॥ दिवाब्राह्मणोगायेत् ।। नक्त श्राजन्यः ॥ ब्रह्मणोवैरूपमहः ॥ क्षत्रस्यरात्रिः ॥ तथाहा
स्यब्रह्मणाचक्षत्रेणचोभयतोराष्ट्रंपरिगृहीतंभवति ॥ इत्यददाइत्ययजथाइत्यपचइतिब्राह्मगोगायेत् ॥
इष्टापूर्त्तंवैब्राह्मणस्य ॥ ३ ॥ इष्टापूर्त्तेनैवैन ससमर्द्धयति ॥ इत्याजिनाइत्ययुध्यथाइत्यमु संग्राममह
न्निितिराजन्यः ॥ युद्धंवैराजन्यस्य ॥ युद्धेनैवैन ससमर्द्धयति ॥ अक्रूप्तावाएतस्यर्त्तवइत्याहुः ॥
योश्वमेधेनयजतइति ॥ तिस्रोन्योगायतितिस्रोन्यः ॥ षट्संपद्यंते ॥ षड्वाऋतवः ॥ ऋतूनेवास्मैक
ल्पयतः ॥ ताभ्या स स्थायां ॥ अनोयुक्तेचशतेचददाति ॥ शतायुःपुरुषःशतेंद्रियः ॥ आयुष्ये
वेंद्रियेप्रतितिष्ठति ॥ ४ ॥ गायेतांक्रामेद्ब्राह्मणस्यकल्पयतश्चत्वारिच ॥ १४ ॥ ॥ सर्वेषुवाएषुलो

केषुंमृत्यवोन्वायंत्ताः ॥ तेभ्योयदाहुंतीर्नजुहुयात् ॥ लोकेलोकएनंमृत्युर्विंन्देत् ॥ मृत्यवेस्वाहांमृत्य
वेस्वाहेत्यंभिपूर्वमाहुंतीर्जुहोति ॥ लोकाल्लोकादेवमृत्युमवंयजते ॥ नैनंलोकेलोकेमृत्युर्विंन्दति ॥
यदमुष्मैस्वाहामुष्मैस्वाहेतिजुहुंत्संचक्षीत ॥ बहुंमृत्युममित्रंकुर्वीत ॥ मृत्यवेस्वाहेत्येकंस्माएवैकांजुहु
यात् ॥ एकोवाअमुष्मिंन्लोकेमृत्युः ॥ १ ॥ अशनयामृत्युरेव ॥ तमेवामुष्मिंन्लोकेवंयजते ॥ भ्रूण
हत्यायैस्वाहेत्यंवभृथआहुंतिंजुहोति ॥ भ्रूणहत्यामेवावंयजते ॥ तदांहुः ॥ यद्भ्रूणहत्यापात्र्या
थं ॥ कस्मांद्यज्ञेपिंक्रियतइतिं ॥ अमृत्युर्वाअन्योभ्रूणहत्यायाइत्यांहुः ॥ भ्रूणहत्यावावमृत्युरितिं ॥
यद्भ्रूणहत्यायैस्वाहेत्यंवभृथआहुंतिंजुहोतिं ॥ २ ॥ मृत्युमेवाहुंत्यातर्पयित्वापंरिपाणंकृत्वा ॥ भ्रूणघ्ने
भेषजंकरोति ॥ एताश्हवैमुंडिभऔदन्यवः ॥ भ्रूणहत्यायैप्रायांश्चित्तिंविदांचंकार ॥ योह्रास्यापिंप्रजा
यांब्राह्मणश्हंतिं ॥ सर्वस्मैतस्मैभेषजंकरोति ॥ जुंबकायस्वाहेत्यंवभृथउंत्तमामाहुंतिंजुहोति ॥ वरुंणो
वैजुंबकः ॥ अंततएववरुंणमवंयजते ॥ खलतेर्विक्लिधस्यंशुक्लस्यंपिंगाक्षस्यंमूर्धन्जुंहोति ॥ एतद्वैवरुंग
स्यरूपं ॥ रूपेणैववरुंणमवंयजते ॥ ३ ॥ लोकेमृत्युर्जुंहोतिंमूर्धन्जुंहोतिद्वेचं ॥ १५ ॥ ॥ वाह

णोवाअश्वः ॥ तंदेवतंयाव्यर्द्धयति ॥ यत्प्राजापत्यंकरोति ॥ नमोराज्ञेनमोवरुणायेत्याह ॥ वारुणो
वाअश्वः ॥ स्वयैवैनंदेवतयासमर्द्धयति ॥ नमोश्वायनमःप्रजापतयइत्याह ॥ प्राजापत्योवाअश्वः ॥
स्वयैवैनंदेवतयासमर्द्धयति ॥ नमोधिपतयइत्याह ॥ १ ॥ धर्मोवाअधिपतिः ॥ धर्ममेवावरुंधे ॥ अ
धिपतिरस्यधिपतिंमाकुर्वधिपतिरहंप्रजानांभूयासमित्याह ॥ अधिपतिमेवैनꣳसमानानांकरोति ॥ मां
धेहिमयिधेहीत्याह ॥ आशिषमेवैतामाशास्ते ॥ उपाकृतायस्वाहेत्युपाकृतेजुहोति ॥ आलब्धायस्वाहे
तिनियुक्तेजुहोति ॥ हुतायस्वाहेतिहुतेजुहोति ॥ एषांलोकानामभिजित्यै ॥ २ ॥ प्रवाएषएभ्योलो
केभ्यश्च्यवते ॥ योश्वमेधेनयजंते ॥ आग्नेयमैंद्राग्नमाश्विनं ॥ तान्पशूनालभतेप्रतिष्ठित्यै ॥ यदाग्ने
योभवति ॥ अग्निःसर्वादेवताः ॥ देवताएवावरुंधे ॥ ब्रह्मवाअग्निः ॥ क्षत्रमिंद्रः ॥ यदैंद्राग्नोभवति ॥
॥ ३ ॥ ब्रह्मक्षत्रेएवावरुंधे ॥ यदाश्विनोभवति ॥ आशिषामवरुध्यै ॥ त्रयोभवंति ॥ त्रयइमेलो
काः ॥ एष्वेवलोकेषुप्रतितिष्ठति ॥ अग्नयेꣳहोमुचेष्टाकपालइतिदशꣳहविषमिष्टिंनिर्वपति ॥ द
शाक्षराविराट् ॥ अन्नंविराट् ॥ विराजैवान्नाद्यमवरुंधे ॥ अग्नेर्मन्वेप्रथमस्यप्रचेतसइतियाज्या
नुवाक्याभवंतिसर्वत्वाय ॥ ४ ॥ ॥ अधिपतयइत्याहाभिजित्याऐंद्राग्नोभवंतिरुंधएकंच ॥

॥ १६ ॥ ॥ यद्यश्वमुपतपद्विन्देत् ॥ आग्नेयमष्टाकपालं निर्वपेत् ॥ सौम्यं च
रुं ॥ सावित्रमष्टाकपालं ॥ यदाग्नेयो भवति ॥ अग्निः सर्वा देवताः ॥ देवताभिरेवैनं भिष
ज्यति ॥ यत्सौम्यो भवति ॥ सोमो वा ओषधीनाꣳ राजा ॥ याभ्य एवैनं विन्दति ॥ १ ॥ ताभि
रेवैनं भिषज्यति ॥ यत्सावित्रो भवति ॥ सवितृप्रसूत एवैनं भिषज्यति ॥ एताभिरेवैनं देवता
भिर्भिषज्यति ॥ अगदो हैव भवति ॥ पौष्णं चरुं निर्वपेत् ॥ यदि श्लोणः स्यात् ॥ पूषा वै श्लौण्यस्याभि
षक् ॥ स एवैनं भिषज्यति ॥ अश्लोणो हैव भवति ॥ २ ॥ रौद्रं चरुं निर्वपेत् ॥ यदि महती देवताभि
मन्येत ॥ एतद्देवत्यो वा अश्वः ॥ स्वयैवैनं देवतया भिषज्यति ॥ अगदो हैव भवति ॥ वैश्वानरं द्वादशकपा
लं निर्वपेन्मृगाखरे यदि नागच्छेत् ॥ इयं वा अग्निर्वैश्वानरः ॥ इयमेवैनं मर्चिभ्यां परिरोधमानयति ॥
आ हैव सुत्यमहर्गच्छति ॥ यद्यधीयात् ॥ ३ ॥ अग्नयेꣳहोमुचेऽष्टाकपालः ॥ सौर्यं पयः ॥ वायव्य आ
ज्यभागः ॥ यजमानो वा अश्वः ॥ अꣳहसा वा एष गृहीतः ॥ यस्याश्वो मेधाय प्रोक्षितोऽध्येति ॥ यदꣳ
होमुचे निर्वपति ॥ अꣳहस एव तेन मुच्यते ॥ यजमानो वा अश्वः ॥ रेतः सा वा एषꣳ वृध्यते ॥ ४ ॥ यस्याश्वो
मेधाय प्रोक्षितोऽध्येति ॥ सौर्यꣳ रेतः ॥ यत्सौर्यं पयो भवति ॥ रेतः सैवैनꣳ समर्द्धयति ॥ यजमानो वा अ

श्वः ॥ गर्भैर्वाएषव्यृध्यते ॥ यस्याश्वोमेधायप्रोक्षितोध्येति ॥ वायव्यांगर्भाः ॥ यद्वायव्यंआज्यंभागो भवति ॥ गर्भैरेवैन ्समर्द्धयाति ॥ अथोयस्यैषाश्वमेधेप्रायश्चित्तिःक्रियते ॥ इष्ट्वावसीयान्भवति ॥ ॥ ५ ॥ विंदत्यश्लोणोहैवभवत्यधीयादध्यतेगर्भैरेवैन ्समर्द्धयातिद्वेचं ॥ १७ ॥ ॥ तदा हुः ॥ द्वादशब्रह्मौदनान्स ्स्थितेनिर्वपेत् ॥ द्वादशभिर्वेष्टिभिर्यजेतेति ॥ यदिष्टिभिर्यजेत ॥ उप नामुकएनंयज्ञःस्यात् ॥ पापीया ्स्तुस्यात् ॥ आम्नानिवाएतस्यच्छंदा ्सि ॥ यइंजानः ॥ तानि कएतावंदाशुपुनःप्रयुंजीतेति ॥ सर्वावेस ्स्थितेयज्ञेवागाप्यते ॥ १ ॥ सामाभवतियातयाम्नी ॥ क्रूरीकृतेवहिभवत्यरुंरुता ॥ सानपुनःप्रयुज्येत्याहुः ॥ द्वादशैवब्रह्मौदनान्स ्स्थितेनिर्वपेत् ॥ प्रजा पतिर्वाओदनः ॥ यज्ञःप्रजापतिः ॥ उपनामुकएनंयज्ञोभवति ॥ नपापीयान्भवति ॥ द्वादशभवं ति ॥ द्वादशमासाःसंवत्सरः ॥ संवत्सरएवप्रतितिष्ठति ॥ २ ॥ आप्यतेसंवत्सरएकंच ॥ ॥ १८ ॥ ॥ एषवैविभूर्नामयज्ञः ॥ सर्व ्हवैतत्रविभुर्भवति ॥ यत्रैतेनयज्ञेनयजंते ॥ एषवैप्रभूर्ना मयज्ञः ॥ सर्व ्हवैतत्रप्रभुर्भवति ॥ यत्रैतेनयज्ञेनयजंते ॥ एषवाऊर्जस्वान्नामयज्ञः ॥ सर्व ्हवैतत्रो र्जस्वद्भवति ॥ यत्रैतेनयज्ञेनयजंते ॥ एषवैपयस्वान्नामयज्ञः ॥ २ ॥ सर्व ्हवैतत्रपयस्वद्भवति ॥

यत्रैतेनयज्ञेनयजंते ॥ एषवैविधृतोनामयज्ञः ॥ सर्वं ह्वैतत्रविधृतंभवति ॥ यत्रैतेनयज्ञेनयजं
ते ॥ एषवैव्यावृत्तोनामयज्ञः ॥ सर्वं ह्वैतत्रव्यावृत्तंभवति ॥ यत्रैतेनयज्ञेनयजंते ॥ एष
वैप्रतिष्ठितोनामयज्ञः ॥ सर्वं ह्वैतत्रप्रतिष्ठितंभवति ॥ २ ॥ यत्रैतेनयज्ञेनयजंते ॥ एषवैतेज
स्वीनामयज्ञः ॥ सर्वं ह्वैतत्रतेजस्विभवति ॥ यत्रैतेनयज्ञेनयजंते ॥ एषवैब्रह्मवर्चसीनामयज्ञः ॥
आह्वैतत्रब्राह्मणोब्रह्मवर्चसीजायते ॥ यत्रैतेनयज्ञेनयजंते ॥ एषवाअतिव्याधीनामयज्ञः ॥ आह्वैतत्र
राजन्योतिव्याधीजायते ॥ यत्रैतेनयज्ञेनयजंते ॥ एषवैदीर्घोनामयज्ञः ॥ दीर्घायुषोह्वैतत्रमनुष्याभवं
ति ॥ यत्रैतेनयज्ञेनयजंते ॥ एषवैक्लृप्तोनामयज्ञः ॥ कल्पतेह्वैतत्रप्रजाभ्योयोगक्षेमः ॥ यत्रैतेनयज्ञे
नयजंते ॥ ३ ॥ पयस्वान्नामयज्ञःप्रतिष्ठितंभवत्यतिव्याधीजायतेयत्रैतेनयज्ञेनयजंतेषट्च ॥ १९ ॥ विभूः
प्रभूरूर्जस्वान्पयस्वान्विधृतोव्यावृत्तःप्रतिष्ठितस्तेजस्वीब्रह्मवर्चस्यतिव्याधीदीर्घ क्लृप्तोद्वादश ॥ ॥ ता
र्प्येणाश्वं संज्ञपयंति ॥ यज्ञोवैतार्प्यं ॥ यज्ञेनैवेनं समर्द्धयंति ॥ यामेनसाम्नाप्रस्तोतानूपतिष्ठते ॥
यमलोकमेवैनंगमयति ॥ तार्प्येचकृत्यधीवाचेचाश्वं संज्ञपयंति ॥ एतद्वैपशूनां रूपं ॥ रूपेणैवप

शूनवरुंधे ॥ हिरण्यकशिपुर्भवति ॥ तेजसोवरुध्यै ॥ १ ॥ रुक्मोभवति ॥ सुवर्गस्यलोकस्यानुख्या
त्यै ॥ अश्वोभवति ॥ प्राजापत्यैरास्यैं ॥ अस्यवैलोकस्यरूपंताप्र्यं ॥ अंतरिक्षस्यकृत्यधीवासः ॥ दिवो
हिरण्यकशिपु ॥ आदित्यस्यरुक्मः ॥ प्रजापतेरश्वः ॥ इममेवलोकंताप्र्येणाप्नोति ॥ अंतरिक्षंकृत्यधी
वासेन ॥ दिवꣳहिरण्यकशिपुना ॥ आदित्यꣳरुक्मेण ॥ अश्वेनैवमेध्येनप्रजापतेःसायुज्यꣳसलोकतां
माप्नोति ॥ एतासामेवदेवतानाꣳसायुज्यं ॥ सार्ष्टिताꣳसमानलोकतामाप्नोति ॥ योश्वमेधेनयजंते ॥
यउचैनमेवंवेद ॥ २ ॥ अवरुध्याआप्नोत्यष्टौच ॥ २८ ॥ ॥ आदित्याश्चांगिरसश्चसुवर्गेलोकेस्पर्धं
त ॥ तेंगिरसआदित्येभ्यः ॥ अमुमादित्यमश्वꣳश्वेतंभूतंदक्षिणामनयन् ॥ तेब्रुवन् ॥ यन्नोनेष्ट ॥ स
वर्योभूदिति ॥ तस्मादश्वꣳसवर्येत्याह्वयंति ॥ तस्माद्राज्ञेवरोदीयते ॥ यत्प्रजापतिरालब्धोश्वोभवत् ॥
तस्मादश्वोनाम ॥ १ ॥ यच्छ्वयदरुरासीत् ॥ तस्मादर्वानाम ॥ यत्सद्योवाजान्त्समजयत् ॥ तस्मा
द्वाजीनाम ॥ यदसुराणांलोकानादत्त ॥ तस्मादादित्योनाम ॥ अग्निर्वाअश्वमेधस्ययोनिरायतनं ॥
सूर्योग्नेर्योनिरायतनं ॥ यदश्वमेधेग्नाचित्यंउत्तरवेदिमुपवपति ॥ योनिमंतमेवैनमायतनवंतंकरोति ॥ २ ॥
योनिमानायतनवान्भवति ॥ यएवंवेद ॥ प्राणापानौवाएतौदेवानां ॥ यदर्काश्वमेधौ ॥ प्राणापाना

वेवावरुंधे ॥ ओजोबलंवाएतौदेवानां ॥ यदर्काश्वमेधौ ॥ ओजोबलमेवावरुंधे ॥ अग्निर्वाअश्वमेधस्य
योनिरायतनं ॥ सूर्योग्नेर्योनिरायतनं ॥ यदश्वमेधेग्नौचित्यउत्तरवेदिंचिनोति ॥ तावर्काश्वमेधौ ॥ अ
र्काश्वमेधावेवावरुंधे ॥ अथोअर्काश्वमेधयोरेवप्रतितिष्ठति ॥ २ ॥ नामकरोतिसूर्योग्नेर्योनिरायतनंच
त्वारिच ॥ २१ ॥ ॥ प्रजापतिंवैदेवाःपितरं ॥ पशुंभूतंमेधायालभंत ॥ तमालभ्योपावसन् ॥
प्रातर्यष्टास्महइति ॥ एकंवाएतद्देवानामहः ॥ यत्संवत्सरः ॥ तस्मादश्वंःपुरस्तात्संवत्सरआलभ्यते ॥
यत्प्रजापतिरालब्धोश्वोभवत् ॥ तस्मादश्वः ॥ यत्मेध्योमेधोभवत् ॥ १ ॥ तस्मादश्वमेधः ॥ वेदुको
श्वमाशुंभवति ॥ यएवंवेद ॥ यद्वैतत्प्रजापतिरालब्धोश्वोभवत् ॥ तस्मादश्वःप्रजापतेःपशूनामनुरूप
तमः ॥ आस्यंपुत्रःप्रतिरूपोजायते ॥ यएवंवेद ॥ सर्वाणिभूतानिसंभृत्यालभते ॥ समेनंदेवास्तेज
सेब्रह्मवर्चसायभरंति ॥ योश्वमेधेनयजंते ॥ २ ॥ यउचैनमेवंवेद ॥ एतद्वैतद्देवाएतांदेवतां ॥ पशुं
भूतंमेधायालभंत ॥ यज्ञमेव ॥ यज्ञेनयज्ञमयजंतदेवाः ॥ कामप्रंयज्ञमकुर्वत ॥ तेमृतत्वमकामयंत ॥
तेमृतत्वमगच्छन् ॥ योश्वमेधेनयजंते ॥ देवानामेवायनेनैति ॥ ३ ॥ प्राजापत्येनैवयज्ञेनयजतेकाम
प्रेण ॥ अपुनर्मारमेवगच्छति ॥ एतस्यवैरूपेणपुरस्तात्प्राजापत्यमृषभंतूपरंबहुरूपमालभते ॥ सर्वे

भ्यःकामेभ्यः ॥ सर्वस्याप्त्यै ॥ सर्वस्यजित्यै ॥ सर्वमेवतेनाप्नोति ॥ सर्वंजयति ॥ योऽश्वमेधेनयजं
ते ॥ यउचैनमेवंवेद ॥ ४ ॥ मेधोभवद्यजंतएतिवेद ॥ २२ ॥ ॥ योवाअश्वस्यमेध्यस्यलोमंनो
वेद ॥ अश्वस्यैवमेध्यस्यलोमंलोमंजुहोति ॥ अहोरात्रेवाअश्वस्यमेध्यस्यलोमंनी ॥ यत्सायंप्रातर्जुहो
ति ॥ अश्वस्यैवमेध्यस्यलोमंलोमंजुहोति ॥ एतदनुकृतिहस्मवैपुरा ॥ अश्वस्यमेध्यस्यलोमंलोमंजुह्व
ति ॥ योवाअश्वस्यमेध्यस्यपदेवेद ॥ अश्वस्यैवमेध्यस्यपदेपदेजुहोति ॥ दर्शपूर्णमासौवाअश्वस्यमेध्यस्य
पदे ॥ १ ॥ यद्दर्शपूर्णमासौयजंते ॥ अश्वस्यैवमेध्यस्यपदेपदेजुहोति ॥ एतदनुकृतिहस्मवैपु
रा ॥ अश्वस्यमेध्यस्यपदेपदेजुह्वति ॥ योवाअश्वस्यमेध्यस्यविवर्त्तनंवेद ॥ अश्वस्यैवमेध्यस्यविवर्त्तनेविवर्त्त
नेजुहोति ॥ असौवाआदित्योऽश्वः ॥ सआहवनीयमागच्छति ॥ तद्विवर्त्तते ॥ यदग्निहोत्रंजुहोति ॥
अश्वस्यैवमेध्यस्यविवर्त्तनेविवर्त्तनेजुहोति ॥ एतदनुकृतिहस्मवैपुरा ॥ अश्वस्यमेध्यस्यविवर्त्तनेविव
र्त्तनेजुह्वति ॥ २ ॥ पदेअग्निहोत्रंजुहोतित्रीणिच ॥ २३ ॥ ॥ प्रजापतिस्तमष्टादशिभिःप्रजापति
रकामयतोभावस्मैयुंजंतितेजसापप्राणाअपश्रीरूर्ध्वाप्रजापतिःप्रेणानुप्रथमेनंप्रजापतिरकामयतमहान्वै

इवदेवोवाअश्वस्यप्रजापतिस्तंयज्ञक्रतुभिरपश्रीर्ब्राह्मणोसर्वेषुवारुणोयद्यश्वंतंदाहुरेषवैविभूस्तार्प्येणांदि
त्याःप्रजापतिंपितरंयोवाअश्वस्यमेध्यस्यलोमनीत्रयोविंशतिः ॥ २३ ॥ प्रजापतिरस्मिँल्लो
कउत्तरतःश्रियमेवाप्रजापतिरकामयतमहान्यस्त्रातःप्रवाएषएभ्यःसर्वंह्वैतत्रयउचैनमेवंवेदचतुरशीतिः
॥ ८४ ॥ ॥ हरिः ॐ ॥ ॥ संज्ञानंविज्ञानंप्रज्ञानंजानदभिजानत् ॥ संकल्पमानंप्रकल्पमा
नमुपकल्पमानमुपक्लृप्तंक्लृप्तं ॥ श्रेयोवसीयआयत्संभूतंभूतं ॥ चित्रःकेतुःप्रभानाभान्त्संभान् ॥ ज्यो
तिष्मांस्तेजस्वानातपंस्तपन्नभितपन् ॥ रोचनोरोचमानःशोभनःशोभमानःकल्याणः ॥ दर्शादृष्टा
दर्शताविश्वरूपासुदर्शना ॥ आप्यायमानाप्यायमानाप्यायासूनृतेरा ॥ आपूर्यमाणापूर्यमाणापूरयंती
पूर्णापौर्णमासी ॥ दाताप्रदातानंदोमोदःप्रमोदः ॥ १ ॥ आवेशयन्निवेशयन्त्संवेशनःसंशांतःशांतः ॥
आभवन्प्रभवन्त्संभवन्त्संभूतोभूतः ॥ प्रस्तुतंविष्टुतंसंस्तुतंकल्याणंविश्वरूपं ॥ शुक्रममृतंतेजस्वितेजः
समिद्धं ॥ अरुणंभानुमन्मरीचिमदभितपत्तपस्वत् ॥ सविताप्रसवितादीप्तोदीपयन्दीप्यमानः ॥ ज्वलन्
ज्वलितातपन्वितपन्त्संतपन् ॥ रोचनोरोचमानःशुम्भूःशुम्भमानोवामः ॥ सुतासुन्वतीप्रसुतासूयमानाभि
षूयमाणा ॥ पीतीप्रपासंपातृप्तिस्तर्पयंती ॥ २ ॥ कांताकाम्याकामजातायुष्मतीकामदुघा ॥ अभिगा

स्तानुमंतानंदोमोदःप्रमोदः ॥ आसादयंन्निषादयन्त्सꣳसादनःसꣳसनःसंनः ॥ आभूर्विभूःप्रभूःशंभूर्भुवः ॥ पवित्रंपवयिष्यन्पूतोमेध्यः ॥ यशोयशस्वानायुरमृतः ॥ जीवोजीविष्यन्त्स्वर्गोलोकः ॥ सहस्वान्त्सहीयानोजस्वान्त्सहमानः ॥ जयन्नभिजयन्त्सुद्रविणोद्रविणोदाः ॥ आर्द्रपवित्रोहरिकेशोमोदः प्रमोदः ॥ ३ ॥ अरुणोरुणरंजाःपुंडरीकोविश्वजिदभिजित् ॥ आर्द्रःपिन्वमानोन्नवान्त्रसवानिरावान् ॥ सर्वौषधःसंभरोमहस्वान् ॥ एजत्काजोवत्काः ॥ क्षुल्लकाःशिपिविष्टकाः ॥ सरिस्रराःसुशेरवः ॥ अजिरासोगमिष्णवः ॥ इदानींतदानीमेतर्हिक्षिप्रमजिरं ॥ आशुर्निमेषःफणोद्रवन्नतिद्रवन् ॥ त्वरꣳस्त्वरमाण आशुराशीयान्जवः ॥ अग्निष्टोमउक्थ्योतिरात्रोद्विरात्रस्त्रिरात्रश्चतूरात्रः ॥ अग्निःक्रतुःसूर्यःक्रतुश्चंद्रमाःक्रतुः ॥ प्रजापतिःसंवत्सरोमहान्कः ॥ ४ ॥ प्रमोदस्तर्पयंतीप्रमोदोजवस्त्रीणिच ॥ १ ॥

॥ भूरग्निंचपृथिवींचमांच ॥ त्रीꣳश्चलोकान्त्संवत्सरंच ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वध्रुवासीद ॥ भुवोवायुंचांतरिक्षंचमांच ॥ त्रीꣳश्चलोकान्त्संवत्सरंच ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वध्रुवासीद ॥ स्वरादित्यंचदिवंचमांच ॥ त्रीꣳश्चलोकान्त्संवत्सरंच ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वध्रुवासीद ॥ भूर्भुवःस्वश्चंद्रमसंचदिशश्चमांच ॥ त्रीꣳश्चलोकान्त्संवत्स

रंच ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वध्रुवासीद ॥ १ ॥ संवत्सरंचषट्च
॥ २ ॥ ॥ त्वमेवत्वांवेत्थयोसिसोसि ॥ त्वमेवत्वामंचेषीः ॥ चितश्चासिसचितश्चास्यग्ने ॥ एता
वाꣳश्चासिभूयाꣳश्चास्यग्ने ॥ यत्तेअग्नेन्यूनंयदुतेतिरिक्तं ॥ आदित्यास्तदंगिरसश्चिन्वंतु ॥ वि
श्वेतेदेवाश्चितिमापूरयंतु ॥ चितश्चासिसंचितश्चास्यग्ने ॥ एतावाꣳश्चासिभूयाꣳश्चास्यग्ने ॥ मा
मातेअग्नेचयेनमातिचयेनायुरावृक्षि ॥ १ ॥ सर्वेषाज्योतिषाज्योतिर्यद्दावुदेति ॥ तपसोजातमनिभृ
ष्टमोजः ॥ तत्तज्योतिरिष्टके ॥ तेनंमेतप ॥ तेनंमेज्वल ॥ तेनंमेदीदिहि ॥ यावद्देवाः ॥ यावदसा
तिसूर्यः ॥ यावदुतापिब्रह्म ॥ ३ ॥ आवृक्षिनवंच ॥ ३ ॥ ॥ संवत्सरोसिपरिवत्सरोसि ॥ इ
दावत्सरोसीदुवत्सरोसि ॥ इद्वत्सरोसिवत्सरोसि ॥ तस्यंतेवसंतःशिरः ॥ ग्रीष्मोदक्षिणःपक्षः ॥ वर्षाः
पुच्छं ॥ शरदुत्तरःपक्षः ॥ हेमंतोमध्यं ॥ पूर्वपक्षाश्चितयः ॥ अपरपक्षाःपुरीषं ॥ १ ॥ अहोरात्राणी
ष्टकाः ॥ ऋषभोसिस्वर्गोलोकः॥यस्यांदिशिमहीयसे॥ ततोनोमहआवह॥वायुर्भूत्वासर्वादिशआवाहि॥
सर्वादिशोनुविवाहि॥सर्वादिशोनुसंवाहि॥चित्याचितिमापृण॥अचित्याचितिमापृण ॥चिदसिसमुद्रयो
निः॥ २ ॥इंदुर्दक्षःश्येनऋतावा ॥ हिरण्यपक्षःशकुनोभुरण्युः॥ महान्त्सधस्थेध्रुवआनिषत्तः ॥ नमस्तेअ

स्तुमामांहि्ँसीः ॥ एतिप्रेतिवीतिसमित्युदिर्ति ॥ दिवंमेयच्छ ॥ अंतरिक्षंमेयच्छ ॥ पृथिवींमेयच्छ ॥ पृथिवींमेयच्छ ॥ अंतरिक्षंमेयच्छ ॥ दिवंमेयच्छ ॥ अन्हाप्रसारय॥ रात्र्यासमंच ॥ रात्र्याप्रसारय ॥ अन्हासमंच ॥ कामंप्रसारय ॥ काम्ँसमंच ॥ ३ ॥ पुरीषश्समुद्रयोनिःपृथिवींमेयच्छांतरिक्षंमेयच्छसप्त च॥४॥भूर्भुवःस्वः ॥ ओजोबलं ॥ब्रह्मक्षत्रं ॥ यशोमहत् ॥ सत्यंतपोनाम ॥ रूपममृतं ॥ चक्षुःश्रोत्रं ॥ मनआयुः ॥ विश्वंयशोमहः ॥ समंतपोहरोभाः ॥ जातवेदायदिवापावकोसि ॥ वैश्वानरोयदिवावैद्यु तोसि ॥ शंप्रजाभ्योयजमानायलोकं ॥ ऊर्जंपुष्टिंददभ्यावंवृत्स्व ॥ १ ॥ भाश्चत्वारिंच ॥ ५ ॥ राज्ञींविराज्ञीं ॥ संम्राज्ञींस्वराज्ञीं ॥ अर्चिःशोचिः ॥ तपोहरोभाः ॥ अग्निरिंद्रोबृहस्पतिः ॥ विश्वेदे वाभुवनस्यगोपाः ॥ तेमासर्वेयशसास्ँसृजंतु ॥ १ ॥ राज्ञींद्रेमासप्त ॥ ६ ॥ असवेस्वाहावसवे स्वाहा ॥ विभुवेस्वाहाविवस्वतेस्वाहा ॥ अभिभुवेस्वाहाधिपतयेस्वाहा ॥ दिवांपतयेस्वाहांश्हस्प त्यायस्वाहा ॥ चाक्षुष्मत्यायस्वाहाज्योतिष्मत्यायस्वाहा ॥ राज्ञेस्वाहाविराज्ञेस्वाहा ॥ संम्राज्ञेस्वाहा स्वराज्ञेस्वाहा ॥ शूषायस्वाहासूर्यायस्वाहा ॥ चंद्रमसेस्वाहाज्योतिषेस्वाहा ॥ स्ँसर्पायस्वाहाक ल्याणायस्वाहा ॥ अर्जुनायस्वाहा ॥ १ ॥ कल्याणायस्वाहैकंच ॥ ७ ॥ ॥ विपश्चितेपवमानाय

गायत ॥ महीनधारात्यंधोअर्षति ॥ अहिर्ह जीर्णामतिसर्पतित्वचं ॥ अत्योनक्रीडंनसरद्वृषाहरिः ॥
उपयामगृहीतोसिमृत्यवेत्वाजुष्टंगृह्णामि ॥ एषतेयोनिर्मृत्यवेत्वा ॥ अपमृत्युमपक्षुधं ॥ अपेतःशपथंज
हि ॥ अधानोअग्नआवह ॥ रायस्पोषꣳसहस्रिणं ॥ १ ॥ येतेसहस्रमयुतंपाशाः ॥ मृत्योमर्त्यायहंत
वे ॥ तान्यज्ञस्यमायया ॥ सर्वानवयजामहे ॥ भक्षोस्यमृतभक्षः ॥ तस्यतेमृत्युपीतस्यामृतवतः ॥
स्वगाकृतस्यमधुमतः ॥ उपहूतस्योपहूतोभक्षयामि ॥ मंद्राभिभूतिःकेतुर्यज्ञानांवाक् ॥ असावेहि ॥
॥ २ ॥ अंधोजागृविःप्राण ॥ असावेहि ॥ बधिरआक्रंदइतरपान ॥ असावेहि ॥ अहस्तोस्त्वाच
क्षुः ॥ असावेहि ॥ अपादाशोमनः ॥ असावेहि ॥ कवेविप्रचित्तेश्रोत्र ॥ असावेहि ॥ ३ ॥ सुह
स्त सुवासाः ॥ शूषोनामास्यमृतोमर्त्येषु ॥ तंत्वाहंतथावेद ॥ असावेहि ॥ अग्निर्मेवाचिश्रितः ॥
वाग्घृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ वायुर्मेप्राणेश्रितः ॥ ४ ॥ प्राणोहृदये ॥
हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ सूर्योमेचक्षुषिश्रितः ॥ चक्षुर्हृदये ॥ हृदयंमयि ॥ अह
ममृते ॥ अमृतंब्रह्मणि ॥ चंद्रमामेमनसिश्रितः ॥ ५ ॥ मनोहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अ
मृतंब्रह्मणि ॥ दिशोमेश्रोत्रेश्रिताः ॥ श्रोत्रꣳहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥

आपोमेरेतसिश्रिताः ॥ ६ ॥ रेतोहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ पृथिवीमेशरी
रेश्रिता ॥ शरीरꣳहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ ओषधिवनस्पतयोमेलोमसु
श्रिताः ॥ ७ ॥ लोमानिहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ इंद्रोमेबलेश्रितः ॥ ब
लꣳहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ पर्जन्योमेमूर्ध्निश्रितः ॥ ८ ॥ मूर्धाहृदये
॥ हृदयंमयि ॥ अहममृते ॥ अमृतंब्रह्मणि ॥ ईशानोमेमन्यौश्रितः ॥ मन्युर्हृदये ॥ हृदयंमयि ॥
अहममृते ॥ अमृतंब्रह्मणि ॥ आत्मामआत्मनिश्रितः ॥ ९ ॥ आत्माहृदये ॥ हृदयंमयि ॥ अहममृते ॥ अ
मृतंब्रह्मणि ॥ पुनर्मआत्मापुनरायुरागात् ॥ पुनःप्राणःपुनराकूतमागात् ॥ वैश्वानरोरश्मिभिर्वावृ
धानः ॥ अंतस्तिष्ठत्वमृतस्यगोपाः ॥ १० ॥ सहस्रिणंमिहिश्रोत्रासावेहिंप्राणेश्रितोमनसिश्रितारेतसि
श्रितालोमसुश्रितामूर्ध्निश्रितआत्मनिश्रितोष्टौच ॥ ८ ॥ अग्निर्वायुःसूर्यश्चंद्रमादिशआपःपृथिव्योषधि
वनस्पतयइंद्रःपर्जन्यईशानआत्मापुनर्मेत्रयोदश ॥ प्रजापतिर्देवानसृजत ॥ तेपाप्मनासंदिताअ
जायंत ॥ तान्व्यद्यत् ॥ यद्व्यद्यत् ॥ तस्माद्विद्युत् ॥ तमवृश्चत् ॥ यदवृश्चत् ॥ तस्माद्वृष्टिः ॥ त
स्माद्यत्रैतदेवतेअभिप्राप्नुतः ॥ विचैवहैवारयतत्रपाप्मानंद्यतः ॥ १ ॥ वृश्चतश्च ॥ सैषामीमाꣳसाग्नि

ह्रोत्रएवसंपन्ना ॥ अथोआहुः ॥ सर्वेषुयज्ञक्रतुष्विति ॥ होष्यंन्नपउपस्पृशेत् ॥ विद्युदसिविद्यंमेपाप्मा
नमिति ॥ अथहुत्वोपस्पृशेत् ॥ वृष्टिरसिवृश्चमेपाप्मानमिति ॥ यक्ष्यमाणोवेष्ट्वावां ॥ विचंहैवास्यै
तदेवतेपाप्मानंव्यतः ॥ २ ॥ वृश्चतंश्च ॥ अत्य॰श्होहारुणिः ॥ ब्रह्मचारिणेप्रश्नान्प्रोच्यप्राजिंघाय ॥
परेहि ॥ प्लक्षंदय्यांपातिंपृच्छ ॥ वेत्थसावित्रां३नवेत्था३इति ॥ तमागत्यपप्रच्छ ॥ आचार्योमाप्राहै
षीत् ॥ वेत्थसावित्रां३नवेत्था३इति ॥ सहोवाचवेदेति ॥३॥ सकस्मिन्प्रतिष्ठितइति ॥ परोरंजसोति ॥
कस्तद्यत्परोरंजाइति ॥ एषवावसपरोरंजाइतिहोवाच ॥ यएषतपंति ॥ एषोवाग्रंजाइति ॥ सकस्मि
न्न्वेषइति ॥ सत्यइति ॥ किंतत्सत्यमिति ॥ तपइति ॥४॥ कस्मिन्नुतपइति ॥ बलइति ॥ किं
तद्बलमिति ॥ प्राणइति ॥ मास्मंप्राणमतिपृच्छइतिमाचार्योब्रवीदितिहोवाचब्रह्मचारी ॥ सहोवाचप्ल
क्षोदय्यांपातिः ॥ यद्वैब्रह्मचारिन्प्राणमत्यंप्रक्ष्यः ॥ मूर्द्धातेव्यपतिष्यत् ॥ अहमुंतआचार्याच्छ्रेयान्भावि
ष्यामि ॥ योमांसावित्रेसमवादिष्टेति ॥ ५ ॥ तस्मात्सावित्रेनसंवदेत ॥ सयोहवैसावित्रंविदुषासावित्रे
संवदते ॥ सहास्मिन्छ्रियंदधाति ॥ अनुहवाअस्माअसौतपन्छ्रियंमन्यते ॥ अन्वस्मैश्रोस्तपोमन्यते ॥
अन्वस्मैतपोबलंमन्यते ॥ अन्वस्मैबलंप्राणंमन्यते ॥ सयदाह ॥ संज्ञानंविज्ञानंदर्शाद्दृष्टे
ति ॥ एषएवतत् ॥ ६ ॥ अथयदाह ॥ प्रस्तुतंविष्टुत॰सुतासुन्वतीति ॥ एषएवतत् ॥ एषह्यवता

न्यहानि ॥ एषरात्रयः ॥ अथयदाह ॥ चित्रःकेतुर्दाताप्रदातासविताप्रसविताभिशास्तानुमंतेति ॥ एषएवतत् ॥ एषह्येवतेह्नोमुहूर्त्ताः ॥ एषरात्रेः ॥ ७ ॥ अथयदाह ॥ पवित्रंपवयिष्यनूत्सहस्वान्त्सही यानरुणोरुणरजाइति ॥ एषएवतत् ॥ एषह्येवतेर्द्धमासाः ॥ एषमासाः ॥ अथयदाह ॥ अग्निष्टो मउक्थ्योग्निर्ऋतुःप्रजापतिःसंवत्सरइति ॥ एषएवतत् ॥ एषह्येवतेयज्ञक्रतवः ॥ एषऋतवः ॥ ८ ॥ एषसंवत्सरः ॥ अथयदाह ॥ इदानींतदानीमिति ॥ एषएवतत् ॥ एषह्येवतेमुहूर्त्तानामुहूर्त्ताः ॥ जनकोहवैदेहः ॥ अहोरात्रैःसमाजगाम ॥ तꣳहोचुः ॥ योवाअस्मान्वेद ॥ विजहत्पाप्मानमेति ॥ ९ ॥ सर्वमायुरेति ॥ अभिस्वर्गलोकंजयति ॥ नास्यामुष्मिंल्लोकेन्नंक्षीयतइति ॥ विजहद्धवैपाप्मानमेति ॥ सर्वमायुरेति ॥ अभिस्वर्गलोकंजयति ॥ नास्यामुष्मिंल्लोकेन्नंक्षीयते ॥ यएववेद ॥ अहीनाहाश्वथ्यः ॥ सावित्रंविदांचकार ॥ १० ॥ सहꣳहꣳसोहिरण्मयोभूत्वा ॥ स्वर्गलोकमियाय ॥ आदित्यस्यसायुज्यं ॥ अहꣳसोहवैहिरण्मयोभूत्वा ॥ स्वर्गंल्लोकमेति ॥ आदित्यस्यसायुज्यं ॥ यएववेद ॥ देवभागोहश्रौतर्षः ॥ सावित्रंविदांचकार ॥ तꣳहवागदृश्यमानाभ्युवाच ॥ ११ ॥ सर्वबतगौतमोवेद ॥ यःसावित्रंवेदेति ॥ सहोवाच ॥ कैषावागसीति ॥ अयमहꣳसावित्रः ॥ देवानामुत्तमोलोकः ॥ गुह्यमहोबिभ्रदिति ॥ एतावतिहगौतमः ॥ यज्ञोपवीतंकृत्वाधोनिपपात ॥ नमो

नमइति ॥ १२ ॥ सहोवाच ॥ माभैषीर्गौतम ॥ जितोवैतेंलोकइति ॥ तस्माद्येकेचंसावित्रंविदुः ॥
सर्वेतेजितलोकाः ॥ सयोहवैसावित्रस्याष्टाक्षरंपदꣳश्रियाभिषिक्तंवेद ॥ श्रियाहैवाभिषिच्यते ॥
घृणिरितिद्वेअक्षरे ॥ सूर्यइतित्रीणि ॥ आदित्यइतित्रीणि ॥ १३ ॥ एतद्वैसावित्रस्याष्टा
क्षरंपदꣳश्रियाभिषिक्तं ॥ यएवंवेद ॥ श्रियाहैवाभिषिच्यते ॥ तदेतदृचाभ्युक्तं ॥
ऋचोअक्षरेपरमेव्योमन् ॥ यस्मिन्देवाअधिविश्वेनिषेदुः ॥ यस्तंनवेदकिमृचाकरिष्यति ॥
॥ यइत्तद्विदुस्तइमेसमासतइति ॥ नहवाएतस्यर्चानयजुषानसाम्नार्थोस्ति ॥ यःसावित्रंवेद ॥
॥ १४ ॥ तदेतत्परियंद्दवचक्रं ॥ आर्द्रंपिन्वमानꣳस्वर्गेलोकएति ॥ विजहद्विश्वाभूतानिसंपश्यन् ॥
आर्द्रोहवैपिन्वमानःस्वर्गेलोकएति ॥ विजहन्विश्वाभूतानिसंपश्यन् ॥ यएवंवेद ॥ शूषोहवैवार्ष्णेयः
॥ आदित्येनसमाजगाम ॥ तꣳहोवाच ॥ एहिसावित्रंविद्धि ॥ अयंवैस्वर्ग्योग्निःपारयिष्णुरसूनात्संभूत
इति ॥ एषवावससावित्रः ॥ यएषतपति ॥ एहिमांविद्धि ॥ इतिहैवनंतदुवाच ॥ १५ ॥ यतोयतोवे
देतितपइतिसमवादिष्टेतितद्राव्रैकृतवंएतिचकारोवाचनमइत्यादित्यइतित्रीणिसावित्रंवेदविद्धिपंचव ॥
॥ ॥ ५ ॥ ॥ इयंवावसरघा ॥ तस्याअग्निरेवसारघंमधु ॥ याएताःपूर्वपक्षापरपक्षयोरात्रयः ॥
तामधुकृतः ॥ यान्यहानि ॥ तेमधुवृषाः ॥ सयोहवाएतामधुकृतश्चमधुवृषाꣳश्चवेद ॥ कुर्वंति

हास्यैताअग्नौमधु ॥ नास्येष्टापूर्त्तंधयंति ॥ अथयोनवेद ॥ १ ॥ नहास्यैता अग्नौमधुंकुर्वंति ॥ धयंत्यस्येष्टापूर्त्तं ॥ योहवाअंहोरात्राणांनामधेयांनिवेद ॥ नाहोरात्रेष्वार्त्तिमार्च्छंति ॥ संज्ञानंविज्ञानंदर्शाहृष्टेति ॥ एतावंनुवाकौपूर्वपक्षस्यांहोरात्राणांनामधेयांनि ॥ प्रस्तुतंविष्टुतःसुतासुन्वतोति ॥ एतावंनुवाकावपरपक्षस्यांहोरात्राणांनामधेयांनि ॥ ६ ॥ नाहोरात्रेष्वार्त्तिमार्च्छंति ॥ यएववेद ॥ २ ॥ योहवैमुंहूर्त्तानांनामधेयांनिवेद ॥ नमुंहूर्त्तेष्वार्त्तिमार्च्छंति ॥ चित्रःकेतुर्दाताप्रदातासंविताप्रसविताभिशास्तानुमंतेति ॥ एतेनुवाकामुंहूर्त्तानांनामधेयांनि ॥ नमुंहूर्त्तेष्वार्त्तिमार्च्छंति ॥ यएववेद ॥ योहवाअर्धमासानांचमासांनांचनामधेयांनिवेद ॥ नार्धमासेषुनमासेष्वार्त्तिमार्च्छंति ॥ पवित्रंपवयिष्यन्त्सहस्वान्त्सहीयानरुणोरुणरंजाइति ॥ एतेनुवाकाअर्धमासानांचमासांनांचनामधेयांनि ॥ ३ ॥ नार्धमासेषुनमासेष्वार्त्तिमार्च्छंति ॥ यएववेद ॥ योहवैयंज्ञक्रतूनांचर्त्तूनांचसंवत्सरस्यचनामधेयांनिवेद ॥ नयंज्ञक्रतुषुनर्त्तुषुनसंवत्सरआर्तिमार्च्छंति ॥ अग्निष्टोमउक्थ्योग्निर्ऋतुःप्रजापतिःसंवत्सरइति ॥ एतेनुवाकायंज्ञक्रतूनांचर्त्तूनांचसंवत्सरस्यचनामधेयांनि ॥ नयंज्ञक्रतुषुनर्त्तुषुनसंवत्सरआर्तिमा

च्छति ॥ यएवंवेद ॥ योहवैमुहूर्त्तानांमुहूर्त्तान्वेद ॥ नमुहूर्त्तानांमुहूर्तेष्वार्तिमाच्छति ॥ ४ ॥ इदानीं
तदानीमिति ॥ एतेवैमुहूर्त्तानांमुहूर्त्ताः ॥ नमुहूर्त्तानांमुहूर्त्तेष्वार्त्तिमाच्छति ॥ यएवंवेद ॥ अथोयथा
क्षेत्रज्ञोभूत्वानुप्रविश्यान्नमत्ति ॥ एवमेवैतान्क्षेत्रज्ञोभूत्वानुप्रविश्यान्नमत्ति ॥ सएतेषामेवसंलोकताꣳसा
युज्यमश्नुते ॥ अपपुनर्मृत्युंजयति ॥ यएवंवेद ॥ ९ ॥ नवेदैवंवेदानुवाकाअर्धमासानांचमासानांच
नामधेयानिमुहूर्तेष्वार्त्तिमाच्छतिनवंच ॥ १० ॥ ॥ इयमहोरात्राणाꣳसंज्ञानंप्रस्तुतंमुहूर्त्तानांचित्रःकेतु
रर्धमासानांपवित्रंयज्ञक्रतूनामग्निष्टोमोमुहूर्त्तानांमुहूर्त्तान्वेदेदानीमथोयथा ॥ ॥ कश्चिद्वाअस्माल्लोकात्प्रे
त्य ॥ आत्मानंवेद ॥ अयमहमस्मीति ॥ कश्चित्स्वंलोकंनप्रतिप्रजानाति ॥ अग्निमुग्धोहैवधूमतांतः
॥ स्वंलोकंनप्रतिप्रजानाति ॥ अथयोहैवैतमग्निꣳसावित्रंवेद ॥ सएवास्माल्लोकात्प्रेत्य ॥ आत्मानंवे
द ॥ अयमहमस्मीति ॥ ११ ॥ सस्वंलोकंप्रतिप्रजानाति ॥ एषउंवेवैनंतत्सावित्रः ॥ स्वर्गंलोकमभिवह
ति ॥ अहोरात्रैर्वाइदꣳसयुग्भिःक्रियते ॥ इतिरात्रायांदीक्षिषत ॥ इतिरात्रायंव्रतमुपागुरिति ॥ ता
निहानेवंविदुषः ॥ अमुष्मिंल्लोकेशेवधिंधयंति ॥ धीतꣳहैवसशेवधिमनुपरैति ॥ अथयोहैवैतमग्निꣳसा

वित्रंवेद ॥ २ ॥ तस्यंहैवाहोरात्राणि ॥ अमुष्मिंल्लोकेशेवधिंनयंति ॥ अधीतꣳहैवसशेवधिमतुपैरं
ति ॥ भरद्वाजोहत्रिभिरायुर्भिर्ब्रह्मचर्यमुवास ॥ तꣳहजीर्णिꣳस्थविरꣳशयानं ॥ इंद्रउपव्रज्योवाच ॥
भरद्वाज ॥ यत्तेचतुर्थमायुर्दद्यां ॥ किमेनेनकुर्याइति ॥ ब्रह्मचर्यमेवैनेनचरेयमितिहोवाच ॥ ३ ॥
तꣳहत्रीन्गिरिरूपानविज्ञातानिवदर्शयांचकार ॥ तेषाꣳहैकैकस्मान्मुष्टिनाददे ॥ सहोवाच ॥ भरद्वाजे
त्यामंत्र्य ॥ वेदावाएते ॥ अनंतावैवेदाः ॥ एतद्वाएतैस्त्रिभिरायुर्भिरन्ववोचथाः ॥ अथतइतरदननूक
मेव ॥ एहीमंविद्धि ॥ अयंवैसर्वविद्येति ॥ ४ ॥ तस्मैहैतमग्निꣳसावित्रमुवाच ॥ तꣳसविदित्वा ॥
अमृतोभूत्वा ॥ स्वर्गलोकमियाय ॥ आदित्यस्यसायुज्यं ॥ अमृतोहैवभूत्वा ॥ स्वर्गलोकमेति ॥
आदित्यस्यसायुज्यं ॥ यएवंवेद ॥ एषोएवत्रयीविद्या ॥ ५ ॥ यावंतꣳहवैत्रय्याविद्ययालोकंजयति ॥
तावंतंल्लोकंजयति ॥ यएवंवेद ॥ अग्नेर्वाएतानिनामधेयानि ॥ अग्नेरेवसायुज्यꣳसलोकतामाप्नोति ॥ यए
वंवेद ॥ वायोर्वाएतानिनामधेयानि ॥ वायोरेवसायुज्यꣳसलोकतामाप्नोति ॥ यएवंवेद ॥ इंद्रस्यवा
एतानिनामधेयानि ॥ ६ ॥ इंद्रस्यैवसायुज्यꣳसलोकतामाप्नोति ॥ यएवंवेद ॥ बृहस्पतेर्वाएतानि
नामधेयानि ॥ बृहस्पतेरेवसायुज्यꣳसलोकतामाप्नोति ॥ यएवंवेद ॥ प्रजापतेर्वाएतानिनामधेयानि ॥

प्रजापतेरेव सायुज्यꣳ सलोकतामाप्नोति ॥ यएवंवेद ॥ ब्रह्मणोवाएतानिनामधेयानि ॥ ब्रह्मणएवसा
युज्यꣳ सलोकतामाप्नोति ॥ यएवंवेद ॥ सवाएषोऽग्निरपक्षपुच्छोवायुरेव ॥ तस्याग्निर्मुखं ॥ असावादि
त्यःशिरः ॥ सयदेतेदेवतेअंतरेण ॥ तत्सर्वꣳ सीव्यति ॥ तस्मात्सावित्रः ॥ ७ ॥ अयमह्नमस्मीतिवेदं
होवाचसर्वविद्येतिविद्धैंद्रस्यवाएतानिनामधेयानिब्रह्मणएवसायुज्यꣳ सलोकतामाप्नोतिसप्तच ॥ १३ ॥
संज्ञानंभूस्त्वमेवसंवत्सरोऽसिभूराज्ञसंवेविपश्चितंप्रजापतेर्देवानियंवावसरघाकश्चिंद्धवाएकादश ॥ ११ ॥
संज्ञानꣳ राज्ञीमूर्द्धाहृदंयएषसंवत्सरोनार्द्धमासेषुनमासेषुनवंचत्वारिꣳ शत् ॥ ४१ ॥ ॥ हरिःॐ ॥
लोकोऽसिस्वर्गोऽसि ॥ अनंतोऽस्यपारोऽसि ॥ अक्षितोऽस्यक्षय्योऽसि ॥ तपसःप्रतिष्ठा ॥ त्वयीदमंतः ॥
विश्वंयक्षंविश्वंभूतंविश्वꣳ सुभूतं ॥ विश्वस्यभर्त्ताविश्वस्यजनयिता ॥ तंत्वोपदधकामदुघेमक्षितं ॥
प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ १ ॥ तपोऽसिलोकेश्रितं ॥ तेजसःप्रतिष्ठा ॥
त्वयीदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वꣳ सुभूतं ॥ विश्वस्यभर्तृविश्वस्यजनयितृ ॥ तत्वोपदधेका
मदुघमाक्षितं ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ २ ॥ तेजोऽसितपसिश्रितं ॥
समुद्रस्यप्रतिष्ठा ॥ त्वयीदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वꣳ सुभूतं ॥ विश्वस्यभर्तृविश्वस्यजनयितृ ॥

तत्त्वोपदधेकामदुघमक्षितं ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ ३ ॥ समुद्रोसि तेजसिश्रितः ॥ अपांप्रतिष्ठा ॥ त्वयीदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वंसुभूतं ॥ विश्वस्यभर्ताविश्वस्यजनयिता ॥ तंत्वोपदधेकामदुघमक्षितं ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ ॥४॥ आपस्थसमुद्रेश्रिताः ॥ पृथिव्याःप्रतिष्ठायुष्मासु ॥ इदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वंसुभूतम् ॥ विश्वस्यभर्त्रीविश्वस्यजनयित्र्यः ॥ तावुउपदधेकामदुघाअक्षिताः ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरसद्ध्रुवासीद ॥ ५ ॥ पृथिव्यस्यप्सुश्रिता ॥ अग्नेःप्रतिष्ठा ॥ त्वयीदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वंसुभूतं ॥ विश्वस्यभर्त्रीविश्वस्यजनयित्री ॥ तांत्वोपदधेकामदुघामक्षितां ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ ६ अग्निरसिपृथिव्याःश्रितः ॥ अंतरिक्षस्यप्रतिष्ठा ॥ त्वयीदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वंसुभूतं ॥ विश्वस्यभर्ताविश्वस्यजनयिता ॥ तंत्वोपदधेकामदुघमक्षितं ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ ७ ॥ अंतरिक्षमस्यग्नौश्रितं ॥ वायोःप्रतिष्ठा ॥ त्वयीदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वंसुभूतं ॥ विश्वस्यभर्तृ

विश्वंस्यजनयितृ ॥ तत्त्वोपंदधेकामदुघमक्षितं ॥ प्रजापंतिस्त्वासादयतु ॥ तयादेवतंयांगिरस्वद्ध्रुवा सींद ॥ ८ ॥ वायुरस्यंतरिक्षेश्रितः ॥ दिवःप्रतिष्ठा ॥ त्वयीदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वंसुभूतं ॥ विश्वंस्यभर्त्ताविश्वंस्यजनयिता ॥ तंत्वोपंदधेकामदुघमक्षितं ॥ प्रजापंतिस्त्वासादयतु ॥ तयादे वतंयांगिरस्वद्ध्रुवासींद ॥ ९ ॥ द्यौरंसिवायौश्रिता ॥ आदित्यस्यंप्रतिष्ठा ॥ त्वयीदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वंसुभूतं ॥ विश्वंस्यभर्त्रीविश्वंस्यजनयित्री ॥ तांत्वोपंदधेकामदुघामक्षितां ॥ प्रजापंतिस्त्वासादयतु ॥ तयादेवतंयांगिरस्वद्ध्रुवासींद ॥ १० ॥ आदित्योसिदिविश्रितः ॥ चंद्रमं सःप्रतिष्ठा ॥ त्वयीदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वंसुभूतं ॥ विश्वंस्यभर्त्ताविश्वंस्यजनयिता ॥ तं त्वोपंदधेकामदुघमक्षितं ॥ प्रजापंतिस्त्वासादयतु ॥ तयादेवतंयांगिरस्वद्ध्रुवासींद ॥ ११ ॥ चंद्र मांअस्यादित्येश्रितः ॥ नक्षत्राणांप्रतिष्ठा ॥ त्वयीदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वंसुभूतं ॥ वि श्वं स्यभर्त्ताविश्वंस्यजनयिता ॥ तंत्वोपंदधेकामदुघमक्षितं ॥ प्रजापंतिस्त्वासादयतु ॥ तयादेवतंयांगिर स्वद्ध्रुवासींद ॥ १२ ॥ नक्षत्राणिस्थचंद्रमंसिश्रितानि ॥ संवत्सरस्यंप्रतिष्ठायुष्मासु ॥ इदमंतः ॥ वि

श्वंयक्षंविश्वंभूतंविश्वꣳसुभूतं ॥ विश्वस्यभर्तृणिविश्वस्यजनयितृणि ॥ तानित्वउपदधेकामदुघान्यक्षितानि ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥१३॥ संवत्सरोऽसिनक्षत्रेषुश्रितः ॥ ऋतूनांप्रतिष्ठा ॥ त्वयीदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वꣳसुभूतं ॥ विश्वस्यभर्ताविश्वस्यजनयिता ॥ तंत्वोपदधेकामदुघमक्षितं ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ १४ ॥ ऋतवस्थसंवत्सरेश्रिताः॥मासानांप्रतिष्ठायुष्मासु ॥ इदमंतः ॥ विश्वंयक्षं विश्वंभूतंविश्वꣳसुभूतं ॥ विश्वस्यभर्तारोविश्वस्यजनयितारः ॥ तान्वउपदधेकामदुघानक्षितान् ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥१५॥ मासास्थर्तुषुश्रिताः ॥ अर्धमासानांप्रतिष्ठायुष्मासु ॥ इदमंतः ॥ विश्वंयक्षं विश्वंभूतंविश्वꣳसुभूतं ॥ विश्वस्यभर्तारोविश्वस्यजनयितारः ॥ तान्वउपदधेकामदुघानक्षितान् ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ १६ ॥ अर्धमासास्थमासुश्रिताः ॥ अहोरात्रयोःप्रतिष्ठायुष्मासु ॥ इदमंतः ॥ विश्वंयक्षंविश्वंभूतंविश्वꣳसुभूतं ॥ विश्वस्यभर्तारोविश्वस्यजनयितारः ॥ तान्वउपदधेकामदुघानक्षितान् ॥ प्रजापतिस्त्वासादयतु ॥ तयादेवतयांगिरस्वद्ध्रुवासीद ॥ १७ ॥

